# संस्कृत-
# व्याकरणशास्त्रेतिहासविमर्शः

लेखकः

**डॉ० अशोकचन्द्र गौड़ शास्त्री**

व्याकरणाचार्यः डिप्लोमा ( रूसीय भाषा-अनुप्रयुक्तभाषाविज्ञान-
दूरस्थशिक्षासु ) विद्यावारिधिः ( पी-एच्० डी० )

प्राध्यापकः

व्याकरणविभागः

श्रीराजीवगान्धी केन्द्रीयसंस्कृतविद्यापीठम्

शृङ्गेरी ( चिकमगलूरमण्डलम् ) ५७७१३९

कर्नाटकराज्यम्

प्रकाशकः

**भारतीय विद्या संस्थानम्**

वाराणसी

# SANSKRTI-VYAKARANASASTRETIHASAVIMARSHA

[ A Critical Study of the History of Sanskrit Grammer ]

*BY :*

**DR. ASHOKA CHANDRA GAUR SHASTRI**
Vyakaranacharya, Dip. in Russian language, Applied Hindi Linguistics & Distance Education, Vidyavaridhi ( Ph. D. ) Lecturer in Vyakarana
Deptt. of Vyakarana
Sri Rajiva Gandhi Kendriya Sanskrit Vidyapeetham
SRINGERI-577139 ( Distt. Chickamagalur )
Karnataka State

*PUBLISHER :*

**BHARATIYA VIDYA SANSTHAN**
Varanasi
1997

*Publisher :*

**Bharatiya Vidya Sansthan**
**Publisher & Bookseller**
C 27/59, Jagatganj
Varanasi–221002 ( U. P. )
( INDIA )

First Edition 1997

Price—Student Edition Rs.–80.00
Library Edition Rs.–150.00

*Also Can be had–*

**Oriental Book Center**
Shop N. 18, IInd Floor
Ch. Kashi Ram Market
New Chandrawal, Delhi—110007

*Printer :*

**Dharmaraj Printing Press**
S. 26/93 Meerapur Basahin,
Shivapur, Varanasi

## * समर्पणम् *

वाराणसीस्थ सम्पूर्णानन्द-संस्कृत विश्वविद्यालयस्य भूतपूर्वकुलपति-
पदभाजां श्रीमताम् निरवद्यविद्याविद्योतमानमानसानाम्
निरन्तरसुरभारतीसेवाव्रतविहितजनक्लेशहरणसमुद्यतानां
सारस्वतोपासकानां विविधसुकृतसमुद्भूतसुयशो-
राशिप्रकाशितदिङ्मुखानां गीर्वाणवाणीगौरवस-
मुन्नयनबद्धपरिकराणाम् भारतीयसभ्यता-
संस्कृतिवेदज्ञानविज्ञानाऽऽयुर्वेदनानाविध-
विद्याकलाकौशलसमुन्नयनोत्सुकानां
सत्यन्यायप्रतिष्ठा गृहीतावताराणां
भारतीयसर्वकारशिक्षामन्त्रा-
लयभूतपूर्वोपशिक्षापरा-
मर्शदातृ (डिप्टी एड-
वाइजर टू दी
मिनिस्ट्री ऑफ
एजूकेशन) पद-
भाजाम्

राष्ट्रीयसंस्कृतसंस्थाननिदेशकचराणाम्

माननीय
**डा० रामकरणशर्म महाभागानाम्**
करकमलयोर्ग्रन्थममुंसादरं
समर्पयति ।

**डॉ० अशोकचन्द्रगौडशास्त्री**

चत्वारि शृङ्गा त्रयो अस्य पादा
द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति
महो देवो मर्त्यां आ विवेश ॥

●

सक्तुमिव तितउना पुनन्तो
यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते
भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥

●

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥

●

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥

●

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः ।
छन्दोभ्य एव प्रथममेतद् विश्वं व्यबर्तत ॥

●

इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥

●

# प्राक्कथनम्

नूनमायुष्मानशोकचन्द्रगौडोऽर्हति वर्धयितुं मनीषिणां ग्रन्थरत्नस्यास्य प्रकाशनाय ।

त्रयोविंशत्या अध्यायैर्विभूषितोऽयं संस्कृतव्याकरणशास्त्रेतिहासविमर्शनामा ग्रन्थः पूरयति कश्चिद्भावं चिरानुवर्त्तिनम् । भाषान्तरनिबद्धा अनेके सन्ति ग्रन्थाः सुलभाः संस्कृतव्याकरणेतिहासविमर्शकाः । किन्तु संस्कृतभाषानिबद्ध इदृशः संस्कृतव्याकरणेतिहासविषयको ग्रन्थः सुदुर्लभ एवेति ग्रन्थस्यास्य प्रकाशनेन समुल्लसति मानसं सुरभारती प्रणयिनाम् ।

अत्र ग्रन्थे वर्णिताः पाणिनेः पूर्वकालिकाः परकालिकाश्च व्याकरणशास्त्र-प्रवर्त्तका आचार्याः । पाणिनीयास्त्वत्रापि विजृम्भन्त एव व्याकरणपरम्परामध्य-मणय इत्यन्यदेतत् ।

ग्रन्थोऽयं भजति परमामुपयोगितां संस्कृतशोधप्रज्ञानां विदुषां कृते व्याकरण-शास्त्रपरम्परामनुपमां भारतीयां जिज्ञासुनां विद्यार्थिनां च कृते समानमानमिति पुनर्वर्धापयामि डा० श्री अशोकचन्द्रगौडम् । इति विदुषां वशंवदः ।

डॉ० रामकरण शर्मा

पूर्वकुलपतिः

सम्पूर्णानन्द संस्कृतविश्वविद्यालयस्य, वाराणसी

# विदुषां शुभाशंसा:

शृंगेरीस्थ श्री राजीवगांधीकेन्द्रीयसंस्कृतविद्यापीठीयव्याकरणप्राध्यापकेन डॉ० अशोकचन्द्रगौडशास्त्रिणा प्रणीतः संस्कृतभाषानिबन्धः "संस्कृतव्याकरणशास्त्रेतिहासविमर्श" नामा ग्रन्थो मया विहंगमदृष्टया व्यलोकि। डा० गौडमहोदयेन त्रयोविंशतिमितेष्वध्यायेषु निबद्धे ग्रन्थेऽस्मिन् वैदुष्यपूर्णशास्त्रीयभाषया संस्कृतव्याकरणशास्त्रेतिहासस्य प्रामाणिकं चित्रं समुपस्थापितम्, येन ब्रह्मण आरभ्याऽद्यावधि संस्कृतव्याकरणशास्त्रस्य परम्परा हस्तामलकवत् प्रत्यक्षीभवति। अत्र संस्कृतभाषायाः वैदिकं लौकिकं च स्वरूपं वर्णयता डा० गौडमहोदयेन संस्कृतभाषायाः लोकभाषात्वमपि सम्यक् संसोधितम्। प्रथमवारं संस्कृतभाषायामतिविस्तरेण ब्रह्मणोऽद्यावधि संस्कृतव्याकरणशास्त्रपरम्परा, पाणिनिः प्राक्तनानाम्, अर्वाचीनानाञ्च वैयाकरणानाम्, धातुपाठगणपाठोणादिपाठादीनां तत्प्रणेतृणाञ्च प्रामाणिकः परिचयइत्यादिविषयप्रतिपादनवैशिष्टचविभूषितः, साधकबाधकयुक्तिभिर्विस्फोरितरहस्यः, वाराणसीस्थभारतीयविद्यासंस्थानेन प्रकाशितः श्रीगौडस्य ग्रन्थोऽयं संस्कृतव्याकरणशास्त्रेतिहासविषयमनुसन्धित्सूनां, प्रौढच्छात्राणां, विदुषाम्, अध्यापकानाञ्च समुद्रतारिका सहजसुगमा नौरिव महते उपकाराय प्रकल्पयिष्यतीति मे द्रढीयान् विश्वासः।

भविष्यति कालेऽपि डॉ० अशोकचन्द्रगौडमहोदय एवमेव सुरभारतीग्रन्थप्रणयनेनात्मनः राष्ट्रस्य संस्कृतसमाजस्य च गौरवमभिवर्धयेदिति शुभाशीर्थिरेनं वर्धापयाम्यहम्।

डॉ० रामप्रसाद त्रिपाठी

## ‘शुभाशंसनम्’

शृंगेरीस्थेनश्रीराजीवगान्धीकेन्द्रीयसंस्कृतविद्यापीठप्राध्यापकेन डॉ० अशोकचन्द्रगौडशास्त्रिणा प्रणीतः संस्कृतव्याकरणशास्त्रेतिहासविमर्शो मया व्यलोकि। त्रयोविंशतिमितेष्वध्यायेषु निबद्धोऽयं ग्रन्थः संस्कृतव्याकरणशास्त्रेतिहासस्य रोचकं प्रामाणिकञ्च चित्रं प्राञ्जलया भाषया प्रस्तौति। संस्कृतभाषाया वैदिक लौकिकञ्च स्वरूपम्, ब्रह्मण आरभ्याऽद्यावधि प्रवर्तमाना संस्कृतव्याकरणशास्त्रपरम्परा, पाणिनेः प्राक्तनार्वाचीनाचार्याणां परिचयः, धातुपाठोणादिगणपाठादीनां सप्रमाणं परिचयश्च ग्रन्थकर्त्रा साधु निबद्ध इति प्रसन्नतास्थानम्। डॉ० अशोकचन्द्रगौडस्येदं कार्यं प्रशस्यं वर्धापनयोग्यञ्चेति प्रत्येमि।

आशासे यदयं ग्रन्थो व्याकरणशास्त्रस्यैतिह्यं बोधयितुं विदुषां निवहे प्रभविष्यतीति।

**प्रो० वाचस्पति उपाध्यायः**

# निवेदनम्

"ब्राह्मणेन निष्कारणो धर्मः षणङ्गो वेदोऽध्येयो ज्ञेयश्च" इति श्रुत्यनुसारं द्विजैर्वेदाध्ययनं कर्तव्यमेवेति निश्चप्रचम्। तत्र "रक्षार्थं वेदानामध्येयं व्याकरणम्" इति महाभाष्योक्तेः "मुखम् व्याकरणं स्मृतम्" इति पाणिनीयशिक्षोक्तेश्च वेदरक्षार्थं, षडङ्गेषु प्रधानत्वाच्च व्याकरणशास्त्रस्य महत्त्वमस्त्येव।

अध्ययनवत् शास्त्राणामपि परम्परा भवति। तथा च—"ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्य" इत्यादि ऋक्तन्त्रवचनानुसारेण ब्रह्मा एव व्याकरणशास्त्रस्य प्रथमः प्रवक्ता सिद्ध्यति। अग्रे व्याकरणशास्त्रस्य सम्प्रदायद्वयं जायते—माहेश्वरसम्प्रदाय ऐन्द्रसम्प्रदायश्च। साम्प्रतं संस्कृतव्याकरणशास्त्रकथनेन माहेश्वरसम्प्रदायान्तर्गतं पाणिनीयं व्याकरणशास्त्रमवबुध्यते।

संस्कृतव्याकरणशास्त्रस्य परम्पराणामितिहासस्य विषये संस्कृतभाषायां सन्दर्भग्रन्थस्य सर्वथाऽभावो बहुकालान्मम मन आन्दोलयति स्म। तत्र स्वीयाध्ययनकाले अनुभूतेन काठिन्येन, पितृचरणैः श्रीपं० विजयमित्रशास्त्रिमहोदयैः, गुरुचरणैः डॉ० रामप्रसादत्रिपाठिमहाभागैश्चानवरतं प्रेरितोऽहममुं "संस्कृतव्याकरणशास्त्रेतिहासविमर्श" नामानं ग्रन्थमरचयम्।

## ग्रन्थस्य वैशिष्ट्यम्

यद्यपि हिन्दीभाषायां श्रीपं० युधिष्ठिरमीमांसकमहोदयैः प्रणीतः "संस्कृत व्याकरण शास्त्र का इतिहास" इत्याख्यः सन्दर्भग्रन्थो विलसति हिन्दीभाषायाम्; अन्ये च पं० बलदेवोपाध्यायवाचस्पतिगैरोलाप्रभृतिभिर्विद्वद्भिः प्रणीताः "संस्कृत साहित्य का इतिहास" विषयका ग्रन्थाः व्याकरणशास्त्रेतिहासं वर्णयन्ति। संस्कृतभाषायामपि कुञ्जिकारूपेण द्वित्राः संस्कृतग्रन्था अपि दृश्यन्ते, किन्तु संस्कृतभाषायां संस्कृतव्याकरणशास्त्रेतिहासविषये तथ्यातथ्यनिर्णायकः कोऽपि

सन्दर्भग्रन्थो नासीदिति कृत्वा ग्रन्थोऽयं भवतां समक्षं प्रस्तूयते। ग्रन्थस्तु बहु-कालात् पूर्वमेव पूरित आसीत्, किन्तु प्रकाशकमहोदयस्य व्यस्ततावशाद् ग्रन्थ-स्याऽस्य प्रकाशने विलम्बः सञ्जातः।

अत्र ग्रन्थे त्रयोविंशतिमिता अध्यायाः सन्ति। तत्र प्रथमेऽध्याये संस्कृत-भाषाया वैदिकलौकिकरूपस्य कालस्वरूपनिर्धारणपुरस्सरं तस्याः भाषाया विकासक्रमः, प्राक्तनं लोकव्यवहारभाषात्वं च साधितम्। द्वितीयेऽध्याये ब्रह्मण आरभ्य व्याकरणशास्त्राणां विकासक्रमं समुपवर्ण्य पाणिनीयव्याकरणस्य पातञ्जल-महाभाष्यस्य च वैशिष्ट्यवर्णनपुरस्सरं पाणिनेराचार्यस्य पतञ्जलेराचार्यस्य च प्रामाणिकः परिचयः साधकबाधकयुक्तिपूर्वकमुपस्थापितः।

वैयाकरणाचार्येषु वर्गद्वयं भवति-अष्टाध्याय्यां पाणिनिना अनुल्लिखिताः, पाणिनिना उल्लिखिताश्च आचार्याः। अतः तृतीयेऽध्याये पाणिनिना अनुल्लिखि-तानामाचार्याणां प्रामाणिकः परिचयो दत्तः।

पाणिनेः समकालीना आचार्या आसन्—निरुक्तकारो यास्कः, वार्तिककारः कात्यायनवररुचिः, संग्रहकारो व्याडिश्च। एतेषामाचार्याणां प्रामाणिकं परिचयं पञ्चमेऽध्याये प्रदाय, षष्ठेऽध्याये अष्टाध्याय्याः वृत्तिकाराणां परिचय उपस्थापितः।

अष्टाध्याय्याः प्रामुख्यम्भजमानो वार्तिककारस्तु कात्यायन एव, किन्त्वनेके वार्तिककारा इति भाष्यकारेण सूचितम्। अतः सप्तमेऽध्याये वार्तिकलक्षणम्, वार्तिककारकृते विविधशब्दानां प्रयोगः इति समुपवर्ण्य प्रमुखानां वार्तिककाराणां परिचयः प्रदत्तः। अष्टमेऽध्याये भाष्यलक्षणपुरस्सरं वार्तिकभाष्यकाराणां परिचयः प्रदत्तः। अष्टाध्याय्याः वृत्तिषु श्रीवामनजयादित्य प्रणीता काशिकावृत्तिः सुप्रसिद्धा। तस्याः व्याख्यातॄणां परिचयो नवमेऽध्याये प्रदत्तः। दशमेऽध्याये पतञ्जलिप्रणीतस्य व्याकरणमहाभाष्यस्य टीकाकाराणां यथाक्रमं परिचयं समुपवर्ण्य, एकादशेऽध्याये कैयटकृतस्य महाभाष्यप्रदीपस्य प्रामुख्यम्भजमानानां टीकाकाराणां परिचय उपस्थापितः।

संस्कृतव्याकरणस्य पाणिनीयपरम्परायां प्रक्रियाग्रन्थानां विशिष्टं महत्त्व-मस्ति। द्वादशेऽध्याये पाणिनीयव्याकरणस्य प्रक्रियाग्रन्थकाराणां परिचयो दत्तः। त्रयोदशेऽध्याये शब्दानुशासनखिलपाठवर्णनं विधाय, चतुर्दशेऽध्याये पाणिनेः

पूर्ववर्तिनामाचार्याणाम् पाणिनेराचार्यस्य च धातुपाठस्य परिचय उपस्थापितः। तथा च धातुपाठस्य व्याख्यातृणां सम्यक् परिचयो दत्तः। अत्रैव पाणिनेरुत्तरवर्तिनामाचार्याणां धातुपाठप्रवक्तृणां धातुपाठव्याख्यातृणाञ्चापि परिचय उपस्थापितः।

व्याकरणशास्त्रे गणपाठस्य विशिष्टं महत्त्वमस्ति। तत्र पञ्चदशेऽध्याये गणपाठस्वरूपं प्रदर्श्य पाणिनेः पूर्ववर्तिनां, उत्तरवर्तिनामाचार्याणाञ्च-गणपाठप्रवक्तृणां सम्यक् परिचयः प्रदत्तः। तत्रैव पाणिनीयगणपाठस्याऽपि सम्यक् परिचयः, तथा च गणपाठव्याख्यातृणामपि परिचय उपस्थापितः।

व्याकरणशास्त्रे उणादिपाठस्यापि महत्त्वमस्ति। पाणिनेः पूर्ववर्तिषु आचार्येषु आपिशलिः पञ्चपाद्युणादिपाठस्य प्रवक्ता। पाणिनिः दशपाद्युणादिपाठस्य प्रवक्ता; तथा च पाणिनेरुत्तरवर्तिनोऽप्यनेके उणादिपाठप्रवक्तारः। षोडशेऽध्याये सर्वेषामुणादिसूत्रप्रवक्तृणां सम्यक् परिचयमुपस्थाप्य उणादिसूत्रव्याख्यातृणां परिचयो दत्तः।

व्याकरणशास्त्रस्य महत्त्वपूर्णा अंशाः सन्ति--लिङ्गानुशासनम्, परिभाषापाठः, फिट् सूत्रपाठश्च। सप्तदशेऽध्याये लिङ्गानुशासनस्य प्रवक्तृणां व्याख्यातृणा च सम्यक् परिचयः प्रदत्तः। अष्टादशेऽध्याये परिभाषाणां स्वरूपम् भेदामूलम् इति समुपवर्ण्य परिभाषापाठस्य प्रवक्तृणां व्याख्यातृणां च सम्यक् परिचयः प्रदत्तः। एकोनविंशेऽध्याये फिट्सूत्रलक्षणम्, तत्प्रयोजनानि च विलिख्य फिट्सूत्राणां प्रवक्तृणां परिचयः, फिट्सूत्रप्रवचनकालः, फिट्सूत्रस्य व्याख्यातारश्चैते विषयाः स्पष्टीकृताः।

आचार्यं युधिष्ठिरमीमांसकमहोदयमतानुसारं प्रातिशाख्यानामपि व्याकरणशास्त्रेतिहासे विशिष्टं स्थानं वरीवर्ति। अतो विंशेऽध्याये प्रातिशाख्यस्वरूपम्, चरणशाखाभेदः, प्रातिशाख्यनामानि चेति विषयान् समुपवर्ण्य प्रातिशाख्यानां प्रवक्तृणां वृत्तिकाराणां च परिचय उपस्थापितः।

संस्कृतव्याकरणशास्त्रे दार्शनिकी परम्परा अपि दृश्यते। तत्राऽनेके वैयाकरणाः व्याकरणस्य दार्शनिकं पक्षमुपस्थापयन्ति। एकविंशेऽध्याये संस्कृतव्याकरणशास्त्रस्य दार्शनिकग्रन्थकाराणां प्रामाणिको विस्तृतश्च परिचय उपस्थापितः।

द्वाविंशेऽध्याये काव्यशास्त्रवैयाकरणानां पाणिनि-व्याडिवररुचि-पतञ्जलि-भर्तृभूम-भट्टिप्रभृतीनां सम्यक् परिचयो दत्तः। अत्रैव प्रारम्भे काव्यशास्त्रशब्दार्थः, लक्ष्यप्रधानकाव्यरचनायाः प्रयोजनञ्च व्याख्यातम्।

त्रयोविंशेऽध्याये अपाणिनीयानामर्वाचीन वैयाकरणानां सम्यक् परिचयो दत्तः। ग्रन्थान्ते च मङ्गलं विहितमस्ति।

ग्रन्थेऽस्मिन् यथास्थानं टिप्पण्योऽपि प्रदत्ताः। अतीव परिश्रमेण लिखितेऽपि ग्रन्थे त्रुटयः सम्भवन्ति। अतः पाठकाः कृपया संशोधयन्तु, यथावसरं स्वपरामर्शानपि प्रेषयन्तु। यतो हि—

"गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः॥"

## कृतज्ञताप्रकाशः

अतः परं सर्वप्रथमं परमपितापरमेश्वरः प्रणम्यते। ततो विशिष्टप्रेरणार्थं ग्रन्थस्याऽस्य विषये स्वीयनिर्देशनार्थञ्च स्वपितृचरणान् पण्डित श्रीविजयमिश्र-शास्त्रिमहोदयान्, स्वाचार्यचरणान् डॉ० रामप्रसादत्रिपाठिमहाभागांश्च प्रति सादरं कृतज्ञता प्रकाश्यते। ततः पितरौ मुनित्रयं च नमस्कृत्य तान् विदुषः प्रति सादरं कार्तज्ञ्यं ज्ञापयामि, यैः ग्रन्थस्याऽस्यविषये स्वीयाः सम्मतयः प्रदत्ताः। तथा च "संस्कृत व्याकरण शास्त्र का इतिहास" प्रभृति ग्रन्थलेखकान् श्री पं० युधिष्ठिरमीमांसकमहोदयान् प्रति सादरं कार्तज्ञ्यं प्रकाशयामि। प्राक्कथन-लेखनार्थं माननीय डॉ० रामकरणशर्ममहाभागांश्च प्रति सादरं कृतज्ञतां प्रकाशयामि।

ग्रन्थस्याऽस्य शुद्धमनोहरप्रकाशनार्थं प्रकाशकः "भारतीयविद्यासंस्थानम्", मुद्रकः "धर्मराज प्रिंटिंग प्रेस" चोभावपि धन्यवादार्हौ। तथा च विशिष्टसहयोग निर्देशनादिप्रदानार्थं डॉ० प्रज्ञादेवी-डॉ० वागीशशास्त्री-डॉ० आद्याप्रसादमिश्र-डॉ० कैलासपतित्रिपाठिमहाभागांश्च प्रति सादर कृतज्ञतां प्रकाश्य नानाविध-सहयोगप्रदानार्थं विशेषतः स्वभ्रातृभ्यः डॉ० कृष्णचन्द्रगौड़-क्षितीशचन्द्र-लोकेश-

चन्द्र प्रभृतिभ्यः सुनीता-सरिता-सुपर्णा इत्याख्याभ्यो भ्रातृवधूभ्यः प्रियंवदा-जयन्ती-वन्दना-माधुरी इत्याख्याभ्यो भगिनीभ्यो हार्दिकान् धन्यवादान् वितरामि । अन्ते च विविधसहयोगमानसिकबलप्रेरणादिप्रदानार्थं स्वधर्मपत्न्यै श्रीमतिवीणा ( बीना ) देव्यै हार्दिकान् धन्यवादान् वितर्यं विरमामि ।

शृङ्गेरी
चैत्रशुक्ला नवमी रविवासरः
श्रीरामनवमी सं० २०५२ वै०
९ अप्रैल सन् १९९५ ईशवीयः

विदुषां वशम्वदः
**डॉ० अशोक चन्द्र गौड़ शास्त्री**
प्राध्यापको व्याकरणविभागे
श्रीराजीवगान्धीकेन्द्रीयसंस्कृतविद्यापीठम्
शृङ्गेरी—५७७१३९
( कर्णाटकराज्यम् )

# विषयानुक्रमणिका:

| क्र० | विषया: | पृष्ठाङ्का: |
|---|---|---|

## चतुर्थोऽध्यायः

### ( अष्टाध्याय्युल्लिखितपाणिनिपूर्ववर्तिवैयाकरणवर्णनम् )



## पञ्चमोऽध्यायः

### ( पाणिनिसमकालीनवैयाकरणवर्णनम् )

## सप्तमोऽध्यायः

## ( अष्टाध्यायिवार्तिककारवर्णनम् )

| क्र० | विषयाः | पृष्ठाङ्काः |
| --- | --- | --- |
| ६. | घनेश्वरः | २३२ |
| ७. | शेषनारायणः | २३२ |
| ८. | विष्णुमित्रः | २३५ |
| ९. | नीलकण्ठवाजपेयी | २३५ |
| १०. | शेषविष्णुः | २३५ |
| ११. | तिरुमलयज्वा | २३६ |
| १२. | शिवरामेन्द्रसरस्वती | २३६ |
| १३. | अन्ये टीकाकाराः | २३७ |

## एकादशोऽध्यायः

### ( महाभाष्यप्रदीपस्य प्रमुखटीकाकारवर्णनम् )

| | | |
| --- | --- | --- |
| १. | नागेशभट्टः | २३८ |
| २. | अन्नम्भट्टः | २४१ |
| ३. | चिन्तामणिः | २४१ |
| ४. | मल्लययज्वा | २४२ |
| ५. | रामचन्द्रसरस्वती | २४३ |
| ६. | ईश्वरानन्दसरस्वती | २४३ |
| ७. | नारायणशास्त्री | २४४ |
| ८. | वैद्यनाथपायगुण्डे | २४४ |
| ९. | प्रवर्तकोपाध्यायः | २४५ |
| १०. | नागनाथः | २४५ |
| ११. | अन्ये व्याख्याकाराः | २४५ |

## द्वादशोऽध्यायः

### ( पाणिनीयव्याकरणस्य प्रक्रियाग्रन्थकारवर्णनम् )

| | | |
| --- | --- | --- |
| १. | प्रक्रियाग्रन्थानामितिहासः | २४६ |
| २. | धर्मकीर्तिः | २४८ |

त्रयोदशोऽध्यायः

( शब्दानुशासनखिलपाठवर्णनम् )



चतुर्दशोऽध्यायः

( धातुपाठप्रवक्तृव्याख्यातृवर्णनम् )

## पञ्चदशोऽध्यायः

### ( गणपाठप्रवक्तृव्याख्यातृवर्णनम् )

| क्र० | विषयाः | पृष्ठांकाः |
|---|---|---|



## एकोनविंशोऽध्यायः
### ( फिट्सूत्रप्रवक्तृव्याख्यातृवर्णनम् )



## विंशोऽध्यायः
### ( प्रातिशाख्यप्रवक्तृव्याख्यातृवर्णनम् )

## एकविंशोऽध्यायः

### ( व्याकरणशास्त्रस्य दार्शनिकग्रन्थकारवर्णनम् )

## द्वाविंशोऽध्यायः

### ( काव्यशास्त्रकारवैयाकरणवर्णनम् )

क्र० विषयाः पृष्ठांकाः

## त्रयोविंशोऽध्यायः
## ( अपाणिनीयार्वाचीनवैयाकरणवर्णनम् )

# परिशिष्टम्

(क) आधुनिकाः वैयाकरणाः

( १८०० ई० तः १९३७ यावत् )

# मङ्गलाचरणम्

यो लोके समुपास्यते शिववरश्शैवागमाध्यायिभि-
वेंदान्ते समधीतिभिर्बुधवरैर्ब्रह्मेति संस्तूयते।
यस्तर्कागमसांख्ययोगनिपुणैरीशः परः स्तूयते
शब्दब्रह्म स एव शाब्दिकमते देवो मया वन्द्यते ॥१॥

विश्वेशं प्रणिपत्य भक्तिविनतो वेदैकवेद्यं विभुम्
'लक्ष्मी' मातरमानमामि 'विजयं' तातं मुदा श्रद्धया।
वन्दे भारतपुण्यभूमिममलां 'रामप्रसादं' गुरुम्
श्रीकात्यायनपाणिनी फणिवर श्रीभाष्यकारं मुनिम् ॥२॥

ऐतिह्ये सरलं च संस्कृतमयं ग्रन्थं विना शाब्दिकै:
कष्टं यैरनुभूयते प्रतिपदं तथ्यावबोधाध्वनि।
तेषां शर्म विधातुमत्र कुरुते गूढार्थविस्फोरकं
नानाटिप्पणिभूषितं च सरलं गीर्वाणवाणीमयं।
ग्रन्थम्मञ्जुमशोकचन्द्रविनतः सारस्वतोपासकः ॥३॥

व्याकरणस्य शास्त्रस्य संस्कृतस्य च सर्वदा।
ममैतिह्यविमर्शेन लोकस्तृप्तिमवाप्नुयात् ॥४॥

एतेन ग्रन्थरत्नेन शब्दशास्त्राभिमर्शिना।
विद्वद्वृन्दनुतो देवः प्रीयतां परमेश्वरः ॥५॥

अथ प्रथमोऽध्यायः

# संस्कृतभाषावर्णनम्

## १. संस्कृतभाषायाः स्वरूपम्, विकासक्रमश्च

संस्कृतभाषा ''प्राचीन-भारतीय-आर्यभाषा'' इत्यप्युच्यते। भारतवर्षस्येयं प्राचीनतमा भाषाऽस्ति। इयं ''देववाणी'', ''देवभाषा'' वेति कथ्यते। वेदाविर्भावानन्तरमियं भाषा वैदिकभाषारूपेण प्रचलिता, पुनः ऋषिभिः सरलीकृता संस्कृता च ''संस्कृत''संज्ञामवाप। पूर्वमेव बहुभिः ऋषिभिराधुनिकैर्मनोषिभिश्च सप्रमाणं साधितं यद् वैदिकभाषैव विश्वभाषाणाञ्जननी आसीत्, वैदिकभाषात एव संस्कृतभाषायाः विकासो जातः। आधुनिका भाषावैज्ञानिका वैदिकभाषायाः कालं १५०० ईशवीयवर्षपूर्वतः ५०० ईशवीयवर्षपूर्वं यावत् स्वीकुर्वन्ति। तेषाम्मते पाणिनेः पूर्वकालं यावद् वैदिकभाषायाः समयः, पाणिनेराचार्यस्य कालश्चेशवीयसंवत्सरात् पञ्चशतवर्षपूर्वमिति; परन्तु नेदं समीचीनम्, प्रमाणाभावात्। अस्माकमार्याणां मते वैवस्वतमन्वन्तरमेव मनुष्योत्पत्तिकालः, वैवस्वतमन्वन्तरे मनुष्योत्पत्त्यनन्तरमेव परमेश्वरेण मूलमनुष्याणां हृदयेष्वादिज्ञानम्-वेदज्ञानं प्रकाशितम्, तस्य भाषा वैदिकसंस्कृतभाषा आसीत्। अर्थाद् वैदिकभाषायाः कालः १२,०५,३३,०८५ (पञ्चाशीत्युत्तरत्रयस्त्रिंशत्सहस्रपञ्चलक्षद्वादशकोटि) मितवर्षपूर्वदारभ्य रामायणकालात्पूर्वं यावत् स्वीकर्तव्यः। वाल्मीकीयरामायणरचनाकालात् लौकिकसंस्कृतभाषायाः काल आरभ्यते, वाल्मीकीयरामायणे संस्कृतभाषायाः कृते ''मानुषी'', ''संस्कृता'' इति शब्दप्रयोगदर्शनात्। तथाहि--

"अहं त्वतितनुश्चैव वानरश्च विशेषतः।
वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम्॥
यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्।
रावणम्मन्यमाना मां सीता भीता भविष्यति॥

वानरस्याऽविशेषेण कथं स्यादभिभाषणम्।
अवश्यमेव वक्तव्यं मानुषं वाक्यमर्थवत्[१] ॥"

अस्माकं गणनानुसारेण रामायणकालः[२] १२,६९,०८५ (पञ्चाशीत्युत्तरैकोनसप्ततिसहस्रद्वादशलक्ष) मितवर्षेभ्यः पूर्वं वर्तते। पाणिनेराचार्यस्य समयो वैक्रमाब्दात् २९०० वर्षेभ्यः पूर्वं वर्तते[३]। पाणिनिसमये संस्कृतभाषा लोकभाषा आसीत्, अष्टाध्याय्यां संस्कृतभाषायाः कृते "भाषा"[४] शब्दस्य, वैदिकभाषायाः कृते "छन्दस्"[५] शब्दस्य च प्रयोगदर्शनात्। अतः प्रतीयते यत् प्राचीनकाले पाणिनेः पतञ्जलेश्च कालं यावत् संस्कृतभाषा पृथिव्यां देवानां (विदुषां भौमदेवानाञ्च) मनुष्याणाञ्च लोकभाषा आसीत्।

पूर्वमेव मयोक्तं यत् संस्कृतभाषाया रूपद्वयं दृश्यते—वैदिक[६] लौकिकभेदात्। चत्वारो वेदाः, उपवेदाः, ब्राह्मणग्रन्थाः, ईशकेनादय एकादशोपनिषदो वैदिकसंस्कृतभाषायां वर्तन्ते। वाल्मीकीयरामायणम्, महाभारतम्, स्मृतयः, पुराणानि दर्शनानि च लौकिकसंस्कृतभाषायां सन्ति।[७] वाल्मीकीयरामायणावलोकनेन ज्ञायते

---

१. वाल्मीकीयरामायणम्—सुन्दरकाण्डम्—३०।१७-१९।

२. पं० रघुनन्दन शर्मा—वैदिक-सम्पत्ति, पृ० १०२, शूरजी वल्लभदास बम्बई, सं० २०१६।

३. पं० युधिष्ठिर मीमांसक—संस्कृतव्याकरणशास्त्र का इतिहास, भाग १।

४. भाषायां सदवसश्रुवः। (पाणिनि—अष्टाध्यायी—३।२।१०८)

५. छन्दसि लुङ्लङ्लिटः। (तदेव—३।४।६)

६. शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम्। केषां शब्दानाम्? वैदिकानां लौकिकानाञ्च।

(पतञ्जलि-व्याकरणमहाभाष्यम्—१।१।१)

...... ......वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम् ॥

(वाल्मीकीयरामायणम्, सुन्दरकाण्डम्, ३०।१७)

यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्। (तदेव—३०।१८)

यत् लौकिकसंस्कृतभाषा मनुष्याणां भाषा आसीत्; परन्तु द्विजानां (विदुषां) भाषा सामान्यमनुष्यभाषाऽपेक्षया क्लिष्टा सुसंस्कृता चाऽऽसीत्। "प्रत्यभिवादेऽशूद्रे[१]" इति सूत्ररचनाद्वारा पाणिनिना संस्कृतभाषाभाषिषु जनेष्वपि सभ्य-(द्विजाति) असभ्य(शूद्र)भाषयोर्भेदो व्याख्यातः।

प्रारम्भकाले आर्या वैदिकीं भाषामेव भाषन्ते स्म। शनैः शनैस्तत्र परिवर्तनं प्रारब्धम्। अनेकेषां नवीनानां ध्वनीनां, नवीनानां शब्दानाञ्च विकासो जातः। व्यवहारे नवीनाः परम्परा प्रचलिताः। तासामेव यत् परिष्कृतं रूपं तत्कालीनानां धार्मिकक्रियाकलापानां वाहनं संवृत्तम्, तदेवोपवेदेषु, ब्राह्मणग्रन्थेषु, आरण्यकग्रन्थेषु, उपनिषत्सु चोपनिबद्धभाषारूपेण प्रकटितम्।

शनैः शनैर्वैदिकभाषायाः प्रचुरशब्दकोशाल्लोके केषाञ्चित् शब्दानां प्रयोगो लुप्तः। पाणिनेराचार्यस्य कालं यावदेवमप्रयुक्तानां शब्दानां संख्या सहस्राधिक-संख्यामिता संवृत्ता। एतादृशाः शब्दाः पाणिनेराचार्यस्य काले केवलं वैदिकसाहित्ये उपलभ्यन्ते स्म, न ते लोके भाष्यन्ते स्म।

एतादृशाऽप्रयुक्तशब्दातिरिक्तम्, तात्कालिकेष्वार्यमण्डलेषु भाष्यमाणां भाषाञ्चा-ऽऽधारीकृत्य पाणिनिनाऽऽचार्येण संस्कृतभाषाया व्याकरणस्याऽऽधारभूतः "अष्टाध्यायी" नाम ग्रन्थो विरचितः। कात्यायनवररुचिना स्ववार्तिकप्रणयनद्वारा, पतञ्जलिनाऽऽचार्येण च स्वमहाभाष्यप्रणयनद्वारा पाणिनीयाऽष्टाध्याय्याः नैयून्यं पूरितम्। अतस्त्रिमुनिसंस्कृता—पाणिनिकात्यायनपतञ्जलिभिः संस्कृता, परिष्कृता, अनुशासिता च भाषा "संस्कृतभाषा" इत्युच्यते।

पाणिनिकालीनं तदुत्तरकालीनं चाऽशेषं साहित्यं लौकिकसंस्कृतभाषायाः साहित्यमस्ति; किन्त्ववधेयं यत् पाणिनेः पूर्वकालिकं साहित्यं वाल्मीकीयरामायणमहाभारतादिकञ्चाऽपि लौकिकसंस्कृतभाषाया एव साहित्यमस्ति; परन्तु चत्वारो वेदाः,, उपवेदाः, ब्राह्मणग्रन्थाः, आण्यकानि, उपनिषदश्च वैदिकभाषायां सन्ति। पाणिनिकालिकसंस्कृतभाषायामपि स्वराः (उदात्तादयः) विद्यमाना आसन्; किन्तु कालक्रमेण शनैः शनैस्तेषामपि प्रयोगो लुप्तः।

---

१. पाणिनि—अष्टाध्यायी–८।२।८३।

यदा भाषायाः निधेरनेकेषां शब्दानां प्रयोगो लुप्तस्तदा भाषायाः जीवन-स्वरूपतत्त्वेऽपि परिवर्तनं स्वाभाविकमेवाऽऽसीत्। अतो लौकिकसंस्कृतभाषाकाले वैदिकभाषायाः वरुण-इन्द्र-द्यौ-अर्यमन्प्रभृतीनामनेकेषां देवानां पूजनं विलुप्तम्। तथा च ये ब्रह्मादयो देवाः वैदिककालेऽन्यद्रूपेण पूज्यन्ते स्म, तेषां स्थाने ब्रह्म-विष्णु-महेशानां पूजा प्रारब्धा। वैदिककाले प्रकृतेर्भागे भागे देवत्वमासीत्; परन्तु लौकिकसंस्कृतकाले प्रकृतिर्निर्जीवा संवृत्ता; प्राचीना देवा विलुप्ताः, तेषाञ्च स्थानं नवीनैर्देवैर्गृहीतम्।

लौकिकसंस्कृतकाले न केवलं पूजापद्धतिः परिवर्तिता; अपि तु आराधना-गीतानि परिवर्तितानि, तत्र स्वराणामपि लोपो जातः। वैदिककाले प्रकृतेर्विविधानि दृश्यानि मानवीयमूर्तिरूपेण पूज्यन्ते स्म, तदा प्रचण्डो वायुः "मरुत्" नामाभिधो देव आसीत्, तदा कृष्णमेघान् विदार्य जलधारावर्षकः "इन्द्रो" देव आसीत्, एवं प्रकृतेरेकैको भागः सजीव आसीत्, स अस्मदादिवद् भाषते स्म; परन्तु लौकिक-संस्कृतभाषाया आर्षकाव्येषु वैदिका देवाः स्वस्थानात् च्युता भूत्वा लुप्यन्ते, तेषां च स्थानं नरनायको गृह्णाति। तदा देवयुगः समाप्तो भवति, नरयुगश्च प्रारब्धो भवति। अत इदं वक्तुं शक्यते यद् भाषया सह विषयोऽपि पार्थिवः सम्पद्यते।

वैदिकयुगस्य मानवो विश्वस्य प्रभवं व्यायन्नुत्पादनस्य निर्माणस्य वाऽऽराधक आसीत्, तस्य प्रकृतिरान्तरिकेणोल्लासेन परिपूर्णा आसीत्। फलतः सः स्वयम-प्यस्यैवोल्लासस्य साकारा मूर्तिरासीत्। तस्य जीवनस्यैकैकः श्वासः प्रकृतिपूजायां समर्पित आसीत्, फलतः सः स्वयमपि जागृतेर्जीवनस्य च प्रतीक आसीत्। सम्पूर्णेषु वेदेषु कुत्रचिदपि मृत्योः सङ्केतो न लभ्यते। वेदमन्त्राणामध्ययनेन प्रती-यते यद् जीवनमनन्तमस्ति, सोल्लासमस्ति, युवावस्थाऽचलाऽस्ति, वृद्धावस्था नास्ति; एवं बाल्य-यौवन-उन्नति-प्रगति-उल्लास-हर्षाणामेव वेदेषु सर्वत्र वर्णनमुपलभ्यते; परन्तु लौकिकसंस्कृतसाहित्यं विश्वप्रभवाद् दूरे गतम्, तद् हर्षोल्लासस्रोतसो दूरे गत्वा ह्रासोन्मुखं दृश्यते। फलतस्तत्र पदे-पदे मृत्योर्विभीषिकाऽस्ति, समाप्ते-र्विषादोऽस्ति, विषादस्य च गीतानि सन्ति।

कालः स्थिरो नास्ति कालेन सह भाषाभावक्रियाकलापादिकं निखिलमपि परिवर्तितं जायते। वैदिककालीनो मानवो देवकर्मयागादिषु प्रयतो भूत्वा समुचित-

मात्रायां सुरा-सोमरस-द्यूतादीनामुपयोगं करोति स्म। स्वतन्त्रताया अयं प्रसारो लौकिकसंस्कृतयुगे संकुचितो जातः। यत्रैकतो भाषाया अनेकानि शब्दरूपाणि विलुप्तानि, तत्रैवाऽन्यतो मानवस्य दृष्टिकोणोऽपि संकुचितो भूत्वा संसरणजन्यक्लेशजालस्य पंके निमग्नो भवति। विषयेष्वेतेषु ईषद् विस्तरेण विचारोऽपेक्षितोऽस्ति।

**स्वराः—**

चतुर्षु वेदेषु, तैत्तिरीयब्राह्मणे (तैत्तिरीयारण्यकयुते), शतपथब्राह्मणे (बृहदारण्यकोपनिषत्सहिते) उदात्तानुदात्तस्वरितानां स्वरचिह्नानां प्रयोगो विहितः। स्वरैरर्थनिर्धारणे साहाय्यमुपलभ्यते। उदाहरणार्थम्, "इन्द्रशत्रु"शब्दो ग्रहीतुं शक्यते। यद्यस्मिन् शब्दे समासस्य द्वितीयशब्द उदात्तो विधीयेत तर्हि तत्पुरुषत्वादयं शब्दः "इन्द्रस्य शत्रुः" अर्थात् "इन्द्रस्य शातयिता" इत्यर्थं प्रकाशयिष्यति; किन्तु यदि "इन्द्र"शब्दोऽनुदात्तो विधीयेत, तर्हि बहुव्रीहित्वादयं शब्दः "इन्द्रः शत्रुर्यस्य" अर्थाद् "इन्द्रः शातयिता यस्य" इत्यर्थं बोधयिष्यति। अस्यामवस्थायामर्थस्याऽनर्थो भवति, तथा सति यज्ञे इन्द्रशत्रोर्वृत्रस्य संहारो जायते। इयं स्थितिस्तु वेदक्षेत्रे वर्तते। लौकिकसंस्कृतभाषायां तु स्वराणां प्रयोगो लुप्त एव जातः, यद्यपि पाणिनिना स्वकीयेऽष्टाध्यायीग्रन्थे लौकिकसंस्कृतभाषायामपि स्वराणां विधानं प्रदर्शितम्।

**व्याकरणम्—**

ध्वनिशास्त्रदृष्ट्या वैदिकलौकिकभाषयोरैक्येऽपि व्याकरणदृष्ट्या तत्र महान् भेदो दृश्यते। सामान्यतया वैदिक-लौकिकसंस्कृतभाषयोर्व्याकरणस्याऽस्य विभेदस्याऽऽधारो न नवीनशब्दनिर्माणम्; अपि त्वनेकेषां शब्दानां शब्दरूपाणाञ्च प्रयोगावरोध एव। वैदिकभाषायामुपलब्धानि व्याकरणजन्यान्यनेकानि रूपाणि लौकिकभाषायां लुप्तानि जातानि, शब्दरूपेष्वनेकानि च लौकिकभाषायां न प्रयुज्यन्ते। उदाहरणार्थम्—

(१) अकारान्तशब्दानां प्रथमद्वितीययोर्विभक्त्योर्द्विवचने "आ" प्रत्ययान्तरूपाणि। यथा—नरा, द्वा सुपर्णा। लौकिकभाषायाम्—नरौ।

(२) अकारान्तशब्दानां प्रथमा-विभक्तेर्बहुवचने "आसः" प्रत्ययान्तरूपाणि। यथा-देवासः। लौकिकभाषायाम्-देवाः।

(३) अकारान्तशब्दानां तृतीयाविभक्तेर्बहुवचने "एभिः" प्रत्ययान्तरूपाणि। यथा–देवेभिः। लौकिकभाषायाम्–देवैः।

विशेषतो वृत्ति–(mood) दृष्ट्या वैदिक-लौकिकसंस्कृतभाषयोरतीव भेदोऽस्ति। वेदेषु वर्तमानकालद्योतकरूपैः सममेव लेट्-विधिलिङ्-लोट्लकाराणामपि प्रयोगो जातः। न बाहुल्येन; किन्त्वेते त्रय एव प्रायो लिट्लकारेण सम्बद्धा उपलभ्यन्ते। भविष्यत्कालस्य (लृट्लकारस्य) काचिदपि वृत्तिः (mood) नास्ति। लौकिकसंस्कृतभाषायां वर्तमानकालेन सह तद्द्योतकरूपातिरिक्तौ विधिलिङ्लोट्लकारौ तु भवतः; किन्तु तत्र लेट्लकारस्य सर्वथाऽभावो दृश्यते। वैदिककाले "तुम्" इत्यर्थे न्यूनतया द्वादशप्रत्ययानां प्रयोगो भवति[1]स्म; किन्तु, लौकिकसंस्कृतभाषायां केवलं "तुम्" इत्येवाऽवशिष्टम्। उभयोर्भाषयोरुपसर्गप्रयोगेऽपि भेदो वर्तते; किन्तु वैदिकसंस्कृतभाषायामुपसर्गाणां प्रयोगस्थानविषये किमपि बन्धनं नाऽऽसीत्, तत्रोपसर्गाणां धातोः पूर्वं, धातोः पश्चाच्च कुत्रचिदपि प्रयोगो भवितुमर्हति स्म; किन्तु लौकिकसंस्कृतभाषायामुपसर्गोऽनिवार्यरूपेण धातोः पूर्वमेव प्रयुज्यते, तदैव सः धातोरंशः सम्पद्यते। वैदिक-लौकिकसंस्कृतभाषयोः समासेष्वपि भेदोऽस्ति। वेदेषु, ब्राह्मणग्रन्थेषु च द्व्यधिकानां पदानां केचन एव समासाः प्राप्यन्ते; किन्तु लौकिकसंस्कृतभाषायां दीर्घसमासानां बाहुल्यमस्ति।

**शब्दकोषः—**

भाषायाः स्वरूपे संवृत्तान्युपर्युक्तानि परिवर्तनानि वैयाकरणक्षेत्रसम्बद्धानि, संस्कृतभाषाया विकासः प्रयत्नैरेतैरत्यधिकं प्रभावितः। शब्दकोशेऽपि नानाविधानि परिवर्तनानि जातानि। वैदिकभाषायामनुपलब्धा अनेके शब्दाः लौकिकसंस्कृतभाषायां संयोजिताः, अनेके च नवीनाः शब्दाश्चाऽप्यन्येभ्यः स्रोतोभ्यस्तत्र समाविष्टाः।

---

१. ओरियण्टल ऐण्ड लिंग्विस्टिक स्टडीज, प्रथम ग्रन्थमाला, पृ० ७८, न्यूयार्क, सन् १८७२ ई०।

**छन्दः —**

छन्दोदृष्टयाऽपि वैदिक-लौकिकसंस्कृतभाषायोः पर्याप्तमान्तर्यमस्ति । लौकिक-संस्कृतभाषायां वैदिकानां गायत्री-उष्णिक्-अनुष्टुप्-बृहती-पङ्क्ति-त्रिष्टुभ्-जगतीप्रभृतिभ्यः छन्दोभ्योऽतिरिक्तानां प्रस्तारकलाद्वारा शताऽधिकानामन्येषां छन्दसां प्रयोग उपलभ्यते ।

## २. संस्कृतभाषायाः लोकव्यवहारभाषात्वम्

केषाञ्चिदाधुनिकानां भाषावैज्ञानिकानामिदं मतमस्ति यत् संस्कृतभाषायां यद्यपि साहित्यमतिप्राचुर्येणोपलभ्यते, तथापि सा लोकव्यवहारभाषा कदापि नाऽऽसीत्; परन्तु नेदं समीचीनम्, संस्कृतसाहित्येष्वेवाऽनेके एतादृशाः संकेता उपलभ्यन्ते, येनेदं सम्यक्तया सिद्ध्यति यत् प्राचीनकाले भारतवर्षे महान् जनसमूहो लोकव्यवहार-क्षेत्रे संस्कृतभाषाया उपयोगं करोति स्म । वाल्मीकीयरामायणस्य सुन्दरकाण्डाव-लोकनेन ज्ञायते यत् तस्मिन् काले द्विजाः संस्कृतभाषां भाषन्ते स्म[१] । यास्काऽऽ-चार्येण[२], पाणिनिना[३], कात्यायनेन[४] च लौकिकसंस्कृतभाषा "भाषा" (भाष्-भाषणे धातोर्निष्पन्ना) पदेनाऽभिहिता, तथा च सा वैदिकभाषातो भिन्नरूपेण प्रस्तुता । पतञ्जलिनाऽपि[५] स्वकीये व्याकरणमहाभाष्ये लौकिकसंस्कृतभाषा-"भाषा" पदेनाऽभिहिता । पाणिनेराचार्यस्याऽनेकानि सूत्राणि यदि जीवितभाषारूपेण न

---

१. यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।। (वाल्मीकीयरामायणम्, सुन्दरकाण्डम्–३०।१८)

२. चत्वार उपमार्थे भवन्तीवेति भाषायाञ्चान्वध्यायम् ।। (यास्क-निरुक्तम्-१।२।१) इवेति नेति प्रतिषेधार्थीयो भाषायामुभयमन्वध्यायम् ।।
(तदेव, १।२।१। श्रीदुर्गाचार्यटीकायुतम्, मनसुखरायमोरसंस्करणम्, कलकत्ता)

३. भाषायां सदवसश्रुवः । (पाणिनि–अष्टाध्यायी–३।२।१०८)

४. भाषायां सदादिभ्यो वा लिड्वक्तव्यः । (कात्यायन-वार्तिकम्–३।२।१०८)

५. तस्य लिटो भाषायां वत्रसुरपरोक्षे नित्यमिति वक्तव्यम् । (पतञ्जलि-व्याकरण-महाभाष्यम्-३।२ आ० १।१०८)

पठ्येरन् तर्हि तेषां संगतिर्न भवितुमर्हति। यास्कपाणिनिकत्यायनप्रभृतिभिर्मुनिभिः प्राच्येष्वौदीच्येषु च प्रचलितानां वैशिष्ट्यानामुल्लेखो विहितः[१]। व्याकरणमहाभाष्ये "अजेर्व्यघञपोः[२]" इति सूत्रव्याख्याने पतञ्जलिना सूतशब्दस्य निरुक्तिविषये वैयाकरणसारथिविवादः प्रदर्शितः। स विवादः संस्कृतभाषायामेव समपद्यत। तथा हि—

"एवं[३] हि कश्चिद् वैयाकरण आह—कोऽस्य रथस्य प्रवेतेति। सूत आह—अहमायुष्मन्नस्य रथस्य प्राजितेति। वैयाकरण आह—अपशब्द इति। सूत आह—प्राप्तिज्ञो देवानां प्रियः, न त्विष्टिज्ञः। इष्यत एतद्रूपम्। वैयाकरण आह—अहो नु खल्वनेन दुरुतेन बाध्यामह इति। सूत आह—न खलु वेञः सूतः, सुवतेरेव सूतः। यदि सुवतेः कुत्सा प्रयोक्तव्या, दुःसूतेनेति वक्तव्यम्॥"

एतेन ज्ञायते यत् पतञ्जलिसमये संस्कृतभाषा जनसामान्ये प्रचलिता लोकभाषा आसीत्। व्याकरणमहाभाष्ये "पृषोदरादीनि[४]यथोपदिष्टम्" इति सूत्रव्याख्याने पतञ्जलिना "यथोपदिष्टम्" इति पदं व्याचक्षाणेन "शिष्टैरुपदिष्टम्" इत्यर्थः स्वीकृतः। तत्रेदमपि स्वीकृतं यत् शिष्टास्तावद् वैयाकरणाः विद्वांसोऽलोलुपाः, कुम्भीधान्याः ब्राह्मणा आसन्[५] इति। अनेन व्यज्यते यत् पतञ्जलि-

१. शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते।·········विकारमस्याऽऽर्येषु भाषन्ते शव इति। दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु,। (यास्क-निरुक्तम्–२।१।खं०४) उदीचां वृद्धादगोत्रात्। (पाणिनि-अष्टाध्यायी–४।१।१५७) प्राचामवृद्धात् फिन् बहुलम्। (तदेव–४।१।१६०)

२ तदेव, २।४।५६।

३. पतञ्जलि—व्याकरणमहाभाष्यम्–२।४।आ०१।सू०५६।

४. पाणिनि—अष्टाध्यायी–६।३।१०९।

५. कैः पुनरुपदिष्टानि? शिष्टैः। के पुनः शिष्टाः? वैयाकरणाः। कुत एतत्? शास्त्रपूर्वका हि शिष्टिः। वैयाकरणाश्च शास्त्रज्ञाः।··· आर्यावर्ते ये ब्राह्मणाः कुम्भीधान्याः अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद् विद्यायाः पारङ्गतास्तत्रभवन्तः शिष्टाः। (पतञ्जलि—व्याकरणमहाभाष्यम्, ६।३आ०३।सू० १०९)

समये लोकभाषात्वेन प्रचलितायां संस्कृतभाषायां भाषागतत्रुटिनिवारणार्थं तत्कालीनाः शिष्टा ब्राह्मणा एव प्रमाणत्वेन स्वीक्रियन्तेस्म ।

पञ्चतन्त्रग्रन्थावलोकनेन ज्ञायते यत् शासकवर्गस्य बालकानां शिक्षाया द्वारं न प्रादेशिकी भाषा; अपि तु संस्कृतभाषैव भवतिस्म । अश्वघोषेण बौद्धसिद्धान्तानां प्रतिपादनाय, प्रचाराय च न कस्याञ्चित् प्राकृतभाषायामपि तु, संस्कृतभाषायामेव स्वग्रन्थाः प्रणीताः । अतः स्पष्टं यद् अश्वघोषकाले संस्कृतभाषायाः प्रचलनं न केवलं केषुचित् शिक्षितलोकेष्वेव सीमितमासीत्; अपि तु सामान्यजनेष्वपि विस्तृतमासीत् । वात्स्यायनस्य "कामसूत्र"ग्रन्थे लिखितं यत् सहृदयलोकैः संस्कृतभाषा, प्रादेशिकी भाषा चोभे अपि भाषे प्रयोक्तव्ये । अनेनेदं सिद्ध्यति यद् वात्स्यायनस्य काले संस्कृतभाषा समाजस्य प्रत्येकस्य वर्गस्य लोकव्यवहारभाषा नाऽऽसीत् । ईसायाः द्वितीयशतकादग्रे सर्वेऽभिलेखाः बाहुल्येन संस्कृतभाषायामेवोल्लिखिता उपलभ्यन्ते । षष्ठेशवीयशतकादग्रे तु जैनाऽभिलेखानतिरिच्याऽवशिष्टाः सर्वेऽप्यभिलेखाः केवलं संस्कृतभाषायामेवोपलभ्यन्ते । अभिलेखाः सामान्यतया तस्यामेव भाषायां विलिख्यन्ते, या भाषा सर्वापेक्षयाऽधिकैर्लोकैर्भाष्यते । अत इदमपि तथ्यं संस्कृतभाषायाः लोकभाषात्वेन प्रचलनं सङ्केतयति । बौद्धाः जैनाश्चाऽपि मौखिकेषु सैद्धान्तिकेषु विवादेषु संस्कृतभाषां प्रयुञ्ज्यन्ते स्म, यद्यपि तैः प्राकृतभाषा पूर्णतया त्यक्ता नाऽऽसीत् ।

उपर्युक्तैः प्रमाणैरिदं सिद्ध्यति यत् प्राचीनकाले भारतवर्षे संस्कृतभाषा जीवितभाषारूपेण लोकेषु प्रचलिता आसीत् । वैदिकोत्तरकाले अर्थाद् अद्यप्रभृति पञ्चसहस्रवर्षेभ्यः पूर्वं संस्कृतभाषा समाजस्य नैकैकस्य वर्गस्य; परन्तु समाजस्याभिजात्यवर्गस्य तु भाषाऽवश्यमेवाऽऽसीत् । विशेषतः सा शिक्षितस्य शिष्टस्य च समाजस्य भाषाऽऽसीत् । ये संस्कृतभाषणेऽसमर्था आसन्, तेऽपि तां भाषामवश्यमेवावगच्छन्ति स्म । संस्कृतभाषाया रूपकसाहित्येनेदं स्पष्टं प्रमाणितं भवति । रूपकेषु नायक-ब्राह्मण-राजा-मन्त्रिप्रभृतयस्सर्वेऽप्याभिजात्यवर्गीयाः संस्कृतभाषां प्रयुञ्जते; किन्तु स्त्रियः सामान्याः पात्रवर्गाश्च प्राकृतभाषायां वदन्ति । नाटकेषु केवलं तापस्यः गणिकाश्च कदाचित् संस्कृतभाषायां वदन्त्य उपलभ्यन्ते । संस्कृत-

नाटकेष्वशिक्षिता ब्राह्मणा अपि लोकव्यावहारिकीणां प्राकृतभाषाणामुपयोगं कुर्वाणाः प्रदर्शिताः। इदमपि स्मरणीयं यत् संस्कृतनाटकेषु प्राकृतभाषिणां पात्रवर्गाणां वार्तालापः स्वाभाविके प्रवाहे प्रचलति, तथापि प्राकृतभाषाभाषिणः पात्रवर्गाः संस्कृतभाषाऽवगमे काठिन्यं नाऽनुभवन्ति। प्राचीनभारते संस्कृतभाषाया-मेव नाटकानि जनसाधारणस्य सम्मुखे लोकमञ्चेष्वभिनीयन्ते स्म। अत इदं तथ्यं प्रमाणितं भवति यत् प्राचीनकाले संस्कृतभाषणेऽसमर्थोऽपि जनः संस्कृतभाषामव-गन्तुं पारयति स्म, जनेषु च संस्कृतभाषायाः सम्मानमासीत्। प्राचीनसंस्कृत-वाङ्मये कथावाचकद्वारा रामायणस्य महाभारतस्य च राजप्रासादेषु च मन्दिरेषु श्रावण-स्योल्लेखो विहितः। रामायणस्य, महाभारतस्य च भाषा संस्कृतभाषाऽस्ति। अतो निश्चयेन तस्मिन् काले जना ग्रन्थानामेतादृशानां संस्कृतभाषामवगन्तुमर्हन्ति स्मेत्यनुमीयते। भारतवर्षे यवनानामागमनकालं यावत् प्रमुखलिखितभाषारूपेण संस्कृतभाषाया एवाऽस्तित्वमाऽऽसीत्। शिष्टेष्वभिजातवर्गेषु च संस्कृतभाषया सह पालिभाषा प्राकृतभाषाश्च भाष्यन्ते स्म। यतो हि "प्राकृत"नाम्नैवाऽभिव्यज्यते यदेतासां भाषाणां प्रयोगक्षेत्राणि नाऽभिजातवर्गाः; अपि तु प्राकृतजना एवाऽऽसन्।

अत इदं वक्तुं शक्यते यद् वेदेषु, उपवेदेषु, ब्राह्मणग्रन्थेषु चोपलभ्यमाना संस्कृतभाषा तेषामादिमानामार्याणां भाषा आसीत्, ये प्रकृतिपूजने यागादिषु च संलग्ना आसन्। कालान्तरं तेषु केचन "पुरोहित"नाम्नाऽभिहिता भवितुमारब्धाः। संक्षेपत इदं वक्तुं शक्यते यत् तस्मिन् काले जनसामान्यस्य विकासोन्मुखी भाषा प्राकृतभाषा आसात्, यस्याः प्रादेशिका भेदा आसन्। भगवता बुद्धेन प्राकृतभाषा-भेदस्वरूपपालिभाषाया माध्यमेन, जिनेन च प्राकृतभाषामाध्यमेन स्वधर्मोपदेशाः विहिताः। ५०० ईशवीयपूर्वतः ४०० ईशवीयपूर्वं यावत् संकलितानां बौद्धग्रन्थानां भाषा "मागधी" आसीत्। लङ्का-वर्मा-स्याम–( थाईलैण्ड )देशानां बौद्धग्रन्था अपि तस्यामेव लोकप्रचलितभाषायां वर्तन्ते, या "पालि"नाम्नाऽभिधीयते। पालिभाषाया उत्पत्तिस्थानविषये मतभेदोऽस्ति, तथाप्येतद् वक्तुं शक्यते यत् सम्भवत अस्योत्पत्तिर्मगधप्रदेशे जाता, यस्य राज्ञां प्रभावः सम्पूर्णेऽपि देशे आसीत्। कालान्तरमियं "पालिभाषा" सम्पूर्णेऽपि भारते वर्षे शासकीयभाषारूपेण विस्तृता; यद्यपि यस्मिन् यस्मिन् प्रदेशे सा विस्तृता तस्य तस्य प्रदेशस्य चिह्नानि तत्रा-

गतानि। मौर्यसंवत् १६० मितकालीनः खारवेलस्य ''हाथिगुफा'' नामाभिधेयोऽभिलेखः पालिभाषायामुपलभ्यते।

भरतमुनिना स्वनाट्यशास्त्रे प्राकृतं संस्कृतञ्चैकस्या एव भाषाया द्विशाखात्वेन स्वीकृतम्। यतो हि सामान्यध्वनिनियमानां प्रयोगे सत्येव प्राकृतभाषाशब्दाः संस्कृत भाषाशब्दरूपेण परिवर्तिता जायन्ते।

अस्याः प्राकृतभाषायास्तिस्रोऽवस्थाः पुरत आगच्छन्ति—(१) प्राचीना प्राकृतभाषा, तथा पालिभाषा, (२) मध्यकालीना प्राकृतभाषा, (३) अवरप्राकृतभाषा अपभ्रंशभाषा वेति। अत्रेदमेव वक्तुं शक्यते यत् प्राकृतभाषाणामुत्पत्तिर्वैदिक-लौकिकसंस्कृतभाषयोर्विकारेण जाता। एकतः प्राकृतभाषायां पालिभाषायाञ्च ''इध''--( इह–here ) प्रभृतीनां शब्दानां प्रयोगः प्रचुरमात्रायामुपलभ्यते; तथा च सममेव वृत्तिषु सम्भावनार्थकवृत्तेः ( **Subjunctive mood** ) ''गच्छात्'' प्रभृतिरूपेण प्रचलनं दृश्यते; परन्तु पाणिनीयव्याकरणानुशासितायां संस्कृतभाषायां केवल ''इह'' इत्येवावशिष्यते, लेट्लकारश्च सुतरामेव विलुप्तो भवति।

प्राकृतभाषायां त्रिविधाः शब्दा उपलभ्यन्ते—तत्सम-तद्भव-देशीभेदात्। ते शब्दाः ''तत्सम''शब्दाः, ये संस्कृतप्राकृतभाषयोश्शब्दार्थदृष्ट्याऽभिन्नाः। ते शब्दाः ''तद्भव''शब्दाः ये ध्वनिनियमव्यापारद्वारा संस्कृतशब्देभ्यो विकसिताः। यथा, अज्जउत्त < आर्यपुत्र, परिचुम्बिअ < परिचुम्ब्य इत्यादयः ते शब्दाः ''देशी''शब्दाः, येषां स्रोतो देशीयं वर्तते, येषामितिहासश्च विवादस्य विषयः। यथा—छोल्लन्ति, चेङ्ग इत्यादयः। प्राकृतभाषासु तद्भवशब्दानां बाहुल्यमस्ति।

मध्ययुगे प्रायः १००० ईशवीयं परितः प्राकृतभाषा चतुर्षूपभाषासु विभक्ता। पाश्चात्ये भारते ''सिन्धु-घाटी''क्षेत्रेऽपभ्रंशभाषा, ''दोआब''क्षेत्रे शौरसेनी-भाषा ( यस्याः केन्द्रं ''मथुरा'' नगरी वर्तते ) चेति भाषे उपलभ्येते स्म। शौरसेनीभाषाया उपशाखाः–गौर्जरी ( गुजराती ), आवन्ती ( पाश्चात्या राजस्थानीभाषा ), महाराष्ट्री ( पौरस्त्या राजपूतानीयभाषा ) प्रभृतयो भाषा आसन्। पौरस्त्यभारतस्य प्राकृतभाषा मगधप्रदेशस्य ( वर्तमानबिहारप्रान्तरूपेण प्रसिद्धस्य ) मागधी तथा अर्धमागधी ( यस्याः केन्द्रं वाराणसी वर्तते ) रूपेण

प्रसिद्धा विद्यते। संस्कृतसाहित्यदृष्ट्यै तेषां मध्यकालीनानां प्राकृतभाषाणामत्यन्तं महत्त्वमस्ति; यतो ह्येतासामेव भाषिकाणां (dialects) संस्कृतनाटकेष्वशिक्षित-लोका उपयोगं कुर्वन्ति स्म।

प्राकृतभाषैवाऽऽधुनिकभारतस्याऽऽर्यभाषाणां स्रोतोऽस्ति। अपभ्रंशभाषातः सिन्धी-पाश्चात्य-पञ्जाबी काश्मीरीयभाषाणाम्, शौरसेनीयभाषातः पौरस्त्यपञ्जाबी-हिन्दी—( प्राचीना-आवन्तीभाषा ) गुजरातीभाषाणाम्, मागधीभाषायाश्च रूपद्वयाद् मराठीभाषायाः बंगप्रदेशस्य विविधानामुपभाषाणामुत्पत्तिर्जाता। एताभिरुप-भाषाभिः स्वस्वसाहित्यानां विकासो विहितः; परन्तु साहित्यस्यास्याऽऽधार एकान्ततः संस्कृतसाहित्यमेवाऽऽसीत्। द्राविडवर्गीयाः कन्नड-तमिल-तेलुगु-मलयालम-प्रभृतयो भाषा आर्यभाषाभ्यः साक्षात्तु नोत्पन्नाः किन्तु तत्रापि संस्कृतभाषातो गृहीतः शब्दसमूहः प्राचुर्येण वर्तते, तथा च तेषां साहित्येषु संस्कृतभाषाया आद-र्शानां प्रभावः स्पष्ट एव प्रतीयते। वयमिदं वक्तुं शक्नुमो यद् द्राविडभाषाः संस्कृत-भाषातो निःसृतानामन्यासाम्भाषाणां स्रोतस उद्भूताः, च पुनः संस्कृतभाषया प्रभाविताः।

॥ इति संस्कृतव्याकरणशास्त्रेतिहासविमर्शे संस्कृतभाषावर्णनं नाम प्रथमोऽध्यायः ॥

अथ द्वितीयोऽध्यायः

# व्याकरणशास्त्रविकासवर्णनम्

## १. संस्कृतव्याकरणशास्त्राणां विकासक्रमः

इह संसारे प्रवृत्तानां सर्वासामपि विद्यानाम्मूलं परमेश्वरोपदिष्टो वेद एवेति न तिरोहितं विदुषाम्। भगवता मनुना अपि वेदानां सर्वज्ञानमयत्वमङ्गीकृतम्। तथा चोक्तम्मनुस्मृतौ—

यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः।
सः सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः[१]॥
शब्दः स्पर्शश्च रूपश्च रसो गन्धश्च पञ्चमः।
वेदादेव प्रसूयन्ते प्रसूतिगुणकर्मतः[२]॥

अतो व्याकरणशास्त्रस्याऽपि मूलं वेद एव। तथा च ऋग्वेदे समाम्नायते—

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश[३]॥
चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहात्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति[४]॥
उत त्वः पश्यन्न ददर्श वाचमुतत्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्ये उशती सुवासाः[५]॥
सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि[६]॥

---

१. मनुस्मृतिः—२।७;
२. तदेव—१२।९८।
३. ऋग्वेद-संहिता—४।५८।३;
४. तदेव—१।१६४।४५।
५. तदेव—१०।७१।४;
६. तदेव—१०।७१।२।

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः।
अनुक्षरन्ति काकुदम् सूर्म्यं सुषिरामिव[1] ॥

तथा च व्याकरणमहाभाष्ये एतान् मन्त्रान् व्याख्यायता पतञ्जलिना उक्तम्—[2]चत्वारि शृङ्गा० इति। चत्वारि शृङ्गाणि पदजातानि नामाख्यातोपसर्गनिपाताश्च। त्रयो अस्य पादाः, त्रयः कालाः भूतभविष्यद्वर्तमानाः। द्वे शीर्षे द्वौ शब्दात्मानौ नित्यः कार्यश्च। सप्त हस्तासो अस्य सप्त विभक्तयः। त्रिधा बद्धः त्रिषु स्थानेषु बद्ध उरसि कण्ठे शिरसीति। वृषभो वर्षणात्। रोरवीति शब्दं करोति। कुत एतत्, रौतिः शब्दकर्मा। महो देवो मर्त्यां मरणधर्माणो मनुष्यास्तानाविवेश। महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम्।

अपर आह—चत्वारि वाक् परिमिता पदानि०। चत्वारि वाक्परिमितानि पदानि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च। तानि विदुर्ब्राह्मणा ये मनीषिणः। मनस ईषिणो मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति। गुहायां त्रीणि निहितानि नेङ्गयन्ति न चेष्टन्ते न निमिषन्तीत्यर्थः। तुरीयं वा एतद्वाचो यन्मनुष्येषु वर्तते, चतुर्थमित्यर्थः।

उत त्वः पश्यन्०। उत त्वः अपि खल्वेकः पश्यन्नपि न पश्यति वाचम्। अपि खल्वेकः शृण्वन्नपि न शृणोत्येनाम्। अविद्वांसमाहार्धम्। उतो त्वस्मै तन्वं विसस्रे तनुं विवृणुते। जायेव पत्ये उशती सुवासाः। तद्यथा जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते एवं वाग् वाग्विदे स्वात्मानं विवृणुते। वाङ् नो विवृणुयादात्मानमित्यध्येयं व्याकरणम्।

सक्तुमिव तितउना०। सक्तुः सचतेर्दुर्धावो भवति, कसतेर्वा विपरीताद् विकसितो भवति। तितउः परिपवनं भवति। ततवद्वा तुन्नवद्वा। धीरा ध्यानवन्तः मनसा प्रज्ञानेन। वाचमक्रत वाचमकृषत। अत्र सखायः सन्तः सख्यानि जानते। क्व ? य एष दुर्गो मार्ग एकगम्यो वाग्विषयः। के पुनस्ते ? वैयाकरणाः। कुत एतत् ? भद्रैषां लक्ष्मीर्निहिता अधि वाचि। एषां वाचि भद्रा लक्ष्मीर्निहिता भवति। लक्ष्मीर्लक्षणाद् भासनात् परिवृढा भवति।

---

१. ऋग्वेदसंहिता-८।६९।१२।
२. पतञ्जलि—व्याकरणमहाभाष्यम्, १।१।१।

सुदेवो असि वरुण सत्यदेवोऽसि। यस्य ते सप्त सिन्धवः सप्त विभक्तयः। अनुक्षरन्ति काकुदम्। काकुदं तालु। काकुजिह्वा सास्मिन्नुद्यत इति काकुदम्। सूर्म्यं सुषिरामिव। तद्यथा शोभनामूर्मिं सुषिरामग्निरन्तः प्रविश्य दहति एवं ते सप्त सिन्धवः सप्त विभक्तयस्तात्वनुक्षरन्ति। तेनासि सत्यदेवः॥

वेदेषु अनेकेषामपदानां व्युत्पत्तयोऽपि समुपलभ्यन्ते। तद्यथा—

"[1]यज्ञेन यज्ञमयजन्त देवाः"।

यास्काचार्यस्य निरुक्ते[2] "यज्ञः कस्मात्? प्रख्यातं यजति कर्मेति नैरुक्ताः" इत्यनेन यज्ञशब्दस्य यज्धातोर्निष्पत्तिर्वर्णिता। व्याकरणशब्दः यस्माद्धातोर्निष्पद्यते तस्य मूलेऽर्थे प्रयोगो यजुर्वेदेऽवलोक्यते—

"[3]दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः।"

व्याकरणशास्त्रस्योत्पत्तिः कदा सञ्जातेति विषये निश्चितरूपेण किञ्चित् कथनन्तु दुष्करमेव; परन्तूपलब्धवैदिकपदपाठानां रचनाकालात् प्रागेव संस्कृत-व्याकरणशास्त्रस्य पूर्णत्वं सञ्जातमासीदिति तु प्रायेण निश्चप्रचमेव। तस्मिन् काले प्रकृतिप्रत्ययधातूपसर्गसमासघटितपूर्वोत्तरपदविभागानां पूर्णरूपेण निर्धारणं सञ्जातमासीत्। तद्यथा—

[4]वाजिनीऽवती॥

[5]समऽजग्मानः॥

[6]रुद्रवर्तनी इति रुद्रऽवर्तनी॥

---

१. ऋग्वेदः—१।१६४।५७।

२. यास्क, निरुक्तम्—अ० २। पा० ४। खण्ड २, मनसुखरायमोरसंस्करणम्।

३ यजुर्वेदसंहिता—१९।७७।

४. ऋग्वेद-पदपाठः—१।३।१०।

५. तदेव—१।६।७।

६. तदेव—१।३।३।

बाल्मीकीयरामायणेन ज्ञायते यत् त्रेतायुगे भगवतः श्रीरामचन्द्रस्य समयेऽपि व्याकरणशास्त्रस्य सुव्यवस्थितम्पठनपाठनम्भवति स्म । तदुक्तं वाल्मीकीयरामायणस्य किष्किन्धाकाण्डे--

"[१]नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् ।
बहु व्याहरतानेन न किञ्चिदपभाषितम् ॥"

हनुमत ईदृक् वाक्पटुत्वं युक्तमेवासीत्, यतो हि हनुमतः पिता वायुः शब्दशास्त्रस्य विशारद आसीत् । तथोक्तं वायुपुराणे--

[२]तत्राभिमानी भगवान् वायुश्चातिक्रियात्मकः ।
वातारणिः समाख्यातः शब्दशास्त्रविशारदः ॥

एवं व्याकरणशास्त्रस्य प्राचीनतमत्वं सिद्धयति । अथ च पाणिनीयव्याकरणे स्मृताः संज्ञा अपि प्राचीनाः । तासु कासाञ्चिन्निर्देशो गोपथब्राह्मणेऽवलोक्यते--

"[३]ओङ्कारम्पृच्छामः, को धातुः, किम्प्रातिपदिकम्, किं नामाख्यातम्, किं लिङ्गम्, किं वचनम्, का विभक्तिः, कः प्रत्यय, कः स्वरः, उपसर्गो निपातः, किं वै व्याकरणम्, को विकारः को विकारी, कति मात्रः, कति वर्णः, कत्यक्षरः, कति पदः, कः संयोगः, किं स्थाननादानुप्रदानानुकरणम् ॥"

"[४]पुराकल्प एतदासीत्, संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते" इति महाभाष्यानुसारेण ज्ञायते यदत्यन्तपुराकाले व्याकरणशास्त्रोत्पत्तिर्जाता । सर्वेषां नामशब्दानां निष्पत्तिदर्शकं मूर्धाभिषिक्तं शाकटायनव्याकरणमपि यास्कात् प्रागेव निर्मितमासीत् । तदुक्तं निरुक्ते--

---

१. वाल्मीकीयरामायणम्, किष्किन्धाकाण्डम्, सर्गः ३, श्लोकः २९।

२. वायुपुराणम्–२।४४ ।

३. गोपथब्राह्मणम्–१।२४ ।

४. पतञ्जलि--व्याकरणमहाभाष्यम्, अ० १ । पा० १ । आ० १ । पृ० १६ ।

[1]"न सर्वाणीति गार्ग्यो वैयाकरणानां चैके । तत्र नामाख्यातजानीति शाकटायनो नैरुक्तसमयश्च ।"

शब्दशास्त्रस्य कृते व्याकरणशब्दस्य प्रयोगो वाल्मीकिरामायणमुण्डकोपनिषद्-महाभारतप्रभृतिषु ग्रन्थेष्ववलोक्यते । तद्यथा वाल्मीकीयरामायणे किष्किन्धाकाण्डे किष्किन्धाराजस्य सुग्रीवस्य मन्त्रिणा हनुमता साकं श्रीरामचन्द्रस्य संस्कृत-भाषायामेव वार्ता जाता । तदनन्तरं लक्ष्मणम्प्रति हनुमतः वाक्पटुत्वविषये श्रीरामचन्द्रो बभाषे—

[2]"नूनं व्याकरणम् कृत्स्नमनेन बहुधा श्रुतम् ।" इत्यादि ।

[3]"तत्रापरा ऋग्वेदो, यजुर्वेदः, सामवेदोऽथर्ववेदः, शिक्षा, कल्पो, व्याकरणम्, निरुक्तम्, छन्दो, ज्यौतिषमिति ।।"

"सर्वार्थानां व्याकरणाद् वैयाकरण उच्यते ।
तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा[4] ।।"

संसारेऽस्मिन् संस्कृतव्याकरणशास्त्रस्य परम्परा वेदादेव प्रवर्तते, तत्र संस्कृत-व्याकरणशास्त्रय सर्वप्रथमः प्रवक्ता "ब्रह्मा" बभूवेति ऋक्तन्त्रादिग्रन्थावलोकनेन ज्ञायते । ब्रह्मणः कालविषये मतैक्यं नास्ति । ऋक्तन्त्रीयप्रमाणानुसारेण[5] ब्रह्मा बृहस्पतये व्याकरणशास्त्रमुपदिदेश । ब्रह्मणः कालः वैक्रमसंवत्सरात् षोडशसहस्रवर्षपूर्वमिति श्रीपण्डितयुधिष्ठिरमीमांसकमतन्न समीचीनम्, व्याकरणशास्त्रस्य रामायणकालेऽपि सत्त्वात् । अत्रेदं तथ्यम्—वाल्मीकीयरामायणस्य किष्किन्धाकाण्डे[6] ( ३।२९ )

१. यास्क, निरुक्तम्, नैगमकाण्डम्, अ० १ । पा० ४ । खण्डम् १, मनसुखरायमोर-संस्करणम्, कलकत्ता ।

२. वाल्मीकीयरामायणम्, किष्किन्धाकाण्डम्, तृतीय-सर्गः, श्लोकः २९ ।

३. मुण्डकोपनिषत् २।५, पृ० १२ । अध्यात्मप्रकाशकार्यालय होलेनाशिपुर-संस्करणम्, सन् १९६० ।

४. महाभारतम्, उद्योगपर्व । अध्याय ४३ । ६१ । पृ० १४४ । गीताप्रेस ।

५. ऋक्तन्त्रम्, १।४।

६. नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् । बहु व्याहरताऽनेन न किञ्चिदप-भाषितम् । ( वाल्मीकीयरामायणम्, किष्किन्धाकाण्डम्, ३।२९ )

अवलोकनेन ज्ञायते यद् रामायणकालेऽपि व्याकरणशास्त्रस्य पठनपाठनम्प्रचलति स्म। भारतीयैतिह्यग्रन्थेभ्योऽवगम्यते यद् भगवतः श्रीरामचन्द्रस्यावतारः त्रेतायुगस्य द्वितीये चरणे बभूव। अतो रामायणकालः त्रेतायुगस्य द्वितीयचरणम्। अतः श्रीरामचन्द्रावतारादद्यावधि १२,६९,०८५ (द्वादशलक्षाणि एकोनसप्ततिसहस्रपञ्चाशीति) वर्षाणि व्यतीतानि। श्रीमीमांसकमतस्वीकरणे रामायणकाले व्याकरणशास्त्रसत्ता न सिध्यति। अत एव अस्मद्दृष्टया ब्रह्मणः कालः सत्ययुगस्यान्तिमे चरणे स्वीकर्तुं शक्यते।

व्याकरणशास्त्रस्य द्वितीयः प्रवक्ता "**बृहस्पतिः**" बभूव। पातञ्जलमहाभाष्याज्ज्ञायते यद्[1] बृहस्पतिः इन्द्राय दिव्यं वर्षसहस्रं यावत् "शब्दपारायणं" नाम व्याकरणशास्त्रम्प्रोवाच। श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयानाम्मतानुसारेण बृहस्पतेः कालो वैक्रमाब्दात् दशसहस्रवर्षपूर्वमिति; किन्तु तन्न समीचीनम्। यतो हि महाभाष्ये ऋक्तन्त्रे[2] चोक्तं यद् ब्रह्मा बृहस्पतये व्याकरणशास्त्रम्प्रोवाच। अत इयं जिज्ञासा समुदेति यत् किं ब्रह्मा षट्सहस्रवर्षं यावज्जीवित आसीत्?

अत एव अस्मद् दृष्टया देवगुरोर्बृहस्पतेः कालः सत्ययुगस्यान्तिमे चरणे स्वीकर्तुं शक्यते। एवं बृहस्पतिः ब्रह्मणः समकालिक एव प्रतिभाति।

व्याकरणशास्त्रस्य सम्प्रदायद्वयम्प्रसिद्धमस्ति। माहेश्वरमैन्द्रञ्चेति। तत्र आचार्यः महेश्वरो माहेश्वरसम्प्रदायप्रवर्तकः, इन्द्रश्चैन्द्रसम्प्रदायप्रवर्तक इत्यैतिह्यविदः। महेश्वराचार्यस्य वर्णनमग्रे करिष्यते।

संस्कृतव्याकरणशास्त्रस्यैन्द्रसम्प्रदायप्रवर्तकः, तृतीयः प्रवक्ता आदिमश्च संस्कर्ता "**इन्द्रो**" बभूव। ऋक्तन्त्रानुसारेणाऽयं बृहस्पतेराचार्यस्य शिष्यः। इन्द्रेण

---

१. बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणम्प्रोवाच....। (पतञ्जलि—व्याकरणहाभाष्यम्, १।१।१ आ० १)

२. यथाचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय.... (ऋक्तन्त्रम्, १।४)

संस्कृतव्याकरणशास्त्रस्य प्रवचनं विहितमिति ऋक्तन्त्रात्[1] [2]महाभाष्याच्चावगम्यते। इन्द्रादेव प्रकृतिप्रत्ययस्वरूपाया व्याकरणप्रक्रियाया विकास आरभ्यते। इन्द्रस्य समयविषये निश्चितरूपेण किमपि वक्तुं न शक्यते। इन्द्रो दीर्घजीवी आसीत्, अध्यात्मज्ञानार्थं स एकोत्तरशतवर्षपर्यन्तं ब्रह्मचर्यव्रतम्पालयामास इति प्राचीनैतिह्यग्रन्थेभ्योऽवगम्यते। इन्द्रस्य समयो वैक्रमाब्दात् पञ्चशतोत्तरनवसहस्र (९५००) वर्षपूर्वमिति श्रीपण्डितयुधिष्ठिरमीमांसकमतं न समीचीनम्, इन्द्रशिष्यस्य भरद्वाजस्य रामायणकालेऽपि सत्त्वात्। रामायणकालः त्रेतायुगस्य द्वितीयचरणम्; अतो मदीयदृष्ट्या इन्द्रस्य कालः सत्ययुगस्य चतुर्थचरणमिति स्वीकर्तुं शक्यते।

संस्कृतव्याकरणशास्त्रस्य चतुर्थः प्रवक्ता "**वायु**"र्बभूव।[3] तैत्तिरीयसंहितानुसारेण वायोः साहाय्येन इन्द्रः प्रकृतिप्रत्ययरूपं व्याकरणशास्त्रम्प्रणिनाय। इन्द्रवायुसहयोगेन प्रवर्तमानमिदं व्याकरणशास्त्रं देववाण्याः सर्वप्रथमं व्याकरणमिति प्राचीनैतिह्यविद्भिरुच्यते। वायुपुराणे वायुः शब्दशास्त्रविशारद[4] इत्युक्तम्। वायुना व्याकरणशास्त्रस्य प्रवचनं कृतमासीदिति कवीन्द्राचार्य[5]प्रणीतसूचीपत्रस्य तृतीयपृष्ठात्, यामलाष्टकतन्त्रस्याष्टसु[6] व्याकरणेपूल्लेखाच्चावगम्यते। पं० युधि-

१. "यथाचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते।" (ऋक्तन्त्रम्, १।४, पृष्ठ–३, मेहरचन्द्रलक्ष्मणदाससंस्करणम्, सन् १९३३)

२. "बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रम्प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम॥" (पतञ्जलि–व्याकरणमहाभाष्यम्, १।१। आ० १)

३. वाग् वै पराच्यव्याकृतावदत्। ते देवा इन्द्रमब्रुवन् वाचं नो व्याकुर्विति। सोऽब्रवीद् वरं वृणै मह्यं चैत्र वायवे च सह गृह्याताम्–इति।
(तैत्तिरीयसंहिता–६।४।७)

४. तत्राभिमानी भगवान् वायुश्चातिक्रियात्मकः। वातारणिः समाख्यातः शब्दशास्त्रविशारदः॥ (वायुपुराणम्, २।४४)

५. कवीन्द्राचार्यकृत-सूचीपत्र, पृष्ठ ३।

६. ऋग्वेदकल्पद्रुम की भूमिका में उद्धृत, पृष्ठ, १२४।

ष्ठिरमीमांसकमतानुसारेण वायोः पुत्रः हनुमान् आसीत्। हनुमानपि स्वपितृवत् संस्कृतव्याकरणशास्त्रस्य महान् वेत्ता आसीदिति [1]वाल्मीकीयरामायणादेवावगम्यते। अयं हनुमान् दाशरथेः रामचन्द्रस्य समकालिक आसीत्। अतो वायोः कालः वैक्रमाब्दात् पञ्चशतोत्तराष्टसहस्रवर्षपूर्वमिति श्रीपण्डितयुधिष्ठिर[2]-मीमांसकमतन्न समीचीनम्, दाशरथिरामचन्द्रसमये वायोराचार्यस्य विद्यमानत्वात्। अत एव मदीयदृष्ट्या वायोराचार्यस्य कालः त्रेतायुगस्य द्वितीयचरणमेव स्वीकर्तुं शक्यते।

संस्कृतव्याकरणशास्त्रस्य पञ्चमः प्रवक्ता "**भरद्वाजो**" बभूव। अयमाङ्गिरस-बृहस्पतेः पुत्रः, इन्द्रशिष्यश्च। ऋक्तन्त्रानुसारेण[3] इन्द्रो भरद्वाजाय व्याकरणशास्त्रमुपदिदेश, भरद्वाजश्च ऋषिभ्यो व्याकरणशास्त्रम्प्रोवाच। भरद्वाजः अमितायुः, अनूचानतमः, दीर्घजीवी चासीदिति चरकसंहिता[4]-ऐतरेयारण्यक-ऐतरेयब्राह्मण-ग्रन्थेभ्योऽवगम्यते। तैत्तिरीयब्राह्मणग्रन्थे ( ३।१०।११ ) दीर्घजीविनो भरद्वाजस्य इन्द्रेण सह विशिष्टसम्बन्धदर्शनादयमेव दीर्घजीवी भरद्वाजो व्याकरणशास्त्र-प्रवक्ता इति सुनिश्चितम्।

भरद्वाजः काशिपतिदिवोदासपुत्रस्य प्रतर्दनस्य[5] पुरोहित आसीत्, प्रतर्दनश्च दाशरथिरामस्य[6] समकालिक आसीत्। रामसीतालक्ष्मणाः वनगमनकाले भर-

---

१. "नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्, बहु व्याहरतानेन न किञ्चिदपशब्दितम् ॥" ( वाल्मीकीयरामायणम्, किष्किन्धाकाण्डम्, ३।२९ )

२. द्रष्टव्यम् पं० युधिष्ठिर मीमांसक—संस्कृत व्याकरणशास्त्र का इतिहास, प्रथम भाग, तृतीय संस्करण, सं० २०३०, पृष्ठ, ८५।

३. ''''इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः''''''''॥ (ऋक्तन्त्रम्, १।४ )

४. "तेनायुरमितं लेभे भरद्वाजः सुखान्वितः ॥" ( चरक संहिता-सूत्रस्थान, १।२६) "भरद्वाजो ह वा ऋषीणामनूचानतमो दीर्घजीवितमस्तपस्वितमः आस"। ( ऐतरेयारण्यक, १।२।२ ) "भरद्वाजो ह वा कृशो दीर्घपालित आस"॥ ( ऐतरेयब्राह्मणम् १५।५ )

५. "एतेन वै भरद्वाजः प्रतर्दनं दैवोदासिं समनह्यत्" ॥

( मैत्रायणी संहिता, ३।३।७ )

"एतेन ह वै भरद्वाजः प्रतर्दनं समनह्यत्" ॥ (गोपथब्राह्मणम्, २।१।१८)

६. "तं विसृज्य ततो रामो वयस्यमकुतोभयम्। प्रतर्दनं काशिपतिं परिष्वज्येदमब्रवीत् ॥" ( वाल्मीकीयरामायणम्, उत्तरकाण्डम्, ३८।१५ )

द्वाजस्याश्रमे निवासं चक्रुरिति वाल्मीकीयरामायणादवगम्यते[१]। सीतास्वयंवरानन्तरं दाशरथेः[२] रामस्य जामदग्न्यरामेण सह साक्षात्कारो बभूव। जामदग्न्यरामः त्रेताद्वापरयोः सन्धौ बभूवेति महाभारताज्ज्ञायते। एभिः प्रमाणैर्मर्यादापुरुषोत्तमस्य श्रीरामचन्द्रस्य समये दीर्घजीविनो भरद्वाजस्य सत्ता सिध्यति। श्रीरामचन्द्रावतारकालः त्रेतायुगस्य द्वितीयचरणमस्ति। अतो भरद्वाजस्य कालः वैक्रमाब्दात् ९३०० वर्षपूर्वमिति श्री पं० युधिष्ठिर मीमांसकमतं न समीचीनम्; अपि तु मदीयदृष्ट्या भरद्वाजस्य कालः त्रेतायुगस्य द्वितीयचरणमेव स्वीकर्तुं युक्तम्प्रतीयते।

संस्कृतव्याकरणशास्त्रस्य षष्ठः प्रवक्ता, भगुरस्यापत्यो, बृहद्गर्गशिष्यो "**भागुरि**"र्बभूव अस्य कालः वैक्रमाब्दात् चतुःसहस्र--( ४००० )वर्षपूर्वमिति श्री पं० युधिष्ठिरमीमांसकमतम्। सः संस्कृतव्याकरणशास्त्रस्य प्रवचनं चकारेति विविधग्रन्थेषूपलब्ध-भागुरि-व्याकरणविषयकमतावलोकनेन ज्ञायते।

वैक्रमाब्दादेकशतोत्तरत्रिसहस्रवर्षपूर्वं संस्कृतव्याकरणशास्त्रस्य सप्तमः प्रवक्ता '**पौष्करसादि**'र्बभूव। यद्यपि पाणिनीयाष्टाध्याय्यामस्य नामोल्लेखो न दृश्यते; परन्तु महाभाष्ये[४] अस्याचार्यस्योल्लेखो दृश्यते। "पौष्करसादि"पदे श्रूयमाणेन तद्धितप्रत्ययेन प्रतीयते यत् पौष्करसादेराचार्यस्य पिता "पुष्करसदि"ति

---

१, रामस्त्वाश्रममासाद्य त्रासयन् मृगपक्षिणः।
गत्वा मुहूर्तमध्वानं भरद्वाजमुपागमत्॥
सीतातृतीयः काकुत्स्थः परिश्रान्तः सुखोचितः।
भरद्वाजाश्रमे रम्ये तां रात्रिमवसत् सुखम्।
( वाल्मीकीयरामायणम्, अयोध्याकाण्डम्, ५४।९,३५)

२. प्रतिगृह्य तु ताम्पूजामृषिदत्तां प्रतापवान्।
रामं दाशरथिं रामो जामदग्न्योऽभ्यभाषत॥ (तदेव, बालकाण्डम्, ७५।२५)

३ त्रेताद्वापरयोः सन्धौ रामः शास्त्रभृतां वरः।
असकृत् पार्थिवं क्षत्रं जघानामर्षचोदितः॥ (महाभारतम्, आदिपर्व, २।३)

४. चयो द्वितीयाः शरि पौष्करसादेः ( पतञ्जलि—व्याकरणमहाभाष्यम्, ८।४।१ आ०, सू० ४८, वा० ३ )

काशिकाकारमतम्[१]। बाह्वादिगणे "पुष्करसत्" शब्दः पठ्यते। "बाह्वादिभ्यश्च" (अष्टा० ४।१।९६) इति सूत्रेण पुष्करसतोऽपत्यमिति विग्रहे तद्धितसंज्ञके 'इञ्' प्रत्यये "पौष्करसादि" शब्दो निष्पद्यते। [२]यज्ञेश्वरभट्टस्याऽपीदमेव मतम्। महाभाष्यस्योपर्युक्तोद्धरणात् प्रतीयते यत् पौष्करसादिनाऽऽचार्येण संस्कृतव्याकरणशास्त्रस्य प्रवचनं कृतम्।

अस्मिन्नेव समये संस्कृतव्याकरणशास्त्रस्याष्टमः प्रवक्ता "**चारायणो**"[३] बभूव। चारायणशब्दोऽयमपत्यप्रत्ययान्तः। चरः चारायणस्य पिता इत्यनुमीयते, यतो हि चरस्यापत्यमिति विग्रहे चरशब्दात् "नडादिभ्यः फक्" इत्यनेन फक्प्रत्यये फस्यायनादेशे आदिवृद्धौ णत्वादिकार्ये च "चारायण" शब्दो निष्पद्यते। महाभाष्ये[४] चारायणनामोल्लेखात् प्रतीयते यत् चारायणेन संस्कृतव्याकरणशास्त्रस्य प्रवचनं विहितमिति।

वैक्रमाब्दादेकशतोत्तरत्रिसहस्रवर्षपूर्वमेव संस्कृतव्याकरणशास्त्रस्य नवमः प्रवक्ता "**काशकृत्स्नो**" बभूव। काशकृत्स्नेन व्याकरणशास्त्रस्य प्रवचनं कृतमासीदिति

---

१. पुष्करसच्छब्दात् बाह्वादिपाठादिञ्। (वामन-ज्यादित्य–काशिकावृत्तिः, २।४।६३)

२. पुष्करे तीर्थविशेषे सीदतीति पुष्करसत्, तस्यापत्यं पौष्करसादिः। (गणरत्नावली, ४।१।९६)

३. देवपाल ने लौगाक्षिगृह्यसूत्र ५।१ की टीका में लिखा है—
"तथा च चारायणिसूत्रम्—'पुरुकुले च्छच्छ्रयोः' इति। पुरुशब्दः कृतशब्दश्च लुप्यते यथासंख्यं छे छ्रे परतः। पुरुच्छदन पुच्छम्, कृतस्य छ्रदनं विनाशनं कृच्छ्रम्"॥

४. कम्बलचारायणीयाः, ओदनपाणिनीयाः, घृतरौढीयाः (पतञ्जलि—व्याकरण-महाभाष्यम्, १।१, आ० ९, सू० ७३)

महाभाष्यादिग्रन्थेभ्योऽत्रगम्यते[1]। अस्य पिता कशकृत्स्न आसीत्। कशकृत्स्न-शब्दादपत्येऽर्थे "तस्यापत्यम्" (अष्टा० ४।१।९२) इति सूत्रेण अण्प्रत्यये "काशकृत्स्न"शब्दो निष्पद्यते। अस्यैवाचार्यस्यापरं नाम काशकृत्स्निरप्यासीत्। अस्य गोत्रं भार्गव इति विविधैतिह्यग्रन्थेभ्योऽवगम्यते।

वैक्रमाब्दादेकशतोत्तरत्रिसहस्रवर्षपूर्वमेव संस्कृतव्याकरणशास्त्रस्य दशमः प्रवक्ता "**शन्तनु**"र्नाम वैयाकरणो बभूव, येन सर्वाङ्गपूर्णस्य व्याकरणशास्त्रस्य प्रवचनं विहितमासीत्। सम्प्रति केवलं तस्य फिट्सूत्रमेवोपलभ्यते।

वैक्रमाब्दादेकशतोत्तरत्रिसहस्रवर्षपूर्वमेव "**वैयाघ्रपद्य**"नाम्ना वैयाकरणेन संस्कृतव्याकरणशास्त्रस्य प्रवचनं विहितमिति काशिका[2]ग्रन्थावलोकनेन ज्ञायते। अस्य पिता व्याघ्रपात् महर्षेर्वशिष्ठस्य[3] पुत्र आसीत्। व्याघ्रपात्शब्दात् "गर्गादिभ्यो यञ्[4]" इति सूत्रेण यञ् प्रत्यये "वैयाघ्रपद्य"शब्दो निष्पद्यते। वैयाघ्रपद्यस्य व्याकरणे दश[5] अध्याया आसन्निति काशिकाग्रन्थावलोकनेनानुमीयते।

---

१. "पाणिनिना प्रोक्तं पाणिनीयम्, आपिशलम्, काशकृत्स्नम्॥"
पतञ्जलि-व्याकरणमहाभाष्यम्, (१।", आ० १, पृ० ४२)

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादिशाब्दिकाः॥

(बोपदेव—कविकल्पद्रुमः)

२. ....गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः (वामन—जयादित्य—काशिकावृत्तिः, ७।१।९४)

३. व्याघ्रयोन्यां ततो जाता वशिष्ठस्य महात्मनः।
एकोनविंशतिः पुत्राः ख्याता व्याघ्रपदादयः॥

(महाभारतम्, अनुशासनपर्व, ५३।३०)

४. पाणिनि—अष्टाध्यायी, ४।१।१०५।

५. दशकाः वैयाघ्रपदीयाः॥ (वामनजयादित्य-काशिकावृत्तिः, ४।२।६५) दशकं वैयाघ्रपदीयम्। (तदेव, ५।१।५८)

"**गार्ग्य**" नाम्ना वैयाकरणेन संस्कृतव्याकरणशास्त्रस्य प्रवचनं कृतमिति पाणिनीया[1]ष्टाध्यायी-नि[2]रुक्त-प्रातिशा[3]ख्यावलोकनेन ज्ञायते। गोत्रप्रत्ययान्तोऽयं गार्ग्यशब्दः। गर्गस्य गोत्रापत्यमिति विग्रहे "गर्गादिभ्यो यञ्" (अष्टा०४।१।१०५) इति सूत्रेण यञ्प्रत्ययान्तत्वादस्य पितुर्नाम "गर्ग" आसीदित्यनुमीयते। गर्गो भारद्वाजपुत्र आसीत्। अष्टाध्याय्यामुल्लेखाद् गार्ग्यः पाणिनेः प्राचीनः। निरुक्ते गार्ग्यमतोल्लेखाद् गार्ग्यस्य यास्कादपि प्राचीनत्वं सम्भाव्यते, यदि नैरुक्त-वैयाकरणगार्ग्ययोरैक्यं स्वीक्रियेत। यास्काचार्यस्य कालः महाभारतयुद्धसमीपकालः, अतो गार्ग्याचार्यस्य कालो वैक्रमाब्दात् शताधिकत्रिसहस्रवर्षपूर्वम्भवितुमर्हति; परन्तु सुश्रुतटीकाकारेण उल्हणेन[4] धन्वन्तरिशिष्येषु गार्ग्यगालवयोरुल्लेखो विहितः। यदि वैद्यगार्ग्यगालवावेव वैयाकरणगार्ग्यगालवाविति प्रमाणान्तरेण सिद्धयेत, तर्हि गार्ग्याचार्यस्य कालो वैक्रमाब्दात् सार्धपञ्चसहस्रवर्षपूर्वमिति स्वीकर्तुं शक्यते।

"**गालव**" नाम्ना वैयाकरणेनाऽपि संस्कृतव्याकरणशास्त्रस्य प्रवचनं विहित-मिति [5]पाणिनीयाष्टाध्याय्यां पुरुषोत्तमदेवप्राणीतायाम्भाषा[6]वृत्तौ च तस्य व्याकरणविषयकमतोल्लेखाज्ज्ञायते। गालवशब्दस्य गोत्रप्रत्ययान्तत्वाद् गालवाचार्यस्य

---

१. अङ्गार्ग्यगालवयोः। ( पाणिनि-अष्टाध्यायी, ०७।३।९९ ) ओतो गार्ग्यस्य। (तदेव, ०८।३।२०) नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्। (तदेव, ०८।४।६७)

२. न सर्वाणीति गार्ग्यो वैयाकरणानां चैके। (यास्क-निरुक्तम्, १।१२)

३. व्याडिशाकल्यगार्ग्याः। (ऋक्प्रातिशाख्यम्, १३।६१)

४. प्रभृतिग्रहणान्निमिकाङ्कायनगार्ग्यगालवाः। (सुश्रुत-संहिता-१।३। की उल्हण-टीका )

५. इको ह्रस्वोऽङ्यो गालवस्य। (पाणिनि-अष्टाध्यायी, ०६।३।६१) तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य। (तदेव, ०७।१।७४) अङ्गार्ग्य-गालवयोः। (तदेव, ७।३।९९) नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवा-नाम्। (तदेव, ८।४।६७)

६. इकां यण्भिर्व्यवधानम् व्याडिगालवयोरिति वक्तव्यम्। दधियत्र, दध्यत्र। मधुवत्र, मध्वत्र॥ (पुरुषोत्तमदेवः—भाषावृत्तिः, ६।१।७३)

पितुर्नाम गलवो गलुर्वा आसीदित्यनुमीयते। सुश्रुतटीकाकारस्य उल्हणस्य मतानुसारेण गालवाचार्योऽपि धन्वन्तरेः शिष्य आसीत्। अतो यदि वैद्यवैयाकरण-गालवयोरैक्यं प्रमाणान्तरेण सिद्ध्येत, तर्हि गालवाचार्यस्याऽपि कालः वैक्रमाब्दात् सार्धपञ्चसहस्रवर्षपूर्वमिति स्वीकर्तुं शक्यते।

वैक्रमाब्दादेकशतोत्तरत्रिसहस्रवर्षपूर्वं "**शाकल्य**"नाम्ना वैयाकरणेन संस्कृत-व्याकरणशास्त्रस्य प्रवचनं विहितमिति पाणिनीया[1]ष्टाध्यायी-महा[2]भाष्य-प्रातिशा[3]-ख्येभ्योऽवगम्यते। महा[4]भारते कश्चित् सूत्रकार-शाकल्यः समुद्धृतः, स एव वैया-करणशाकल्य इत्यनुमीयते। पाणिनीयाष्टाध्याय्याम्प्रातिशाख्येषु चोद्धृतानां शाक-ल्यमतानामनुशीलनेन ज्ञायते यत् शाकल्यव्याकरणे लौकिकानां वैदिकानाञ्चोभय-विधशब्दानामन्वाख्यानमासीत्।

पूर्वमेवास्माभिर्वर्णितं यत् संस्कृतव्याकरणशास्त्रस्य सम्प्रदायद्वयं प्रसिद्धमस्ति माहेश्वरमैन्द्रञ्च। तत्र माहेश्वरसम्प्रदायप्रवर्तकः "**महेश्वरो**" बभूव, स एव

---

१. सम्बुद्धौ शाकल्यस्येतावनार्षे। (अष्टा० १।१।१६) इको सवर्णे शाकल्यस्य ह्रस्वश्च। (तदेव, ६।१।१२७) लोपः शाकल्यस्य। (तदेव, ८।३।१९) सर्वत्र शाकल्यस्य। (तदेव, ८।४।५१)

२. सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः। (पतञ्जलि, महाभाष्यम्—६।१।५ आ०। सू०१२७। पृ० ७७२। मोतीलाल बनारसीदाससंस्करणम्। द्वितीय खण्ड। सन् १९६७)

३. ऋक्प्रातिशाख्यम्, ३।१३,२२।४।१३। वाजसनेयप्रातिशाख्यम्, ३।१०।

४. शाकल्यः संशितात्मा वै नववर्षशतान्यपि।
आराधयामास भवं मनोयज्ञेन केशव॥
तं चाह भगवान् तुष्टो ग्रन्थकारो भविष्यति।
वत्साक्षया च ते कीर्तिस्त्रैलोक्ये वै भविष्यति॥
अक्षयं च कुलं तेऽस्तु महर्षिभिरलङ्कृतम्।
भविष्यति द्विजश्रेष्ठः सूत्रकर्ता सुतस्तव॥
(महाभारतम्, अनुशासनपर्व, १४।१००–१०२)

व्याकरणशास्त्रप्रवचनं चकारेति सारस्वत[१]भाष्य-श्लोकात्मकपाणिनी[२]यशिक्षा-नन्दिकेश्वर[३]काशिका-हैमबृहद्वृत्त्यवचूर्णि[४]ग्रन्थावलोकनेन ज्ञायते। महेश्वरः पाणिनये चतुर्दशसूत्राण्युपदिदेश, यानि माहेश्वरसूत्राणीत्युच्यन्ते। तानि सूत्राण्येवाधारीकृत्य पाणिनिः अष्टाध्यायीग्रन्थम्प्रणिनाय।

[५]महाभारते "शिवः" वेदाङ्गप्रवर्तकत्वेन स्वीक्रियते। शिवो व्याकरणशास्त्रातिरिक्तानामर्थशास्त्र-धनुर्वेद-वास्तुशास्त्र-नाट्यशास्त्र-छन्दःशास्त्राणाम्प्रवचनं चकार। शिवो दीर्घायुः मृत्युञ्जयश्च बभूव, तथा चास्य शिव, शार्व, भव, शंकर, शम्भु, पिनाकी, शूलपाणि, महेश्वर, महादेव, स्थाणु, गिरीश, विशालाक्ष, त्र्यम्बक-प्रभृतीनि प्रसिद्धानि नामान्यासन्निति श्री पं० युधिष्ठिरमीमांसकानाम्मतम्। श्रीमीमांसकः[६] वैयाकरणं महेश्वरं पौराणिकेन शिवेन सह सम्बद्धं करोति। श्रीमीमांस-

---

१. समुद्रवद्व्याकरणं महेश्वरे तदर्धकुम्भोद्धरणं बृहस्पतौ।
तद्भागभागाच्च गतं पुरन्दरे कुशाग्रबिन्दूत्पतितं हि पाणिनौ॥ (सारस्वत-भाष्यम्)

२. येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।
कृत्स्नं व्याकरणम्प्रोक्तं तस्मै पाणिनये नमः॥ (श्लोकात्मक-पाणिनीय-शिक्षा, ५७)

३. नृत्यावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।
उद्धर्तुकामः सनकादिशिष्यानेतद्विमर्शे शिवसूत्रजालम्॥ (नन्दिकेश्वर-काशिका)

४. ब्राह्ममैशानमैन्द्रञ्च प्राजापत्यम्बृहस्पतिम्।
त्वाष्ट्रमापिशलञ्चेति पाणिनीयमथाष्टमम्॥ (हैमबृहद्वृत्त्यवचूर्णि, पृ० ३)
अत्र 'ऐशान'पदेन महेश्वराचार्यप्रोक्तव्याकरणस्य बोधः।

५. वेदात् षडङ्गान्युद्धृत्य.........(महाभारतम्, शान्तिपर्व, २८४।१८७)

६. द्रष्टव्यम्, पं० युधिष्ठिर मीमांसक—संस्कृत व्याकरण शास्त्र का इतिहास/ प्रथम भाग, पृष्ठ ७५-७७, तृतीयसंस्करणम्, सं० २०३०।

केन महेश्वरस्य कालः[1] सत्ययुगस्य चतुर्थचरणम् = ११००० वि० पूर्व ( वैक्रमाब्दादेकादशसहस्रवर्षपूर्वमिति) स्वीक्रियते ।

परन्तु मदीयदृष्ट्या श्रीमीमांसकानां महेश्वरकालविषयकमुपर्युक्तं मतम्, वैयाकरणमहेश्वरस्य पौराणिकशिवेन सह सम्बद्धताकरणस्य प्रयत्नश्च न समीचीनम्, तन्मतस्वीकरणे वैक्रमाब्दात् नवशताधिकद्विसहस्र-(२९००) वर्षप्राचीनाय[2] पाणिनये "महेश्वराचार्य"द्वारा व्याकरणशास्त्रोपदेशकरणासम्भवात् ।

अतो मदीयदृष्ट्या महाभारतस्य शान्तिपर्वणि वर्णितोऽनेकशास्त्रप्रवर्तकः; किन्तु सत्ययुगस्य चतुर्थचरणे उत्पन्नात् पौराणिकशिवात् सर्वथा भिन्नोऽपरः शिव एव वैयाकरण आचार्यो महेश्वरः । महाभारतयुद्धादद्यावधि (२०४१ वै०) प्रायः पञ्चाशीत्युत्तरपञ्चसहस्र-(५०८५) परिमितानि वर्षाणि व्यतीतानि । अत एव मदीयदृष्ट्या महेश्वराचार्यस्य कालः द्वापरयुगस्यान्तिमे चरणे अर्थाद् वैक्रमाब्दात् त्रिसहस्रवर्ष-(३०००) पूर्वमिति स्वीकर्तुं शक्यते । अतः सिध्यति यत् सत्ययुगस्य चतुर्थचरणे समुत्पन्नः शिवो वेदाङ्गप्रवर्तकः; परन्तु "महेश्वर" नामाभिध आचार्यस्तद्भिन्नो द्वापरयुगस्याऽन्तिमे चरणे समुत्पन्नः, पाणिनये च व्याकरणशास्त्रमुपदिदेश ।

वैक्रमाब्दात् त्रिसहस्रवर्षपूर्वं **"माध्यन्दिनि"** नामा वैयाकरणः सम्बभूव इति काशि[3]काग्रन्थावलोकनेन ज्ञायते । विमलसरस्वतीप्रणीतरूप[4]मालाग्रन्थावलोकनेन

१. "शिव का काल सतयुग का चतुर्थ चरण है । इस प्रकार शिव का प्रादुर्भाव आज से लगभग ११ सहस्र वर्ष पूर्व है ।" ( संस्कृत व्याकरणशास्त्र का इतिहास, प्रथम भाग, पृष्ठ ७७, तृतीय संस्करण, सं० २०३० )

२. .....................पाणिनि का काल लगभग भारतयुद्ध से २०० वर्ष पश्चात् अर्थात् २९०० विक्रम पूर्व है ।
(तदेव, प्रथम भाग/पृष्ठ २०४-२०५/तृतीय संस्करण/सं० २०३० )

३. "सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् ।
माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः ॥
(वामन-जयादित्य—काशिका, ७।१।९४)

४. "इकः षण्ढेऽपि सम्बुद्धौ गुणो माध्यन्दिनेर्मते" ॥
(रूपमाला, नपुंसकलिङ्ग प्रकरणम्)

ज्ञायते यद् माध्यन्दिनिनाऽऽचार्येण संस्कृतव्याकरणशास्त्रस्य प्रवचनं विहितमासीत्। अपत्यप्रत्ययान्तत्वादस्य पिता "मध्यन्दि[1]न" आसीदित्यनुमीयते।

काशिका[2]याम्—"आपिशलपाणिनीयाः, रौढीयाः, रौढीयकाशकृत्स्नाः" इत्येतेषूदाहरणेषु आपिशलिपाणिनिकाशकृत्स्नैः सह "रौढि"पदपाठात् प्रतीयते यद् '**रौढि**' नाम्ना वैयाकरणेन संस्कृतव्याकरणशास्त्रस्य प्रवचनं विहितमासीत्। अपत्यप्रत्ययान्तत्वाद् "रूढ" अस्य पितुर्नाम आसीत्। अस्याऽपि कालो वैक्रमाब्दात् त्रिसहस्रवर्षपूर्वमस्ति।

अस्मिन्नेव समये"**शौनकि**" नामा आचार्यो बभूव, तेन संस्कृतव्याकरणशास्त्रस्य प्रवचनं विहितमासीत्। चरकसंहिताचिकित्सास्थानस्य टीकायां[3]जज्झटेन शौनकेराचार्यस्य मतमुद्धृतम्। भट्टिकाव्यस्य जयमंगला[4]टीकायामपि शौनकेरुल्लेखो दृश्यते।

वैक्रमाब्दात् त्रिसहस्रवर्षपूर्वं "**गौतम**" नामा वैयाकरणो बभूवेति महाभाष्या[5]-ज्ज्ञायते। तैत्तिरीयप्रा[6]तिशाख्ये, मैत्रायणीय[7]प्रातिशाख्ये च गौतमस्य व्याकरण-

---

१. "मध्यन्दिनस्यापत्यं माध्यन्दिनिराचार्यः"॥
(पदमञ्जरी/भाग २/पृष्ठ ७३९)

२. वामन-जयादित्य—काशिका, ६।२।३६।

३. "कारणशब्दस्तु व्युत्पादितः—
करोतेरपि कर्तृत्वे दीर्घत्वं शास्ति शौनकिः॥"
(चरकसंहिता/चिकित्सास्थान (२।२७) पर जज्झट की टीका)

४. "धाञ्कृञोस्तनिनह्योश्च बहुलत्वेन शौनकिः"।
(भट्टिकाव्य ३।४७ की जयमंगला टीका)

५. "आपिशलपाणिनीयव्याडीयगौतमीयाः"॥
(पतञ्जलि—व्याकरणमहाभाष्यम्/द्वितीय खण्ड, ६।२। आ० १। सू० ३६। पृष्ठ, ८२०। मोतीलाल बनारसीदास संस्करण, सन् १९६७)

६. "प्रथमपूर्वो हकारश्चतुर्थं तस्य सस्थानं प्लाक्षिकौण्डिन्यगौतमपौष्करसादीनाम्"।
(तैत्तिरीयप्रातिशाख्यम्, ५।३८)

७. मैत्रायणीयप्रातिशाख्यम्, ५।४०।

विषयकमतोल्लेखात् प्रतीयते यद् गौतमाचार्येण संस्कृतव्याकरणशास्त्रस्य प्रवचनं कृतमासीत् ।

वैक्रमाब्दात् त्रिसहस्रवर्षप्राचीनेन "**आपिशलि**"नाम्ना वैयाकरणेन संस्कृत-व्याकरणशास्त्रस्य प्रवचनं कृतमासीदिति पाणिनीयाष्टा[1]ध्यायी-व्याकरण[2]महाभाष्य-काशिका[3]वृत्तिप्रभृतिग्रन्थावलोकनेन ज्ञायते। आपिशलव्याकरणे अष्टावध्याया आसन्निति शाकटायन-व्याकरणस्य जैनाचार्यपाल्यकीर्तिप्रणीताया अमोघा[4]वृत्तेः यक्षवर्मकृतायाश्चिन्ता[5]मणिवृत्तेरवलोकनेन च ज्ञायते ।

वैक्रमाब्दात् त्रिसहस्रवर्षपूर्वं एव "**काश्यप**"नामा वैयाकरणो बभूव, येन संस्कृतव्याकरणशास्त्रस्य प्रवचनं कृतमिति पाणिनीयाष्टा[6]ध्यायी-वाजसनेय[7]प्रातिशाख्यावलोकनेन ज्ञायते । काश्यपव्याकरणस्य किमपि सूत्रन्त्वद्यावधि नोपलभ्यते; परन्तु शुक्लयजुः[8]प्रातिशाख्ये निपातानां काश्यपत्वमुक्तम् ।

वैक्रमाब्दात् त्रिसहस्रवर्षप्राचीनेन "**चाक्रवर्म्मण**"नाम्ना वैयाकरणेन संस्कृत-

---

१. वा सुप्यापिशलेः । ( पाणिनि-अष्टाध्यायी, ६।१।९२ )

२. एवं च कृत्वाऽऽपिशलेराचार्यस्य विधिरुपपन्नो भवति—धेनुरनजिकमुत्पादयति । ( पतंजलि—व्याकरणमहाभाष्यम्, ४।२। आ० १। सू० ४५) पृ० ४१७ । मोतीलाल बनारसीदास संस्करण । द्वितीयखण्डम्, सन् १९६७ ।

३. वामन-जयादित्य-काशिका, ७।३।८६ । न्यास, ४।२।४५ । कैयटकृतं महाभाष्यप्रदीपम्, ५।१।२१ । तन्त्रप्रदीपम्, ७।३।८६ ।

४. अष्टका आपिशलपाणिनीयाः । ( शाकटायनव्याकरणस्य जैनाऽऽचार्यपाल्यकीर्तिकृता अमोघावृत्तिः, ३।२।१६१ )

५. शाकटायनव्याकरणस्य यक्षवर्मकृता चिन्तामणिवृत्तिः, २।४।१८२ ।

६. तृषिमृषिकृषेः काश्यपस्य । ( पाणिनि-अष्टाध्यायी, १।२।२५ ) नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ( तदेव, ८।४।६७ )

७. लोपं काश्यपशाकटायनौ । ( वाजसनेयप्रातिशाख्यम्, ४।५ )

८. निपातः काश्यपः स्मृतः । ( शुक्लयजुःप्रातिशाख्यम्, ८।५१ )

व्याकरणशास्त्रस्य प्रवचनं विहितमिति पाणिनीयाष्टा[१]ध्यायी-उणादिसूत्र[२]-भट्टोजिदीक्षितप्रणीतशब्दकौस्तु[३]भादिग्रन्थावलोकनेन ज्ञायते। अद्यावधि चाक्रवर्म्मणव्याकरणस्य किमपि सूत्रं नोपलब्धम्; परन्तु शब्दकौस्तुभे भट्टोजिदीक्षितेन माघकवेः शिशुपालवधे प्रयुक्ते 'द्वयेषाम्'' इत्यस्मिन् पदे चाक्रवर्म्मणव्याकरणानुसारेण ''द्वय'' इत्यस्य सर्वनामसंज्ञा भवतीत्युक्तम्।

वैक्रमाब्दात् त्रिसहस्रवर्षपूर्वमेव ''**भारद्वाज**''नामा वैयाकरणो बभूवेति [४]पाणिनीयाष्टाध्याय्यां तस्य नामोल्लेखाज्ज्ञायते। यद्यप्यनेके भारद्वाजाः समभूवन्; परन्तु पाणिनीयाष्टाध्याय्यामुल्लिखितो वैयाकरणभारद्वाजो दीर्घजीविनमस्य बार्हस्पत्यस्य वैयाकरणभरद्वाजस्य पुत्रो द्रोणभारद्वाज इति श्री पं० युधिष्ठिर-मीमांस[५]कानाम्मतम्। अस्य व्याकरणस्य स्वरूपादिविषये न किञ्चिज्ज्ञायते।

वैक्रमाब्दात् त्रिसहस्रवर्षपूर्वमेव ''**शाकटायन**''नामा वैयाकरणो बभूव। [६]पाणिनीयाष्टाध्याय्यां वाजसनेयप्रातिशाख्ये[७] ऋक्प्रातिशाख्ये[८] यास्काचार्यप्रणीते

---

१. ईज्याक्रवर्म्मणस्य। ( पाणिनि-अष्टाध्यायी, ६।१।१३० )

२. कपश्चाक्रवर्म्मणस्य। ( उणादि० ३।१४४ )

३. 'यत्तु कश्चिदाह-चाक्रवर्म्मणव्याकरणे द्वयपदस्याऽपि सर्वनामताभ्युपगमात् तद्रीत्या अयं प्रयोग इति, तदपि न। मुनित्रयमतेनेदानीं साध्वसाधुविभागः। तस्यैवेदानीन्तनशिष्टैर्वेदाङ्गतया गृहीतत्वात्। दृश्यन्ते हि नियतकालाः स्मृतयः। यथा-कलौ पाराशरी स्मृतिरिति। ( भट्टोजिदीक्षित—शब्दकौस्तुभम्, १।१।२७ )

४. ऋतो भारद्वाजस्य। ( पाणिनि—अष्टाध्यायी, ७।२।६३ )

५. द्रष्टव्यम्, पं० युधिष्ठिर मीमांसक—संस्कृत व्याकरण शास्त्र का इतिहास। प्रथम भाग। पृ० १५९। सं० २०३० संस्करण।

६. लङः शाकटायनस्यैव। ( पाणिनि—अष्टाध्यायी, ३।४।१११ ) व्योर्लघु-प्रयत्नतरः शाकटायनस्य। ( तदेव, ८।३।१८ ) त्रिप्रभृतिषु शाकटायनस्य। ( तदेव, ८।४।५० )

७. वाजसनेयप्रातिशाख्यम्, ३।९, १२, ८७ इत्यादि।

८. ऋक्प्रातिशाख्यम्—१।१६; १३।३९।

निरुक्ते[1] च शाकटायनाचार्यस्य मतोल्लेखोऽस्ति। महाभाष्येऽपि[2] शाकटायनस्य व्याकरणशास्त्रप्रवक्तृत्वमङ्गीकृतम्।

वैक्रमाब्दात् पञ्चाशदुत्तरनवशताधिकद्विसहस्र-(२९५०) वर्षपूर्वं "**व्याडि**" नामा वैयाकरणो बभूव। वैयाकरणस्य व्याडेराचार्यस्योल्लेखो[3] महाभाष्ये[4] ऋक्प्रातिशाख्ये[5] काशिकावृत्ति[6]--भाषावृत्ति[7]प्रभृतिषु ग्रन्थेष्ववलोक्यते। व्याडेराचार्यस्य व्याकरणे दश अध्याया आसन्। अनेनाचार्येण एकः संग्रहग्रन्थोऽपि प्रणीतः, यस्योल्लेखो व्याकरण[8]महाभाष्यादिग्रन्थेषु दृश्यते। व्याडेः संग्रहग्रन्थो भर्तृहरेः वाक्यपदीयवत् संस्कृतव्याकरणशास्त्रस्य दार्शनिको ग्रन्थ आसीत्।

---

१. तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च। ( यास्क—निरुक्तम्, १।४।१ )

२. व्याकरणे शकटस्य च तोकम्। ( पतञ्जलि—व्याकरणमहाभाष्यम्, ३।३।१। आ० १। पृ० २०४। मोतीलाल बनारसीदास संस्करण। द्वितीय खण्ड सन् १९६७ )

३. आपिशलपाणिनीयव्याडीयगौतमाः। ( तदेव, ६।२। आ० १। सूत्र २६। पृ० ८२० )

४. द्रव्याभिधानं व्याडिः। ( तदेव १।२। आ० ३। सू० ६४। पृ० ९४ )

५. ऋक्प्रातिशाख्यम्, २।२३, २८; ६।४६; १३।३१, ३७।

६. व्याड्युपज्ञं दुष्करणम्। ( वामन-जयादित्य—काशिकावृत्तिः, २।४।४१ )

७. इकां यण्भिर्व्यवधान व्याडिगालवयोरिति वक्तव्यम्। ( पुरुषोत्तमदेव—भाषावृत्तिः, ६।१।७० )

८. "संग्रहे तावत् प्राधान्येन परीक्षितम्—नित्यो वा स्यात् कार्यो वा। तत्रोक्ता दोषाः प्रयोजनान्यप्युक्तानि। तत्र त्वेष निर्णयः—यद्येव नित्योऽथापि कार्यः, उभयथाऽपि लक्षणं प्रवर्त्यम्। संग्रहे कार्यप्रतिद्वन्द्विभावान्मन्यामहे नित्यपर्यायवाचिनो ग्रहणमिति।" ( पतञ्जलि—व्याकरणमहाभाष्यम्, अ० १। पा० १। आ० १ )

'एवं च संग्रहादिषु तदुदाहरणदानमसंगतं स्यात्' (भाष्यप्रदीपोद्योते, ४।२।३९। नागेशभट्टः )

वैक्रमाब्दात् पञ्चाशदुत्तरनवशताधिकद्विसहस्र-( २९५० ) वर्षपूर्वमेव "**सेनक**" नामा वैयाकरणो बभूव, सः संस्कृतव्याकरणशास्त्रस्य ग्रन्थम्प्रणिनायेति पाणिनीयाष्टाध्याय्यां[1] तस्य मतावलोकनेन ज्ञायते।

वैक्रमाब्दात् पञ्चाशदुत्तरनवशताधिकद्विसहस्र-(२९५०) वर्षपूर्वमेव '**स्फोटायन**' नामा वैयाकरणो बभूवेति पाणिनीयाष्टाध्याय्यां[2] तस्य मतावलोकनेन ज्ञायते। अस्यापरं नाम "औदुम्बरायण" इत्यप्यासीत्। वैयाकरणानां महत्त्वपूर्णस्य स्फोटतत्त्वस्य विशेषज्ञ आचार्य आसीदयमिति पदमञ्जरीकारस्य हरदत्तस्य[3] मतम्।

वैक्रमाब्दात् एकोनत्रिंशच्छतवर्षपूर्वं ( २९०० ) "**पाणिनि**"नामा वैयाकरणो बभूव। पाणिनेः कालविषये विद्वत्सु वैमत्यं वर्तते। तत्रानेके आधुनिका विद्वांसो भाषावैज्ञानिकाश्च "पाणिनिम्" ईशवीयसंवत्सरात् पञ्चमशतक-( ५०० ) प्राचीनमिति स्वीकुर्वन्ति; परन्तु पण्डितयुधिष्ठिरमीमांसकमहोदया अस्य कालं वैक्रमाब्दात् २९०० वर्षपूर्वमिति स्वीकुर्वन्ति। विषयेऽस्मिन्नतिविस्तरेणाग्रे विचारयिष्यते। पाणिनिः महेश्वराचार्याद् यथाविधि व्याकरणशास्त्रं सम्यगधीत्य तदुपदिष्टचतुर्दशमाहेश्वरसूत्राण्याधारीकृत्य "अष्टाध्यायी"ग्रन्थम्प्रणिनाय। ग्रन्थोऽयं विश्वस्मिन्नद्वितीयो वैज्ञानिकः संस्कृतभाषाव्याकरणप्रतिपादकः सन् लौकिकवैदिकोभयशब्दाननुशास्ति। पाणिनिनाऽऽचार्येण धातुपाठगणपाठ-उणादिसूत्र-लिङ्गानुशासन-शिक्षासूत्र-जाम्बवतीविजय-द्विरूपकोषप्रभृतयो ग्रन्था अपि प्रणीता इत्यग्रे सविस्तरं वर्णयिष्यते।

"**कात्यायन**"नामा वैयाकरणः अष्टाध्यायीग्रन्थमाधारीकृत्य वार्तिकसूत्राणि प्रणिनाय। श्रीपण्डितयुधिष्ठिरमीमांसकमतानुसारेण याज्ञवल्क्यस्य पौत्रो वररुचि-कात्यायन एव पाणिनीयाष्टाध्याय्या वार्तिककारः। अस्य कालो वैक्रमाब्दात् २९०० वर्षपूर्वमिति स्वीकर्तुं शक्यते।

---

१. गिरेश्च सेनकस्य। ( पाणिनि-अष्टाध्यायी, ५।४।११ )

२. अवङ् स्फोटायनस्य। ( तदेव, ६।१।१२३ )

३. "स्फोटोऽयनं परायणं यस्य स स्फोटायनः, स्फोटप्रतिपादनपरो वैयाकरणाचार्यः। ये त्वौकारं पठन्ति, ते नडादिषु अश्वादिषु वा ( स्फोटशब्दस्य ) पाठं मन्यन्ते।" ( काशिका ३।१।१२३ की पदमञ्जरी-टीका )

वैक्रमाब्दाद् द्विसहस्र-( २००० ) वर्षप्राचीनेन "**पतञ्जलि**"नाम्ना वैयाकरणेन पाणिनेरष्टाध्यायीसूत्राणि, वररुचिकात्यायनस्य वार्तिकानि चाधारीकृत्य व्याकरणमहाभाष्यम्प्रणीतम् । महाभाष्यं संस्कृतव्याकरणशास्त्रस्य प्रामाणिको ग्रन्थोऽस्ति । सूक्ष्मतया पर्यालोचनेन प्रतीयते यत् "महाभाष्यम्" सर्वविद्यानामाकरग्रन्थोऽस्ति । तदुक्तं भर्तृहरिणा[१] —

"कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥"

वैक्रमाब्दाद् द्विसहस्र–( २००० ) वर्षपूर्वमेव "**शर्ववर्मा**" नाम्ना वैयाकरणेन संस्कृतव्याकरणशास्त्रस्य कातन्त्रशाखा प्रवर्तिता । सः सुप्रसिद्धस्य बृहत्कथाकर्तुर्गुणाढ्यस्य प्रतिद्वन्द्वी विद्वानासीदिति जनश्रुतिः । इदमेव व्याकरणं कातन्त्र-कलापक-कौमार-नामभिरुच्यते ।

वैक्रमाब्दान्न्यूनातिन्यूने द्वादशशत–( १२०० ) वर्षपूर्वं बौद्धविदुषा "**चन्द्रगोमि**"नाम्ना वैयाकरणेन "चान्द्रव्याकरणम्" प्रणीतम् ।

वैक्रमाब्दस्य प्रथमशतके "क्षपणक"नामा वैयाकरणो बभूव, येन संस्कृतव्याकरणशास्त्रस्य[२] कश्चिद् ग्रन्थो विरचित इति उज्ज्वलदत्तप्रणीतोणादिवृत्तौ[३] क्षपणकनाम्ना उद्धृतपाठावलोकनेन ज्ञायते यत् क्षपणकेनोणादिसूत्राणां काचन व्याख्या प्रणीता आसीत् ।

वैक्रमचतुर्थशतके "**भर्तृहरि**"नामा वैयाकरणो बभूव । एतेन व्याकरणमहाभाष्योपरि "महाभाष्यदीपिका" नाम्नी टीका प्रणीता । ततः परम् वाक्य-

---

१. भर्तृहरि--वाक्यपदीयम् ,काण्ड २ । कारिका ४८६ ।

२. अत एव नावमात्मानं मन्यत इति विगृह्य परत्वादनेन ह्रस्वत्वं बाधित्वा अमागमे सति नावंमन्ये इति क्षपणकव्याकरणे दर्शितम् ।
( तन्त्रप्रदीपम् १।४।५५ । भारतकौमुदी, भाग २, पृ० ८९३ पर उद्धृत )

३. क्षपणकवृत्तौ अत्र "इति" शब्द आद्यर्थे व्याख्यातः । ( उज्ज्वलदत्तविरचिता उणादिवृत्तिः, पृ० ६० )

पदीयम् ( काण्डत्रयात्मकम् ), वाक्यपदीयस्य प्रथमद्वितीयकाण्डस्य स्वोपज्ञ-टीका, नीतिशतकम्, शृङ्गारशतकम्, वैराग्यशतकञ्चैते ग्रन्था अप्यनेन प्रणीताः।

वैक्रमपञ्चमशतकीयो "**देवनन्दी**"नामा ( अपरं नाम पूज्यपादो **जिनेन्द्रश्च** ) वैयाकरणो जैनसम्प्रदाये जिनेन्द्रशाखाप्रवर्तक इति प्रायः सर्वैरपि स्वीक्रियते। देवनन्दीप्रणीतस्य "जैनेन्द्र-व्याकरण"ग्रन्थस्य सम्प्रति औदीच्यम्, दाक्षिणात्यञ्चेति संस्करणद्वयमुपलभ्यते। तत्र प्रथमसंस्करणे त्रिसहस्राणि सूत्राणि, द्वितीयसंस्करणे च त्रिसहस्रसप्तशतसूत्राणि सङ्कलितानि। एतेषां सूत्राणां निष्पन्ना विषयः पाणिनीयव्याकरणापेक्षयाऽतिदुष्करा विद्यन्ते। देवनन्दिना पाणिनीयाष्टाध्यायी-ग्रन्थस्य "शब्दावतारन्यास"नाम्नी टीका स्वव्याकरणस्योपरि 'जैनेन्द्रन्यास'नाम्नी टीका च प्रणीता इत्यधोलिखितेन श्लोकेनावगम्यते —

"न्यासं जैनेन्द्रसंज्ञं[1] सकलबुधनतं पाणिनीयस्य भूयो-
न्यासं शब्दावतारं मनुजततिहितं वैद्यशास्त्रं च कृत्वा।
यस्तत्त्वार्थस्य टीकां व्यरचयदिह भात्यसौ पूज्यपादः-
स्वामी भूपालवन्द्यः स्वपरहितवचः पूर्णदृग्बोधवृत्तः॥"

वैक्रमषष्ठशतकात् पूर्वं समुत्पन्नः "**वामन**"नामा वैयाकरणो ( ३५०, ४०० इति वा वैक्रमाब्द इत्यप्यस्य कालः स्वीकर्तुं शक्यते इति युधिष्ठिर[2]मीमांसकाः) "विश्रान्तविद्याधर" नामानं व्याकरणग्रन्थं व्यरचयत्। वर्धमानेन गणरत्नमहोदधौ अस्य व्याकरणस्यानेकानि सूत्राण्युद्धृतानि, वामनश्च "सहृदय[3]चक्रवर्ती" इत्युपाधिना विभूषितः।

वैक्रमसप्तमशतके समुत्पन्नाभ्यां '**वामन-जयादित्या**'भिधाभ्यां वैयाकरणाभ्यां अष्टाध्याय्युपरि "काशिकावृत्तिः" प्रणीता। सा च वृत्तिः सम्प्रत्युपलभ्यमानेषु

१. शिभोगा जिले की नगर तहसील का ४३ वाँ शिलालेख। 'जैन साहित्य और इतिहास', पृ० १०७, टि० १, द्वितीय संस्करण पृ० ३३, टि० २।

२. द्रष्टव्यम्, पं० युधिष्ठिर मीमांसक—संस्कृत व्याकरणशास्त्र का इतिहास, प्रथम भाग, तृतीय संस्करण, पृ० ५९१, ५९५।

३. सहृदयचक्रवर्तिना वामनेन तु हेम्नः इति सूत्रेण ....(गणरत्नमहोदधि, पृ० १६८)

पाणिनीयव्याकरणग्रन्थेषु महाभाष्य-भर्तृहरिप्रणीत-महाभाष्यदीपिकाग्रन्थानन्तरं प्राचीनतमा महत्त्वपूर्णा च विद्यते। तत्र काशिकावृत्तौ प्रथम त आरभ्य पञ्चमाध्यायं यावत् जयादित्यकृता वृत्तिः, ६तः ८ अध्यायं यावद् वामनकृता वृत्तिरिति काशिका-शैल्याः सूक्ष्मदृष्ट्यावलोकनेनावगम्यते। तत्र काशिकाकारस्य वामनस्य कालः ७०० वैक्रमाब्दात् पूर्वम्. जयादित्यस्य च कालः ६५० वैक्रमाब्द इति स्वीकर्तुं शक्यते।

सम्भवतः अष्टमवैक्रमशतके[1] ७५० ईशवीये ८०७ वैक्रमाब्दे वा समुत्पन्नो **'भट्ट-अकलङ्क'**नामा वैयाकरणः कस्यचिद् व्याकरणस्य प्रवचनं चकार। तस्य स्वोपज्ञशब्दानुशासनस्य मञ्जरीमकरन्दटीकायाः प्रारम्भिकभागस्यैको हस्तलेखः लन्दन-स्थित इण्डिया आफिसग्रन्थालये सुरक्षितो वर्तते।

वैक्रमनवमशतकस्योत्तरार्द्धे ( सं० ८७१-९२४ ) समुत्पन्नेन **"पाल्यकीर्ति**[2]**"** ( शाकटायन ) इत्यभिधेयेन श्वेताम्बरीयजैनविदुषा "शब्दानुशासनम्" प्रणीतम्।

१-"अकलङ्कचरित" में भट्ट अकलङ्क का बौद्धों के साथ महान् वाद का काल विक्रमाब्द-शताब्दीय ७०० दिया है। भारतवर्ष का बृहद् इतिहास भाग १, पृ. १२४, द्वि० संस्करण। "संस्कृत साहित्य का संक्षिप्त इतिहास" पृ. १७३ में श्री सीताराम जोशी ने भट्ट अकलङ्क का काल ७५० ई.—८०७ वि० स्वीकार किया है।

पं० युधिष्ठिर मीमांसक—संस्कृत व्याकरणशास्त्र का इतिहास, प्रथम भाग, तृतीय संस्करण, सं० २०३०, पृष्ठ ५८५, ५९६ )

२-इस अभिनव शाकटायन व्याकरण के कर्त्ता का वास्तविक नाम "पाल्य-कीर्ति" है। वादिराज सूरि ने "पार्श्वनाथचरित" में लिखा है—"कुतस्त्या तस्य सा शक्तिः पाल्यकीर्तेर्महौजसः। श्रीपदश्रवणं यस्य शाब्दिकान् कुरुते जनान्।" इस श्लोक की व्याख्या में पार्श्वनाथचरित की पञ्जिका टीका के प्रणेता शुभचन्द्र ने लिखा—"तस्य पाल्यकीर्तेर्महौजसः श्रीपदश्रवणं श्रिया उपलक्षितानि पदानि शाकटायनसूत्राणि, तेषां श्रवणमाकर्णनम्। ( तदेव प्रथम भाग, तृतीय संस्करण, सं २०३०, पृष्ठ ५९७–५९८ )

ततः स्वयमेव तस्योपरि "अमोघावृत्ति" टीकां विलिख्य शाकटायनव्याकरण-परम्परा प्रवर्तिता। ग्रन्थोऽयं पाणिनीयचान्द्रजैनेन्द्रव्याकरणान्याधारीकृत्य लिखित आसीत्।

वैक्रमदशमशतकोत्तरार्द्धे "शिवस्वामी" नामा महाकविः संस्कृतसाहित्ये सुप्रसिद्धः समुत्पन्नः। तस्य कफ्फणाभ्युदयमहाकाव्यमेकं महत्तमं काव्यं वरीवर्ति। वैयाकरणोऽप्ययं बभूव, अनेनापि व्याकरणशास्त्रप्रवचनं विहितम् इति क्षीरतरङ्गिणी-गणरत्नमहोदधि-कातन्त्रगण धातुवृत्ति-माधवीया–धातुवृत्तिप्रभृतिभ्यो-ग्रन्थेभ्योऽवगम्यते।

वैक्रमैकादशशतके (सं० १०७५-१११०वि०) धाराधीश्वरेण, परमारवंशीयेन, विद्यारसिकेन, देववाणीपुनरुद्धारकेन[1] "महाराजेन **भोजदेवेन**" "सरस्वतीकण्ठा-

---

१. महाराज भोजदेव स्वयं महाविद्वान्, विद्यारसिक और विद्वानों का आश्रय-दाता था। उसने लुप्तप्राय संस्कृत-भाषा का पुनः एकबार उद्धार किया। वल्लभदेवकृत भोजप्रबन्ध में लिखा है —

"चाण्डालोऽपि भवेद्विद्वान् यः स तिष्ठतु मे पुरि।
विप्रोऽपि यो भवेन्मूर्खः स पुराद् बहिरस्तु मे॥"

तन्तुवाय (जुलाहे) ने राजा के पास जाकर जिन चमत्कारी शब्दों में अपना दुःख निवेदन किया, वे देखने योग्य हैं। तन्तुवाय ने कहा—

"काव्यं करोमि नहि चारुतरं करोमि,
यत्नात् करोमि यदि चारुतरं करोमि।
भूपालमौलिमणिमण्डितपादपीठ-
हे साहसाङ्क! कवयामि वयामि यामि॥" भोजप्रबन्ध।

(पं० युधिष्ठिर मीमांसक—संस्कृत व्याकरणशास्त्र का इतिहास, तृतीय संस्करण, सं० २०३०, पृ० ६०६)

भरण"[१] इत्यभिधेयं बृहद् व्याकरणम्प्रणीतम्। व्याकरणेऽस्मिन्नष्टावध्यायाः सन्ति। ग्रन्थेऽस्मिन् षट्सहस्राणि चतुःशतानि एकादशसूत्राणि सन्ति।

एकादशशतकोत्तरार्धे (वि० १०८२) "**दयापालमुनि**"नाम्ना वैयाकरणेन "रूपसिद्धि"नामानं ग्रन्थं विलिख्य शाकटायनव्याकरणस्य नवीनीकरणं विहितम्।

एकादशशतकोत्तरार्धे (वि० १०८०) समुत्पन्नेन[२] "**आचार्यबुद्धिसागरसूरि**" नाम्ना वैयाकरणेन "बुद्धिसागर"नामा ग्रन्थो विरचित इति आचार्यहेमचन्द्रप्रणीत-स्वोयलिङ्गानुशासनविवरण[३]—हैमाभिधान[४]चिन्तामणिग्रन्थाव-

---

१. भोजदेव ने योगसूत्रवृत्ति के प्रारम्भ में स्वयं लिखा है —

"शब्दानामनुशासनं विदधता पातञ्जले कुर्वता-
वृत्तिं राजमृगाङ्कसंज्ञकमपि व्यातन्वता वैद्यके।
वाक्चेतोवपुषां मलः फणिभृतां भर्त्रेव येनोद्धृत-
स्तस्य श्रीरणरङ्गमल्लनृपतेर्वाचो जयन्त्युज्ज्वलाः॥"

इस श्लोक के अनुसार, सरस्वतीकण्ठाभरण, योगसूत्रवृत्ति और राजमृगाङ्क ग्रन्थों का रचयिता एक ही व्यक्ति है, यह स्पष्ट है।

(पं. युधिष्ठिर मीमांसक—संस्कृत—व्याकरण—शास्त्र का इतिहास, तृतीय-संस्करण, २०३०, भाग १, पृष्ठ ६०५)

२—श्रीविक्रमादित्यनरेन्द्रकालात् साशीतिके याति समासहस्रे।
सश्रीकजावालिपुरे तदाद्यं दृब्धं मया सप्तसहस्रकल्पम्॥

[पं. चन्द्रसागरसूरि-सम्पादित सिद्धहैमशब्दानुशासन, बृहद्वृत्ति-प्रस्तावना]

तदनुसार बुद्धिसागर ने वि. सं. १०८० में उक्त व्याकरण की रचना की थी। अतः बुद्धिसागर का काल विक्रम की ग्यारहवीं शताब्दी का उत्तरार्ध है, यह स्पष्ट है।

(तदेव, प्रथम भाग, पृ० ६१४)

३—उदरं जाठरव्याधियुद्धानि। जठरे त्रिलिङ्गमिति बुद्धिसागरः। (हेमचन्द्रकृत-स्वीयलिङ्गानुशासनविवरण, पृष्ठ १०। इसी प्रकार पृष्ठ ४, १०३, १३३ पर भी निर्देश मिलता है।)

४—[उदरम्] त्रिलिङ्गोऽयमिति बुद्धिसागरः। (हैम—अभिधानचिन्तामणि, पृष्ठ २४५)

लोकनेन ज्ञायते। बुद्धिसागरोऽयं श्वेताम्बरीयसम्प्रदायस्याचार्य आसीदिति अभयदेवसूरि[1]प्रबन्धावलोकनेन ज्ञायते। बुद्धिसागरव्याकरणे अष्टसहस्रश्लोकास्सन्तीति प्रभावकचरिते दृश्यते[2]।

वैक्रमसंवत्सरस्यैकादशशतकोत्तरार्द्धे जैयट-उपाध्याय[3]सुतेन, महेश्वरशिष्येण[4] "**कैयट**"नामाभिधेयेन वैयाकरणेन व्याकरणमहाभाष्योपरि "प्रदीप"नाम्नी टीका प्रणीता। महाभाष्योपरि समुपलब्धटीकासु भर्तृहरेराचार्यस्य महाभाष्यदीपिकानन्तरमियमेव प्राचीनतमा टीकेति नास्ति सन्देहलेशः। प्रदीपेन कैयटस्य व्याकरणविषये प्रौढं पाण्डित्यम्प्रतीयते। प्रदीपमन्तरेण महाभाष्यं दुरूहमेव, नहि पूर्णतयाऽवगन्तुं शक्यते, इति कृत्वा पाणिनीयसम्प्रदाये कैयटप्रणीत-"महाभाष्य-प्रदीपस्य" महत्त्वपूर्णं स्थानं वरीवर्ति।

द्वादशवैक्रमशतके "**भद्रेश्वरसूरि**"नामाभिधेयेन वैयाकरणेन "दीपक" नामाभिधं व्याकरणम्प्रणीतमिति वर्धमानस्य "गणरत्नमहोदधि"[5] ग्रन्थावलोकनेन ज्ञायते। व्याकरणमिदं सम्प्रति नोपलभ्यते।

---

१–बुद्धिसागर सूरि का उल्लेख पुरातन-प्रबन्धसंग्रह, पृष्ठ ९५ के अभयदेव सूरि के प्रबन्ध में मिलता है।

२–श्रीबुद्धिसागरसूरिश्चक्रे व्याकरणं नवम्। सहस्राष्टकमानं तत् श्रीबुद्धिसागराभिधम्।। (प्रभावकचरित)

३–इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे..............।।
(महाभाष्यप्रदीपम्, प्रत्येक अध्याय एवं आह्निक का अन्तिम वाक्य)

४–द्रष्टव्यम्, वेल्वेल्कर—सिस्टम आफ संस्कृत ग्रामर—पैराग्राफ २८।

५–गणरत्नमहोदधिकार वर्धमान ने लिखा है—
मेधाविनः प्रवरदीपककर्तृयुक्ताः। (गणरत्नमहोदधि, पृ. १)
इसकी व्याख्या में वह लिखता है—दीपककर्ता भद्रेश्वरसूरिः। प्रवरश्चाऽसौ दीपककर्ता च प्रवरदीपककर्ता, प्राधान्यं चास्याऽऽधुनिकवैयाकरणापेक्षया। (तदेव, पृ. २)

वैक्रमद्वादशशतके "**पुरुषोत्तमदेव**"नामा वैयाकरणो बभूव। तेनाऽष्टाध्याय्युपरि "भाषावृत्तिः" प्रणीता। तेन महाभाष्योपरि "प्राणपणा"[१] नाम्नी लघुवृत्तिरपि प्रणीता। तेन कुण्डली-व्याख्यान–कारककारिका–परिभाषावृत्ति–ज्ञापकसमुच्चय–उणादिवृत्ति–कारकचक्र-प्रभृतयो व्याकरणग्रन्था अपि प्रणीताः।

वैक्रमद्वादशशतकोत्तरार्द्धे (११४०) लङ्कास्थबौद्धविदुषा "**धर्मकीर्तिना**" "रूपावतार" इत्यभिधेयो व्याकरणग्रन्थः प्रणीतः।

वैक्रमद्वादशशतकोत्तरार्द्धे (११२०–११२५ वि०) समुत्पन्नेन "**वर्धमान**-" नामाभिधेयेन वैयाकरणेन "गणरत्नमहोदधि"नामा अतिमहत्त्वपूर्णो ग्रन्थः प्रणीतः, यो वैयाकरणनिकाये सुप्रसिद्धः; किन्तु वर्धमानेन कस्यचित् स्वीयशब्दानुशासनस्य[२] प्रवचनं विहितमासीदिति न सम्यग् ज्ञायते।

वैक्रमद्वादशशतकोत्तरार्द्धे (११४५–१२२९) समुत्पन्नेन जैनाचार्य–"**हेमचन्द्रसूरि**"–नाम्ना वैयाकरणेन "सिद्धहैमशब्दानुशासनम्" नामाभिधं व्याकरणं विरचितम्। ततश्च स्वयमेव तस्योपरि "स्त्रोपज्ञा" (६००० श्लोकपरिमाणा),

---

१–पुरुषोत्तमदेवकृत भाष्यवृत्ति का व्यख्याता शंकर पण्डित लिखता है—

अथ भाष्यवृत्तिव्याचिख्यासुर्देवो विघ्नविनाशाय सदाचारपरिप्राप्तमिष्टदेवतानतिस्वरूपं मङ्गलमाचचार। तत्पद्यं यथा—

नमो बुधाय बुद्धाय यथा त्रिमुनिलक्षणम्।
विधीयते प्राणपणा भाषायां लघुवृत्तिका॥

(द्रष्टव्यम्, इण्डियन हिस्टोरिकल, क्वार्टर्ली, सेप्टेम्बर १९४३, पृ० २०१)

२. संक्षिप्तसार की गोयीचन्द्रकृत टीका में एक पाठ है—

चन्द्रोऽनित्यां वृद्धिमाह। भागवृत्तिकारस्तु नित्यं वृद्ध्यभावम्। वौ श्रमेर्वा इति वर्धमानः।

(संक्षिप्तसार, गोयीचन्द्र टीका, सन्धिप्रकरण, सूत्र ६)

इस उद्धरण से स्पष्ट है कि वर्धमान ने कोई शब्दानुशासन रचा था और उसी के अनुरूप उसने गणपाठ को श्लोकबद्ध करके उसकी व्याख्या की थी।

(द्रष्टव्यम्, पं० युधिष्ठिर मीमांसक, संस्कृतव्याकरणशास्त्र का इतिहास, भाग १ पृ. ६१६, तृ० सं०, २०३० वै०)

''मध्या'' ( १२००० श्लोकपरिमाणा ), ''बृहती'' (१८००० श्लोकपरिमाणा) चेति वृत्तित्रयं विलिख्य नवीनसम्प्रदायः प्रवर्तितः। पुनश्च ''बृहती''–वृत्त्युपरि मेघविजयेन ''शब्दचन्द्रिका'' टीका प्रणीता।

वैक्रमद्वादशशतकोत्तरार्द्धे ( ११८८-१२५० वि० ) ''**मलयगिरि**'' नामाभिधेयजैनविदुषा ''शब्दानुशासनम्'' नाम व्याकरणम्प्रणीतम्, यत् सं० २०२२ वैक्रमाब्दे ( मार्च १९६७ ई. ) प्रकाशितम्। आस्मिन् व्याकरणे, तस्य स्वोपज्ञवृत्तौ च पञ्चसहस्रपरिमिताः श्लोकाः सन्ति। वैक्रमत्रयोदशशतकपूर्वार्द्धे ( १२३० ) शरणदेवनामाभिधेयबौद्ध विदुषा[१] दुर्घटवृत्तिः प्रणीता।

वैक्रमत्रयोदशशतके ( १३०० वि० ) **क्रमदीश्वरेण** ''संक्षिप्तसारो'' नाम व्याकरणग्रन्थो विलिखितः, जौमरशाखा च प्रवर्तिता। ततश्च जूमरनन्दिना ( १३०० वि० ) ''रसवती'' टीका विलिखिता, गोयीचन्द्रेण च ''गोयीचन्द्रिका'' टीका विलिखिता।

वैक्रमत्रयोदशशतकस्योत्तरार्द्धे (१२५० वि०) ''**नरेन्द्राचार्येण**'' ''सारस्वतव्याकरणं'' विरचितम्। तस्योपरि क्षेमेन्द्र-धनेश्वराऽनुभूतिस्वरूपाचार्य-अमृतभारतीप्रभृतिभिरनेकैराचार्यैष्टीकाः प्रणीताः। तासु टीकास्वनुभूतिस्वरूपाचार्यस्य ''सारस्वतप्रक्रिया''टीकाऽतीव विद्वत्प्रियकारिणी आसीत्।

अस्मिन्नेव शतके ''**अभयचन्द्राचार्येण**'' ''प्रक्रियासंग्रहो'' विलिखितः, यः शाकटायनव्याकरणमाधारीकृत्य विलिखित आसीत्। १२५७ वैक्रमाब्दे 'कश्यप'' नामाभिधेयबौद्धभिक्षुवैयाकरणेन ''बालबोधिनी'' नाम्नी चान्द्रसूत्रवृत्तिः प्रणीता। तेन चान्द्रव्याकरणानुरूपं ''बालावबोध'' नाम व्याकरणमपि प्रणीतम्, यद् वरदराजस्य, लघुकौमुदीसममेवेति डॉ० वेल्वल्करमहोदयानाम्मतम्[२]।

---

१. नत्वा शरणदेवेन सर्वज्ञं ज्ञानहेतवे।
बृहद्भट्टजनाम्भोजकोशवीकासभास्वते ॥
( दुर्घटवृत्तिः, मङ्गलश्लोकः )

२. वेल्वेल्कर–सिस्टम आफ संस्कृत ग्रामर, पैरा नं० ४६।

वैक्रमचतुर्दशशतके ( १३२५-१३७० वि० ) **'बोपदेवेन'** मुग्धबोधव्याकरणं प्रणीतम्। बोपदेवेनैव 'कविकल्पद्रुम'नामा धातुपाठसंग्रहो विरचितस्तस्योपरि 'कामधेनु'नाम्नी टीकाऽपि रचिता। बोपदेवस्य व्याकरणग्रन्थोपरि नन्दकिशोर-भट्ट-रामानन्द-देवीदासप्रभृतिभिराचार्यैष्टीका विलिखिताः।

वैक्रमचतुर्दशशतकोत्तरार्द्धे (वि० १३७२) सुप्रसिद्धवेदभाष्यकारेण 'सायणाचार्येण' माधवीया धातुवृत्तिः प्रणीता। अस्मिन्नेव शतके ( वि० १४०० ) विमलसरस्वतिनामाभिधेयविदुषा 'रूपमाला' प्रणीता, पद्मनाभदत्तेन च पाणिनीयव्याकरणस्योपरि 'सुपद्म'ग्रन्थम्प्रणीय तस्योपरि' 'सुपद्मपञ्जिका'नाम्नी टीकाऽपि विलिखिता। अनेन उणादिवृत्ति-धातुकौमुदी-यङ्लुग्वृत्ति-परिभाषावृत्ति-प्रभृतयो व्याकरणग्रन्था अन्ये ग्रन्थाश्च प्रणीताः।

वैक्रमपञ्चदशशतके (१४५० वि०) शेषवंशीयेन **'श्रीरामचन्द्राचार्येण'** पाणिनीयव्याकरणस्योपरि 'प्रक्रियाकौमुदी' प्रणीता। षोडशशतकोत्तरार्द्धे ( वि० १५७५-१६५० ) अप्पयदीक्षितेन पाणिनीयव्याकरणस्योपरि 'सूत्रप्रकाश'नाम्नी टीका प्रणीता। अनेन 'पाणिनिवादनक्षत्रमाला' ग्रन्थोऽपि प्रणीतः।

अस्मिन्नेव शतके (वि० १५७०-१६५०) व्याकरणशास्त्रस्य धुरन्धराचार्येण "**भट्टोजिदीक्षित**"महोदयेन "वैयाकरणसिद्धान्तकौमुदी" विलिखिता। व्याकरणशास्त्रस्याध्ययनाध्यापनपरम्परायां नव्यव्याकरणरूपेणाऽस्य ग्रन्थस्य पाणिनीयाष्टाध्याय्या इव मौलिकत्वमौपयोगिकत्वञ्च विद्यते। अप्पयदीक्षितशिष्यो भट्टोजिदीक्षितः शब्द[1]कौस्तुभप्रौढमनोरमा-लिङ्गानुशासनवृत्ति-वैयाकरणमतोन्मज्जनग्रन्थानपि व्यरचयत्।

वैक्रमषोडशशतकोत्तरार्द्धे (वि० १५५१-१६००) "**ज्ञानेन्द्रसरस्वती**"नामाभिधेयविदुषा वैयाकरणसिद्धान्तकौमुदीग्रन्थस्य "तत्त्वबोधिनी" टीका प्रणीता।

---

१. इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शितम्।
विस्तरस्तु यथाशास्त्रं दर्शितः शब्दकौस्तुभे॥
(भट्टोजिदीक्षित-वैयाकरणसिद्धान्तकौमुदी/उत्तरकृदन्त/अन्तिम श्लोक)

"नीलकण्ठवाजपेयि"नामाभिधेयविदुषाऽस्मिन्नेव शतके (वि० १६००-१६७५) महाभाष्यस्य "भाष्यतत्त्वविवेक"नाम्नी, सिद्धान्तकौमुद्याश्च "सुखबोधिनी" टीका प्रणीता। अयमेव पाणिनीयदीपिका-परिभाषावृत्तिग्रन्थद्वयमपि व्यरचयत्।

वैक्रमषोडशशतकोत्तरार्द्धे (वि० १५५०-१६००) '**महामहोपाध्याय-अन्नम्भट्ट**' नामाभिधेयविदुषा अष्टाध्याय्युपरि 'पाणिनीयमिताक्षरा'नाम्नी वृत्तिः प्रणीता। अनेन महाभाष्यप्रदीपस्य 'प्रदीपोद्योतना'[1] टीकाऽपि प्रणीता। अयं मीमांसान्याय-सुधाया राणकोज्जीवनोटीका-ब्रह्मसूत्रव्याख्या मण्यालोकस्य सिद्धाञ्जनटीका-तर्क-संग्रहप्रभृतीन् ग्रन्थानपि व्यरचयत्।

वैक्रमसप्तदशशतके (वि०१६१७-१७३३)केरलप्रदेशवास्तव्येन '**नारायणभट्ट**'-विदुषा 'प्रक्रियासर्वस्व'ग्रन्थो विरचितः। नारायणभट्टः क्रियाक्रम-चमत्कार-चिन्तामणिधातुकाव्य-अपाणिनीयप्रामाणिकताप्रभृतीन् ग्रन्थानपि व्यरचयत्।

वैक्रमसप्तदशशतके '**वरदराजो**' मध्यसिद्धान्तकौमुदी-लघुसिद्धान्तकौमुदी-रामचन्द्राचार्यप्रणीतप्रक्रियाकौमुद्याः विवरणव्याख्याप्रभृतीन् ग्रन्थान् व्यरचयत्।

अस्मिन्नेव शतके (वि० १६००-१६७५) रङ्गोजिभट्टसुतेन महाराष्ट्रप्रदेशीयेन '**पण्डितकौण्डभट्ट**'महाभागेन भट्टोजिदीक्षितप्रणीत-वैयाकरणकारिकाणामुपरि टीका-रूपेण 'वैयाकरणभूषण'ग्रन्थो विरचितः, तस्यैव संक्षेपरूपेण 'वैयाकरणभूषणसार'-ग्रन्थोऽप्यनेन प्रणीतः। डॉ० आउफ्रेरूटमहोदयानां[2] मतानुसारेण कौण्डभट्टो वैयाकरण सिद्धान्तदीपिका-लघुवैयाकरणभूषणसार-स्फोटवाद-तर्कप्रदीप-तर्करत्न-न्यायपदार्थदी-पिकाप्रभृतीन् ग्रन्थानपि व्यरचयत्।

वैक्रमाऽष्टादशशतके (वि० १७३०-१८१०) शिवभट्टसुत--'**नागेशभट्टेन**' महा-भाष्यप्रदीपस्य 'उद्योत'नाम्नी टीका प्रणीता। अयं भट्टोजिदीक्षितपौत्रस्य हरि-

---

१. इति श्रीमहामहोपाध्यायाऽद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमला-चार्यस्य सूनोरन्नम्भट्टस्य कृतौ महाभाष्यप्रदीपोद्योतने........................॥
(महाभाष्यप्रदीपोद्योतना टीका/प्रति आह्निक के अन्त में।)

२. Aufrerut Catalogus Catalogorum.

दीक्षितस्य शिष्य आसीत् । नागेशभट्टो लघुशब्देन्दुशेखर-बृहच्छब्देन्दुशेखर-परिभाषेन्दुशेखर-वैयाकरणसिद्धान्तलघुमञ्जूषा-परमलघुमञ्जूषा-स्फोटवाद-महाभाष्यप्रत्याख्यानसंग्रह-जगन्नाथपण्डितराजप्रणीतरसगंगाधरटीकाप्रभृतीन् ग्रन्थानपि व्यरचयत् । नागेशभट्टेन व्याकरणातिरिक्ताः धर्मशास्त्र-ज्यौतिष-दर्शनाऽलङ्कारप्रभृतिविषयका ग्रन्थाश्च प्रणीताः ।

अस्मिन्नेव शतके (वि० १७४०-१८००) **'वासुदेववाजपेयीति'** नामाभिधेयविदुषा वैयाकरणसिद्धान्तकौमुद्याः 'बालमनोरमा' टीका प्रणीता । अयं महादेववाजपेयिपुत्रो विश्वेश्वरवाजपेयिशिष्यश्चासीत् ।

अस्मिन्नेव शतके (वि० १७४१) **'रामाश्रम'**नामाभिधेयविदुषा सारस्वतव्याकरणोपरि 'सिद्धान्तचन्द्रिका'नाम्नी टीका प्रणीता । अनेनैव तस्याः संक्षेपरूपेण 'लघुसिद्धान्तचन्द्रिका' ग्रन्थोऽपि प्रणीतः ।

अस्मिन्नेव शतके (वि० १७५०-१८२५) नागेशभट्टशिष्येण **'वैद्यनाथपायगुण्डे'**महाभागेन महाभाष्यप्रदीपोद्योतस्य 'छाया'नाम्नी व्याख्या प्रणीता । इयं नवाह्निकपर्यन्तैवोपलभ्यते ।

एकोनविंशतितमे शतके (सं० १८८१-१९४० वै०) औदीच्यब्राह्मणकुलोत्पन्नेन वैयाकरणकेसरिणा श्रीमत्परमहंसदण्डिस्वामिविरजानन्दसरस्वतिमहोदयानां शिष्येण **'श्रीमन्महर्षिदयानन्दसरस्वति'**महाभागेन पाणिनीयाऽष्टाध्याय्याः सूत्राणां 'अष्टाध्यायीभाष्य'नाम्नी वृत्तिः प्रणीता, इयमजमेरनगरस्थवैदिकपुस्तकालयात् प्रकाशिता । महर्षिदयानन्द एवाऽऽधुनिकेषु वैयाकरणेष्वेतादृशो वैयाकरण आसीत्, येन संस्कृतभाषायाः सम्पूर्णमपि व्याकरणं वैदिकव्याकरणयुतं हिन्दीभाषया प्रणीतम् । तद् 'वेदाङ्गप्रकाश'नाम्नाऽभिधीयते । अनेन सर्वत्र पाणिनेः पतञ्जलेराचार्यस्य च सिद्धान्ता एवाऽऽश्रिताः, भाष्यविरुद्धा अनार्षाश्च सिद्धान्ताः प्रत्याख्याताः । श्रीमता महर्षिदयानन्दसरस्वतिमहाभागेन स्वगुरोराज्ञया गुरुकुलेष्वष्टाध्यायिक्रमानुसारिणी प्राचीनाऽऽर्षाऽध्ययनाऽध्यापनपरम्परा प्रवर्तिता, या संस्कृतव्याकरणस्य प्राचीनव्याकरणपद्धतिरुच्यते ।

अस्मिन् विंशतितमे शतके वैयाकरणकेसरिणां श्रीमत्पण्डितहरनारायणत्रिपाठिमहोदयानां शिष्येण पदवाक्यप्रमाणज्ञ-**'श्रीमत्पण्डितब्रह्मदत्तजिज्ञासु'**महाभागेन गुरुकुलेषु महर्षिदयानन्दप्रवर्तितप्राचीनव्याकरणपद्धत्या पाणिनीयव्याकरणाऽध्ययनाध्यापनपरम्परा विकसिता। एतत्प्रसङ्ग एव तेन 'अष्टाध्यायीभाष्यप्रथमावृत्ति' इत्यभिधेयो ग्रन्थः प्रणीतः, यस्य केचिदंशाः श्रीजिज्ञासुमहाभागस्य देहावसानानन्तरं तच्छिष्यया सुश्रोप्रज्ञादेव्या पूरिताः। ग्रन्थोऽयं त्रिषु भागेषु श्रीरामलालकपूरट्रस्ट (सोनीपत) द्वारा प्रकाशितः। अद्याऽपि पण्डितचारुदेवशास्त्रि-पं० युधिष्ठिरमीमांसक–पं० रामप्रसादत्रिपाठिप्रभृतयो वैयाकरणाः संस्कृतभाषायाः पाणिनीयव्याकरणस्य प्राचीनव्याकरणपद्धत्याऽध्ययनाऽध्यापनपरम्पराया संरक्षणाय संवर्धनाय च प्रयत्नशीला वर्तन्ते। संस्कृतव्याकरणदर्शनविषये बलियामण्डलान्तर्गत-छाताग्रामवास्तव्यश्रीमत्पण्डितरघुनाथशर्ममहोदयानां कार्याणि स्तुत्यानि।

महाभारते व्यकरणशास्त्रस्य शैवसम्प्रदायप्रवर्तकस्य शिवस्योल्लेख[१] उपलभ्यते। निरुक्ते 'बिलमग्रहणायेमं[२] ग्रन्थं समाम्नासिषुर्वेदं वेदाङ्गानि च' इति वचने बहुवचननिर्देशेन ज्ञायते यद् वेदाङ्गानामाद्यप्रवचनकर्तारोऽनेके आचार्या आसन्। इन्द्रादारभ्याऽद्यावधि कति व्याकरणानि निर्मितानीति विषये सम्प्रति न किमपि सम्यग् ज्ञायते। महर्षिपाणिनिनाऽष्टाध्याय्यामापिशलि-काश्यपादीनां दशवैयाकरणानामुल्लेखो विहितः। एतदतिरिक्तानां पाणिनेः प्राचीनानां पञ्चदशाऽऽचार्याणामुल्लेखो विभिन्नेषु प्राचीनग्रन्थेष्ववलोक्यते। सम्प्रति दश प्रातिशाख्यानि, सप्तान्यानि च वैदिकव्याकरणानि समुपलब्धानि। एतेषु प्रातिशाख्यादिग्रन्थेष्वेकोनषष्टिमितानां प्राचीनाऽऽचार्याणामुल्लेख उपलभ्यते। यद्यपि केषुचित् प्रातिशाख्येषु शिक्षाछन्दसोः समावेशो विहितस्तथापि प्रातिशाख्यानि वैदिकव्याकरणानीति सुनिश्चितमेव। अतो निस्संशयं प्रातिशाख्येषु स्मृता आचार्या अप्यवश्यमेव व्याकरण-

---

१. वेदात् षडङ्गान्युद्धृत्य……। (महाभारतम्, शान्तिपर्व, २८४।१८७)

२. यास्क–निरुक्तम्, १।६। खं० ६।

प्रवक्तार आसन् । एवं पाणिनेः प्राक्तनाः पञ्चाशीतिमिताः वैयाकरणाः समभूवन्निति श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयेन सूचितम्[१] ।

परन्तु अर्वाचीनाः ग्रन्थकाराः प्रधानतयाऽष्टवैयाकरणानामुल्लेखं कुर्वन्ति । हैमबृहद्वृत्त्यवचूर्णिग्रन्थे तृतीयपृष्ठे ब्राह्म-ऐशान-ऐन्द्र-प्राजापत्य-बार्हस्पत्य-त्वाष्ट्राऽऽपिशल-पाणिनीयाऽष्टव्याकरणानामुल्लेख उपलभ्यते । तथा हि—

"ब्राह्ममैशानमैन्द्रञ्च प्राजापत्यम्बृहस्पतिम् ।
त्वाष्ट्रमापिशलञ्चेति पाणिनीयमथाष्टमम् ॥"

बोपदेवेन स्वकीये 'कविकल्पद्रुम' इत्यभिधेये ग्रन्थरत्ने इन्द्र-चन्द्र-काशकृत्स्नाऽऽपिशलि-शाकटायन-पाणिन्यमर-जैनेन्द्राणामष्टवैयाकरणानामुल्लेखो विहितः । तथा हि—

"इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादिशाब्दिकाः ॥"

वाल्मीकीयरामायणस्योत्तरकाण्डे ३६ सर्गे ४७ श्लोके नव[२]व्याकरणानामुल्लेखो विहितः; परन्तु तानि व्याकरणानि कानि कानीति नाद्यावधि सम्यग् ज्ञायते । 'श्रीतत्त्वनिधि' इत्यभिधेये वैष्णवग्रन्थे इन्द्र-चन्द्र-काशकृत्स्न-कुमार-शाकटायन-सारस्वताऽऽपिशलि-शाकलपाणिनीनां नव वैयाकरणानां वर्णनं विहितम् । तद्यथा—

"ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् ।
सारस्वतञ्चापिशलं शाकल्यं पाणिनीयकम् ॥"

---

१. द्रष्टव्यम्, पं० युधिष्ठिर मीमांसक—संस्कृत व्याकरण शास्त्र का इतिहास, प्रथम भाग, पृ० ६३, रामलाल कपूर ट्रस्ट, सोनीपत, तृतीय संस्करण, सं० २०३० ।

२. सोऽयं नवव्याकरणार्थवेत्ता (वा० रा०, उ० का०, ३६।४७, मद्रास ला जर्नल प्रेस, १९३३ का संस्करण)

भण्डारकर-रिसर्च-इन्स्टीट्यूट-पूनासंग्रहे "गीतासार"नामाभिधेयस्य ग्रन्थस्य हस्तलेख उपलभ्यते, तत्रापि नवव्याकरणानामुल्लेखो विहितः ।

एतेषु नवविधेषु व्याकरणेषु महेश्वरवरसमवाप्तप्रसादत्वान्महर्षिपाणिनिमुनि-प्रणीतं व्याकरणशास्त्रमेव श्रेष्ठं सारवत्तममिति ।[१]

पाणिनीयव्याकरणस्य लोकप्रसिद्धिमवलोक्य विभिन्नैर्वैयाकरणैर्धातुपाठ-गण-पाठोणादिपाठलिङ्गानुशासनानां विधयो यथाक्रमं वर्गीकृताः; परन्तु वैयाकरणा-नामेताः शाखाः धर्मसापेक्ष्यत्वादपाणिनीयत्वाच्च चिरस्थायित्वं लोकप्रसिद्धिञ्चा-वाप्तुं नाऽशक्नुवन् ।

व्याकरणशास्त्रस्य सम्यगन्वेषणेन ज्ञायते यत् सृष्टेरारभ्याऽद्यावधि संस्कृत-व्याकरणशास्त्रपरम्परायां न कोऽपि व्यतिक्रमो दृश्यते । संसारस्य कस्याश्चिदपि भाषाया व्याकरणं संस्कृतभाषाव्याकरणापेक्षया वैज्ञानिकं नास्ति, तथापि, भाषां-विज्ञान-दृष्ट्या पाणिनीयव्याकरणं संसारस्य सर्वाण्यपि व्याकरणान्यतिशेते ।

## २. संस्कृतभाषाया वैयाकरणाऽऽचार्यः पाणिनिः

संस्कृतव्याकरणशास्त्रेतिहासाऽऽलोडने कृते ऐन्द्रचान्द्रकाशकृत्स्नाऽऽपिशलादि-प्रामुख्यमभजमानेषु व्याकरणेषु रत्नायमानं साङ्गोपाङ्गं पाणिनीयमेव व्याकरणं समुपलभ्यते । संस्कृतवाङ्मयस्याऽनुपमरत्नस्वरूपमिदं व्याकरणमित्यत्र नाऽस्ति सन्देहलेशोऽपि । पूर्वप्रोक्तेषु व्याकरणेषु सम्पूर्णस्य शब्दजातस्य व्युत्पत्तिसामर्थ्यमन-वलोक्य महामुनिः पाणिनिर्लौकिकच्छान्दसोभयविधप्रयोगसाधनार्थं महेश्वरप्र[२]साद-लब्धौजसा 'अष्टाध्यायी'ग्रन्थं प्रणिनाय ।

---

१. गीतासारमिदं शास्त्रं गीतासारसमुद्भवम् ।
अत्र स्थितं ब्रह्मज्ञानं वेदशास्त्रसमुच्चयम् ।।५५।।
अष्टादश पुराणानि नवव्याकरणानि च ।
निर्मथ्य चतुरो वेदान् मुनिना भारतं कृतम् ।।५७।।
(हस्तलेख नं० १६४, सन् १८८३-८५)

२. नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।
उद्धर्तुकामः सनकादिसिद्धानेतद् विमर्शे शिवसूत्रजालम् ।। (नन्दिकेश्वरकाशिका)

ग्रन्थोऽयं गीर्वाणवाण्याः प्राचीनेष्वर्वाचीनेषु च वाङ्मयेषु सूर्य इव प्रकाशमानो विराजते। अस्याऽत्यन्तं सुन्दरं सुसम्बद्धं सूक्ष्मतमं पदार्थविद्योतनसामर्थ्यं दृष्ट्वा प्राच्याः पाश्चात्याश्च सर्वे विद्वांसो मुक्तकण्ठेनैनं प्रशंसन्ति। महेश्वरप्रसादात्लब्धानि "अइउण्" इत्यादि सूत्राण्याधारीकृत्य प्रत्याहारमाध्यमेन वैज्ञानिकसूत्ररचनाप्रकारो ग्रन्थकर्तुः पाणिनेराचार्यस्य प्रतिभाया वैशिष्ट्यं प्रकटयति। यदि वयं विश्वभाषासु दृष्टिं निक्षिपामस्तदा विश्वस्य कस्याञ्चिदपि भाषायामेतादृशं व्याकरणं न दृश्यते, यादृशं संस्कृतवाङ्मयस्य गौरवाधायकं पाणिनीयव्याकरणं देववाण्यां विराजते।

पाणिनिनाम्नैव पणनं पणः, पणोऽस्याऽस्तीति पणी, पणिनो गोत्रापत्यं पाणिनिरिति व्युत्पत्त्या पाणिनेर्नामान्वर्थतां भजते। पुरुषोत्तमदेवेन त्रिकाण्डशेषे[१] पाणिनेरधोलिखितानि नामान्तराण्युक्तानि—

(१) पाणिन (२) पाणिनि (३) दाक्षीपुत्र (४) शालङ्कि (५) शालातुरीय[२] (६) आहिक।

श्लोकात्मकपाणिनीयशिक्षाया याजुषपाठे पाणिनेराचार्यस्य "पाणिनेय[३]" इत्यपि नाम उपलभ्यते। यशस्तिलकचम्प्वां "पणिपुत्र[४]" शब्दस्याऽपि व्यवहारो दृश्यते।

यशस्तिलकचम्प्वां पणिपुत्रशब्दव्यवहारेणाऽस्य पितुर्नाम पणिरिति सम्भाव्यते। शालङ्किनाम्ना पाणिनेः पितुर्नाम "शलङ्कु" इति महामहोपाध्यायपण्डित-

---

१. पाणिनिस्त्वाहिको दाक्षीपुत्रः शालङ्किपाणिनौ।

शालोत्तरीयः........................................।। (पुरुषोत्तमदेव-त्रिकाण्डशेष)

२. शालातुरीयको दाक्षीपुत्रः पाणिनिराहिकः।। (वैजयन्ती, पृ० ९५)

३. दाक्षीपुत्रः पाणिनेयो येनेदं व्याहृतं भुवि।

(श्लोकात्मकपाणिनीयशिक्षा, याजुषपाठ, पृ० ३८)

४. पणिपुत्र इव पदप्रयोगेषु। (यशस्तिलकचम्पू, आश्वास २; पृ० २३६)

शिवदत्तशर्ममहोदयानां मतम्[1]। पैलादिगणे **"शालङ्कि"** पाठसामर्थ्यात्[2] "शाङ्कल"शब्दस्य शलङ्क आदेशे इञ् प्रत्ययो भवति,[3] ञित्वाच्चाऽऽदिवृद्धिः। परन्तु, श्रीपं० युधिष्ठिरमीमांसकमहोदयमतानुसारेण पाणिनेः पितुर्नाम "पणिन्" आसीदिति ज्ञायते।[4] पाणिनिशब्दव्युत्पत्तिविषये वैयाकरणेषु मतद्वयमस्ति। प्रथममतानुसारेण "पणिन्" शब्दादपत्यार्थे अण्प्रत्यये "पाणिन" इति व्युत्पद्यते, पुनश्च तस्मादपत्यार्थे "इञ्"प्रत्यये "पाणिनि" इति रूपं सिद्ध्यति[5]।

द्वितीयमतानुसारेण नकारान्तस्य "पणिन्" शब्दस्य पर्यायः "पणिन" इति अकारान्तः स्वतन्त्रशब्दोऽस्ति। यस्मात् "**अतइञ्**[6]" इति सूत्रेण इञ् प्रत्यये "पाणिनि"शब्दो व्युत्पद्यते[7]। पाणिनये प्रयुक्तः "पणिपुत्र"शब्दोऽप्यस्यैव तथ्यस्य ज्ञापको यत् पाणिनिः "पणिन्" (नकारान्तस्य) इत्यस्याऽपत्यम्, न तु

---

१. पतञ्जलि-व्याकरणमहाभाष्यम्, नवाह्निकम्, निर्णयसागरसंस्करणम्, भूमिका, पृ० १४।

२. पैलादिभ्यश्च। (पाणिनि—अष्टाध्यायी, २।४।५९)

३. पैलादिपाठ एव ज्ञापक इञो भावस्य। (जयादित्य—काशिकावृति, ४।१।९९)

४. द्रष्टव्यम्, पं० युधिष्ठिर मीमांसक—संस्कृत व्याकरणशास्त्र का इतिहास, प्रथम भाग, पृ० १८२-१८३, रामलाल कपूर ट्रस्ट, सोनीपत, सं० २०३०।

५. पणिनोऽपत्यमित्यण् पाणिनः। पाणिनस्याऽपत्यं युवेति इञ् पाणिनिः। (कैयट—महाभाष्यप्रदीप, १।१। आ० ९। सू० ७३)
पाणिनो गोत्रापत्यम् पाणिनः, तस्याऽपत्यं पाणिनिः। (बालमनोरमा, भाग १, पृ० ३९२, लाहौरसंस्करणम्)
पणोऽस्यास्तीति पणी, तस्याऽपत्यं पाणिनः, पाणिनस्याऽपत्यं पणिनो युवा पाणिनिः। (हरदत्तमिश्रः—पदमञ्जरी, भाग २, पृ० १४)

६. पाणिनि—अष्टध्यायी, ४।१।९५।

७. पणिनः मुनिः। पाणिनिः पणिनः पुत्रः। (काशकृत्स्नधातुव्याख्यानम्, १।२०६ तथा १।४८०)

''पणिन'' इत्यस्य। ''पणिन्'' इति नकारान्तशब्दादपि बाह्वादि[1]गणस्याऽऽकृतिगणत्वाद् इञ् प्रत्ययः सम्भाव्यते। अत्र मतद्वये श्रीमीमांसकमहोदयाः द्वितीयमतमेव युक्तं मन्यन्ते, गोत्रप्रकरणेषु ''पाणिन-पाणिनि'' इत्युभयोर्नामोगोत्ररूपेण स्मृतत्वात्। प्रथमपक्षस्वीकारे ''पाणिन'' इति गोत्रं भविष्यति, ''पाणिनि'' इति च युवा। यद्येतादृशमभविष्यत्तर्हि युवप्रत्ययान्तस्य ''पाणिनि'' शब्दस्य गोत्ररूपेणोल्लेखो नाऽभविष्यत्।

**''सर्वे सर्वपदादेशाः[2] दाक्षीपुत्रस्य पाणिनेः''** इति महाभाष्यनिर्देशादस्य मातुर्नाम ''दाक्षी'' ति ज्ञायते। संग्रहकारस्य व्याडेर्नाम बहुधा महाभाष्यकारेणोक्तम्—''दाक्षायण''[3] इति। तदनुसारेण दाक्षायणो व्याडिः पाणिनेर्मातुलपुत्र इति प्रतीयते। परन्तु काशिकायाम् (६।२।६९) ''कुमारी दाक्षाः'' इत्युदाहरणे दाक्षायण एव ''दाक्षि'' नाम्ना स्मृतः। अतः प्राचीनपद्धत्या दाक्षिर्दाक्षायणश्चेत्युभयमपि नाम संग्रहकारस्य व्याडेराचार्यस्यैवाऽस्ति। अतो दाक्षि-दक्षायणेन्युभयनामभ्यां प्रसिद्धो व्याडिर्दाक्षीपुत्रस्य पाणिनेर्मातुल एवाऽऽसीदिति ज्ञायते। एतेन व्याडेर्भगिन्याः दाक्ष्याः नाम ''व्याड्या'' इत्यप्यासीदिति ज्ञायते। वेदार्थदीपिकायां छन्दःशास्त्रप्रवक्तुः पिङ्गलस्य पाणिनिभ्रातृत्वेनोल्लेखो वर्तते।

पाणिनिना स्वशब्दानुशासने द्विधा बहुवचनान्तस्य ''आचार्य'' पदस्य निर्देशो विहितः[4]। श्रीहरदत्तमतानुसारेण पाणिनिर्बहुवचनान्तेन **''आचार्य''** पदेन स्वगुरोरुल्लेखं करोति[5]। कथासरित्सागरग्रन्थानुसारेण पाणिनेर्गुरोर्नाम ''वर्ष''

---

१ वाह्वादिभ्यश्च। (पाणिनि-अष्टाध्यायी, ४।१।९६)

२. पतञ्जलि—व्याकरणमहाभाष्यम्, १।१। आ०५। सू० २०।

३. शोभना खलु दाक्षायणस्य संग्रहस्य कृतिः॥ (तदेव, २।३ आ० ३। सू० ६६)

४. आदाचार्याणाम्॥ (पाणिनि—अष्टाध्यायी, ७।३।४९)
दीर्घादाचार्याणाम्॥ (तदेव, ८।४।५२)

५. आचार्यस्य पाणिनेर्य आचार्यः स इहाचार्यः, गुरुत्वाद् बहुवचनम्॥
(हरदत्त—पदमञ्जरी, भाग २, पृ० ८२१)

आसीत्[1]। वर्षस्याऽनुज "उपवर्ष" आसीत्। एक उपवर्षो जैमिनीयसूत्राणां वृत्तिकार आसीत्[2]। एक उपवर्षो धर्मशास्त्रेष्वपि स्मृतोऽस्ति[3]। श्री पं० युधिष्ठिर मीमांसकमतानुसारेण जैमिनीयसूत्रवृत्तिकार उपवर्षो धर्मशास्त्रेषु स्मृत उपवर्षश्चैक एव। उपवर्षोऽयं जैमिनेरीषदेवोत्तरकालीनोऽस्ति। अवन्तिसुन्दरीकथासारे वर्षोपवर्षयोरुल्लेखोऽस्ति, परन्तु तत्र पाणिनेरुल्लेखो नाऽस्ति। कथासरित्सागरस्य कथा ऐतिहासिकदृष्ट्या पूर्णतया प्रमाणिक्यो न सन्ति, अतः पाणिनेराचार्यस्य नाम सन्दिग्धमस्ति। यदि कथासरित्सागरे स्मृत उपवर्षोऽपि प्राचीनजैमिनीयसूत्रवृत्तिकारेण, धर्मशास्त्रेषु स्मृतेनोपवर्षेण चाऽभिन्नो भवेत्, तस्यैव भ्राता वर्षो भवेत् तर्हि "वर्षः" पाणिनेर्गुरुरासीदिति स्वीकर्तुं शक्यते। महेश्वरोऽपि पाणिनेर्गुरुरासीदित्यर्वाचीनाः वैयाकरणाः स्वीकुर्वन्ति। श्लोकात्मकपाणिनीयशिक्षानुसारेण पाणिनिना महेश्वरादक्षरसमाम्नायस्वरूपचतुर्दशसूत्राणामुपदेशं लब्ध्वा तदाधारेणैव स्वकीय "अष्टाध्यायी" ग्रन्थो विरचितः[4]। स्कन्दपुराणानुसारेण गोपर्वते तपश्च-

---

१. अथ कालेन वर्षस्य शिष्यवर्गो महानभूत्।
तत्रैकः पाणिनिर्नाम जडबुद्धितरोऽभवत्॥
(कथासरित्सागर, लम्बक १। तरङ्ग ४। श्लोक २०)

२. शाबरभाष्यम्, १।१।५॥ केशव–कौशिकसूत्रटीका, पृ० ३०७॥ सायण-अथर्वभाष्योपोद्घातः, पृष्ठम् ३५। प्रपञ्चहृदयम्, पृ० ३८॥

३. तथा च प्रवरमञ्जरीकारः शिष्टसम्मतिमाह—शुद्धाङ्गिरो गर्गभये कपयः पठिता अपि। आचार्यैरुपवर्षाद्यैर्भरद्वाजाः स्युरेव ते॥ द्विविधानपि गर्गास्तानुपवर्षो महामुनिः। अनुक्रम्य त्ववैवाह्यान् भरद्वाजतया जगौ॥
( वीरमित्रोदय, संस्कारप्रकाश, पृ० ६१३–६१४ समुद्धृतम्। )

४. येनाऽक्षरसमाम्नायमधिगम्य महेश्वरात्।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः॥
(श्लोकात्मकपाणिनीयशिक्षा)

यानन्तरं पाणिनिर्विशिष्टं ज्ञानं लब्धवान्[1]। हरचरितचिन्तामणिग्रन्थानुसारेण वर्षोपाध्यायशिष्यः सन्नपि यदा पाणिनिः स्वजडत्वकारणेन किञ्चिज्ज्ञातुं नाऽशकत्, तदा सः स्वजडत्वदूरीकरणाय हिमालयपर्वते गत्वा तपश्चचार, भगवान् शङ्करश्च-तस्मै व्याकरणशास्त्रमुपदिदेश[2]।

**पाणिनेः शिष्यपरम्परा**

पाणिनेः सर्वप्रथमः शिष्यः कात्यायनो वररुचिरासीत्। "उपसेदिवान् कौत्सः पाणिनिम्" इति महाभाष्यो[3]क्तोदाहरणात्, "अनूषिवान् कौत्सः पाणिनिम्, उपशुश्रुवान् कौत्सः पाणिनिम्" इति काशिकोक्तो[4]दाहरणाज्ज्ञायते यत् पाणिनेः कश्चन कौत्सनामाऽपरः शिष्योऽप्यासीत्।

**पाणिनेर्निवासस्थानम्**

शालातुरीयत्वादयं पाणिनिः "शालातुरीयः" प्रोच्यते। जैनलेखको वर्धमानो गुणरत्नमहोदधौ शालातुरीयशब्दस्य व्युत्पत्तिमेवं प्रदर्शितवान्—

**"शलातुरो[5]नाम ग्रामः, सोऽभिजनोऽस्याऽस्तीति शालातुरीयः, तत्रभवान् पाणिनिः।"**

अर्थात् शलातुरो ग्रामः पाणिनेरभिजन आसीत्।

पाणिनिना हि—**"तूदीशलातुरवर्मतीकू[6]चवाराड्ढक्छण्ढञ्यकः"**

---

१. गोपर्वतमिदं स्थानं शम्भोः प्रख्यापितं पुरा।
यत्र पाणिनिना लेभे वैयाकरणिकाग्रता॥
(स्कन्दपुराणम्, उत्तरार्धम्–२।६८, बङ्गीयसंस्करणम्।)

२. जयरथ—हरचरितचिन्तामणि, १७।७३-७५॥

३. पतञ्जलि—व्याकरणमहाभाष्यम्, ३।२। आ० १। सू० १०८॥

४. वामन-जयादित्य-काशिकावृत्ति, ३।२।१०८॥

५. वर्धमान—गणरत्नमहोदधिः, पृष्ठम् १॥

६. पाणिनि—अष्टाध्यायी, ४।३।९४॥

इति सूत्रे साक्षात् "शलातुर" पदं पठित्वाऽभिजनेऽर्थे शालातुरीयपदस्य सिद्धिः प्रदर्शिता । व्याकरणमहाभाष्ये अभिजननिवासयोर्भेदः प्रदर्शितोवर्तते । तथाहि—

**"अभिजनो[1]नाम यत्र पूर्वैरुषितम्, निवासो नाम यत्र सम्प्रत्युष्यते ।।"**

एतल्लक्षणानुसारं शलातुरः पाणिनेः पूर्वजानां वासस्थानम्, पाणिनिः स्वयं कुत्रचिदन्यत्र वसति स्म ।

पुरातत्त्वविदां मतानुसारेण पश्चिमोत्तरसीमाप्रान्तस्थस्याऽटकस्य समीपवर्ती वर्तमानो "लाहुरग्रामः" प्राचीनः शलातुरोऽस्ति, यः पाणिनेः पूर्वजानां वासस्थानमासीत् । पाणिनेराचार्यस्य "**उदक्[2]च विपाशः**" "**वाहीक[3]ग्रामेभ्यश्च**" इत्यादिसूत्रेभ्यस्तत्स्थभाष्येभ्यश्च प्रतीयते यत् पाणिनिर्विशेषरूपेण वाहीकदेशेन परिचित आसीत् । अतः पाणिनिर्वाहीकदेशस्य, तत्समीपस्य वा निवासी सम्भवति ।

**सम्पन्नता**

पाणिनेः कुलमत्यन्तं समृद्धमासीत् । तेन व्याकरणाऽध्येतृभ्यश्छात्रेभ्यो भोजनस्य व्यवस्था कृताऽऽसीत् । तत्र विद्यया सह भोजनमपि लभ्यते स्म । इदमस्य तात्पर्यमुद्घोषयितुं पतञ्जलिना महाभाष्ये[4] "ओदनपाणिनीयाः" इत्युदाहरणं प्रदत्तम्, किन्तु वामनेन काशिकाया[5]मुदाहरणमिदं निन्दार्थे प्रदत्तमस्ति । तदर्थश्च कृतोयद्-

---

१. पतञ्जलि–व्याकरणमहाभाष्यम्, ४।३। आ० १। सू० ९० ।।
तुलनीयम्–यत्र सम्प्रत्युष्यते सनिवासः, यत्र पूर्वैरुषितम् सोऽभिजनः ।।
(वामन-जयादित्य-काशिकावृत्तिः, ४।३।९०)

२. पाणिनि–अष्टाध्यायी, ४।२।७४ ।।

३. तदेव, ४।२।११७ ।।

४. पतञ्जलि–व्याकरणमहाभाष्यम्, १।१। आ० ९ । सू० ७३ ।।

५. वामन–काशिकावृत्तिः, ६।२।६९ ।।

ओदनप्रधानाः पाणिनीया ओदनपाणिनीया इति। अर्थाद् ये श्रद्धामन्तरा केवल-मोदनप्राप्त्यै पाणिनीयं शास्त्रमधीयते, ते निन्दावचनं प्राप्नुवन्ति।

**पाणिनेर्मृत्युः**

आचार्यस्य पाणिनेरन्यज्जीवनस्येतिवृत्तं किमपि नोपलभ्यते, किन्तु पञ्चतन्त्रे मित्रसम्प्राप्तौ प्रसङ्गतः कस्माच्चित् प्राचीनग्रन्थात् पद्यमेकमुद्धृतमस्ति, यत्र पाणिनेः, जैमिनेः, पिङ्गलस्य च मृत्युकारणानामुल्लेखोवर्तते। तथाहि–

"सिंहो[1] व्याकरणस्य कर्तुरहरत् प्राणान् प्रियान् पाणिनेः
मीमांसाकृतमुन्ममाथ सहसा हस्तो मुनिं जैमिनिम्।
छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलम्
अज्ञानावृतचेतसां मतिरुषां कोऽर्थस्तिरश्चां गुणैः॥"

एतेन पाणिनिं कश्चन सिंहो जघान, मृत्युश्च तस्य त्रयोदश्यां तिथावेवाऽभूदिति प्रतीयते। अत एव काश्यादिषु वैयाकरणैर्मासस्याऽनिश्चयात् प्रतित्रयोदश्यामनध्यायतिथित्वेन व्यवह्रियते।

**पाणिनेः कालः**

भारतीयप्राचीनाऽऽर्षवाङ्मयं, तस्याऽतिप्राचीनमितिहासञ्चाऽधिकाधिकरूपेणाऽर्वाचीनं साधयितुं बद्धपरिकरैः पाश्चात्यैर्विद्वद्भिः पाणिनेः कालः सप्तमेशवीयपूर्वशतकात् चतुर्थेशवीयपूर्वशतकम् अर्थात् ६५७ वैक्रमाब्दपूर्वात् २५८ वैक्रमाब्द

---

१. पञ्चतन्त्र, मित्रसम्प्राप्ति, श्लोक ३६, जीवानन्द संस्करण। चक्रदत्तविरचित चिकित्सासंग्रह का टीकाकार निश्चुलकर (सं० ११६७–१२७७=सन् १११०–११२७) इस श्लोक को इस प्रकार पढ़ता है, तदुक्तम्–

छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलम्,
सिंहो व्याकरणस्य कर्तुरहरत् प्राणान् प्रियान् पाणिनेः।
मीमांसाकृतमुन्ममाथ तरसा हस्ती बने जैमिनिम्
अज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः॥

(इण्डियन हिस्टोरिकल, क्वार्टर्ली, जून १९४७, पृष्ठ १४२ में उद्धृत)

पूर्वं यावत् स्वीकृतः। पूर्वसीमा गोल्डस्टुकरमहोदयस्याऽस्ति, अन्तिमा सीमा च बैबर कीथ महोदयाभ्यां स्वीकृताऽस्ति। प्राचीनभारतीयेतिहासविषये प्रसिद्धानां पाश्चात्यमतानां मूलाधारः सिकन्दर[1] चन्द्रगुप्तमौर्ययोः काल्पनिकी समकालीनत्वस्वीकृतिरेव। पाणिनेराचार्यस्य कालनिर्धारणे पाश्चात्यैस्तदनुयायिभिर्भारतीयैश्च विद्वद्भिस्समुपस्थापितेषु प्रमाणेष्वधोलिखितान्येव मुख्यानि—

(१) आर्यमञ्जुश्रीमूलकल्पग्रन्थे लिखितम् यत्–महापद्मस्य नन्दस्य सखा "पाणिनि" नामैको माणव आसीत।[2]

(२) कथासरित्सागरे पाणिनिर्महाराजस्य नन्दस्य समकालिक उक्तः।[3]

(३) बौद्धभिक्षूणां कृते प्रयुज्यमानस्य श्रमणशब्दस्य निर्देशः पाणिनेः "**कुमारः[4] श्रवणादिभिः**" इति सूत्रे समुपलभ्यते।

(४) बुद्धकालिकस्य "मंखलि गोसाल" इत्यभिधेयकार्यस्याऽऽचार्यस्य कृते प्रयुक्तस्य संस्कृतभाषायाः "मस्करी" शब्दस्य साधुत्वं पाणिनिना "**मस्करमस्करिणौ[5] वेणुपरिव्राजकयोः**" इति सूत्रे प्रदर्शितम्।

(५) सिकन्दरेण सह संग्रामे युद्धचमानानं, तं विजित्य पलायनाय प्रेर्यमाणानां मालवानां सेनाया उल्लेखः पाणिनिना खण्डिकादिगणे (४।२।४५) पठिते "**क्षुद्रकमालवात् सेनासंज्ञायाम्**" इति गणसूत्रे विहित, इति बेबरमतम्।

---

१. सिकन्दर का आक्रमण चन्द्रगुप्त मौर्य के समय नहीं हुआ। इन दोनों की समकालीनता भ्रममूलक है। मैगस्थनीज के अवशिष्ट इतिवृत्त से भी इनकी समकालीनत। कथञ्चित् भी सिद्ध नही होती, अपितु इसका विरोध विस्पष्ट है। इस तथ्य के परिज्ञानार्थ देखिये पं० भगवद्दत्तजीकृत "भारतवर्ष का वृहद् इतिहास" भाग १, पृ० २८८–२९८, द्वि० सं०॥

२. तस्याऽप्यन्यतमः सख्यः पाणिनिर्नाम माणवः॥ (आर्यमञ्जुश्रीमूलकल्प)

३. कथासरित्सागर, लम्बक १, तरङ्ग ४॥ ४. पाणिनि-अष्टाध्यायी, २।१।७०॥

५. तदेव, ६।१।१५४॥

(६) अष्टाध्याय्याः "**इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवनमातुलाचार्याणामानुक्**"[1] इति सूत्रे "यवन" शब्दः पठितः। एतदेवाऽऽश्रित्य श्रीकीथमहोदयेन लिखितम् यत् पाणिनिः सिकन्दरस्य भारतवर्षे आक्रमणानन्तरं सम्बभूव।

(७) राजशेखरेण काव्यमीमांसायां यस्याऽनुश्रुतेरुल्लेखो विहितस्तदनुसारेण पाटलिपुत्रे सम्पन्नायां शास्त्रकारपरीक्षायामुत्तीर्णो भूत्वा वर्षोपवर्षपाणिनिपिङ्गलादिभिर्यशोऽर्जितम्।[2] पाटलीपुत्रस्य स्थापना उदयीनामधेयेन महाराजेन विहिताऽऽसीत्।[3]

पाणिनेः कालविषये श्री पं० वाचस्पति गैरोलामहोदयेन "संस्कृत साहित्य का इतिहास" इत्यभिधेये स्वग्रन्थे केषाञ्चित् प्रसिद्धानां प्राच्यानां पाश्चात्यानाञ्च मतानां सङ्कलनमधोलिखितप्रकारेण विहितम्[4]

| | |
|---|---|
| (१) पं० सत्व्रत सामश्रमी | – २४०० ईशवीयपूर्वम् |
| (२) श्रीराजवाडे तथा श्रीवैद्यनाथपायगुण्डे | ९०० ईशवीयपूर्वतः ८०० ईशवीयपूर्वम् |
| (३) श्रीवेलवेलकर | – ७०० ईशवीयपूर्वतः ६०० ईशवीयपूर्वम् |
| (४) श्रीभाण्डारकर | – ७०० ईशवीयपूर्वम् |
| (५) बलदेव उपाध्याय | – ५०० ईशवीयपूर्वम् |
| (६) मैकडोनल | – ५०० ईशवीयपूर्वम् |

१. तदेव, ४।१।४९॥

२. श्रूयते च पाटलिपुत्रे शास्त्रकारपरीक्षा-अत्रोपवर्षवर्षाविह पाणिनिपिङ्गलाविह व्याडिः। वररुचिपतञ्जलि इह परीक्षिताः ख्यातिमुपजग्मुः॥ (राजशेखर-काव्यमीमांसा, अ० १०)

३. वायुपुराणम्, ९९।३१८॥

४. वाचस्पति गैरोला·संस्कृत साहित्य का इतिहास, पृ० ६६३, चौखम्बा संस्करणम्, काशी, सन् १९६० ई०।

(७) एफ० मैक्समूलर – ३५० ईशवीयपूर्वम्

(८) कीथ – ३०० ईशवीयपूर्वम्

(९) डॉ० वासुदेवशरण अग्रवाल[१]–ईशवीयपूर्वपञ्चमशतकस्य मध्यभागः ।

परन्तु श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयेन "संस्कृत व्याकरण शास्त्र का इतिहास" इत्यभिधेये स्वग्रन्थे अनेकैः प्रमाणैस्साधितम् यत् स्थूलतया पाणिनेराचार्यस्य कालो वैक्रमाब्दादेकोनत्रिंशच्छतवर्षपूर्वमस्ति । श्रीमीमांसकमहोदयेनोपस्थापितानि प्रमाणान्यधोलिखितानि—

(१) गृहपतिः शौनकः ऋक्प्रातिशाख्ये,[२] बृहद्देवताग्रन्थे[३] च बहुधा यास्कस्योल्लेखं करोति ।

(२) पाणिनेरनुजः पिङ्गलः "**उरोबृहती[४] यास्कस्य**" इति सूत्रे यास्कं स्मरति ।

(३) यास्कस्य निरुक्ते[५] कौत्सस्योल्लेखोऽस्ति । पातञ्जलमहाभाष्यानुसारेण[६] कौत्सः पाणिनेः शिष्य आसीत् ।

---

१. Agrawal, Dr. Vasudev Sharan-India as known to Panini, PP. 456–475.

२. न दासतय्येकपदा काचिदस्तीति वै यास्कः ।। ( शौनक-ऋक्प्रातिशाख्यम्, १७।४२ )

३. शौनक-बृहद्देवता, १।२६।। २।१११४, १३२, १३७।। ३।७६, १००, ११२ इत्यादि ।

४. पिङ्गल-छन्दः शास्त्रम्, ३।३०।।

५. यदि मन्त्रार्थप्रत्ययाय, अनर्थकं भवतीति कौत्सः । अनर्थका हि मन्त्राः ।। (यास्क-निरुक्तम् १।५)

६. उपसेदिवान् कौत्सः पाणिनिम् ।। ( पतञ्जलि-व्याकरणमहाभाष्यम्, ३।०। आ० १। सू. १०८ )

(४) यास्काचार्येण स्वतैत्तिरीयानुक्रमणिकायां ऋक् प्रातिशाख्यप्रवक्तुः शौनकस्योल्लेखो विहितः ।[१]

(५) पिङ्गलस्य नाम पाणिनीयगणपाठे[२] समुपलभ्यते ।

(६) पाणिनिना **शौनकादिभ्यश्छन्दसि**[३] इति सूत्रे शौनकस्योल्लेखो विहितः ।

(७) शौनकशाखाप्रवक्ता गृहपतिः शौनकः ऋक्प्रातिशाख्ये व्याडेरुल्लेखं करोति[४] । व्याडेर्नाम दाक्षायणोऽप्यासीत् । सः पाणिनेर्मातुल आसीत् ।

(८) व्याडिर्दाक्षायणश्चेति[५,६] नामद्वयं पाणिनीयगणपाठे समुपलभ्यते ।

(९) सामवेदीयलघुऋक्तन्त्रव्याकरणे पाणिनेः साक्षादुल्लेख उपलभ्यते[७] ।

(१०) बौधायनश्रौतसूत्रग्रन्थस्य प्रवराध्याये पाणिनेः साक्षादुल्लेख उपलभ्यते ।[८]

(११) मत्स्यपुराणे[९] पाणिनिगोत्रस्योल्लेखोऽस्ति ।

---

१. द्वादशनिस्त्रयोऽष्टाक्षरांश्च जगती ज्योतिष्मती । सापि त्रिष्टुविति शौनकः ।। ( पं० भगवद्दत्त–वैदिक वाङ्मयका इतिहास, वेदों के भाष्यकार भाग, पृष्ठ २०५ पर उद्धृत । तुलना करो–ऋक्प्रातिशाख्य, १३।७० )

२. पाणिनीयगणपाठः, ४।१।९९, १०५।।

३. पाणिनि–अष्टाध्यायी, १।४।१०९।।

४. शौनक–ऋक्प्रातिशाख्यम्, २।२३,२८।।६।४३।।१३।३१,३७।।

५. पाणिनीयगणपाठः ४।१।८० ।। ६. तदेव, ४।२।५४ ।।

७. एचो वृद्धिरिति प्रोक्तं पाणिनीयानुसारिभिः (सामवेदीयं लघुऋक्तन्त्र-व्याकरणम्, पृ० ४६।)

८. भृगूणामेवादितो व्याख्यास्यामः····पैङ्गलायनाः वैहीनरयः····काशकृत्स्नः···· पाणिनिर्वाल्मीकि····आपिशलयः ।। बौधायनश्रौतसूत्रम्, अ० ३ )

९. पाणिनिश्चैव त्र्यार्षेयाः सर्वं एते प्रकीर्तिताः ।। (मत्स्यपुराणम्, १९७।१०)

(१२) वायुपुराणे[१] पाणिन गोत्रस्य निर्देश उपलभ्यते। पाणिनिपाणिनयोरैक्यं त्वस्त्येव।

(१३) ब्रह्मवैवर्तपुराणे[२] पाणिनिः साक्षाद् ग्रन्थकार उक्तः।

उपर्युक्तप्रमाणैर्ज्ञायते यद् यास्क-शौनक-व्याडि-पाणिनि-पिङ्गल-कौत्सादयः समकालिका एव। एषु शौनकस्य कालः सामान्यतया भारतयुद्धात् महाराजस्याऽधिसीमस्यकाल यावदस्ति, तस्यायुर्वर्षशतत्रयमासीत्। ऋक्प्रातिशाख्यप्रणयनं महाभारतयुद्धात् प्रायः शतवर्षानन्तरं, अर्थात् विक्रमपूर्वत्रिसहस्रवर्षेऽभूत्। ऋक्प्रातिशाख्ये स्मृतो व्याडिर्यपाणिनेर्मातुल आसीदेतत्कालीन एवाऽस्ति। अतः पाणिनेचार्यस्य कालः स्थूलतया वैक्रमाब्दादेकोनत्रिंशच्छतवर्षपूर्वमासीदिति सिद्ध्यति।

पाणिनीयव्याकरणस्य सूक्ष्मतया पर्यवेक्षणेन प्रतीयते यत् पाणिनिर्न केवलं शब्दशास्त्रमात्रस्यैव परिज्ञाताऽऽसीत्, अपितु समस्तस्य प्राचीनवाङ्मयस्य भूगोल-इतिहास-मुद्राशास्त्र-लोकव्यवहारादीनाञ्चाऽप्यद्भुतो विद्वानासीत्। स हि प्राचीनाऽर्वाचीनयोः कालयोः सम्बन्धयिता एकः सेतुरस्ति।

पाणिनिना अष्टाध्याय्यांमापिशलिशाकटायनप्रभृतयः स्वप्राक्तना आचार्याः

**पाणिनेः कृतयः**

संस्कृतव्याकरणेतिहासालोडनेन ज्ञायते यत् पाणिनिना अधोलिखिताः ग्रन्थाः प्रणीता :—

(१) अष्टाध्यायी (अस्य स्वरूपादिवर्णनमग्रे करिष्यते।)

(२) शिक्षा

---

१. बभ्रवः पाणिनश्चैव। धानञ्जप्यास्तथैव (धानञ्जयास्तथैव) च॥ (वायुपुराणम्, ९१।९९)

२. कणादौ गौतमः कण्वः पाणिनि शाकटायनः। ग्रन्थं चकार''''॥ ब्रह्मवैवर्तपुराणम्, प्रकृतिखण्डम् ४।६७)

बहुधा आदरार्थतया स्मृताः "**स्वतन्त्रः[1]कर्ता**" इति सूत्रप्रणयनात् स्वातन्त्र्यवादी पाणिनिरासीदिति प्रतीयते ।

(३) जाम्ववतीविजय ( पातालविजय ) महाकाव्यम्[2] ।

(४) द्विरूपकोशः

(५) धातुपाठः

(६) गणपाठः

(७) उपादिसूत्रपाठः

(८) लिङ्गानुशासनम्

(९) अष्टाध्याय्याः स्वोपज्ञवृत्तिः ।

## ३. पाणिनीयव्याकरणस्वरूपम्, तद्वैशिष्टयञ्च

पाणिनेरष्टाध्यायी एका एवं सर्वाङ्गपूर्णा कृतिरस्ति, यस्यां लौकिकवैदिकोभयविधशब्दसिद्धये नियमनिर्देशादयोऽपूर्वाः सर्वसामान्याश्चाऽभूवन् । मैकडॉनलमहोदयस्य कथनमस्ति यत् पाणिनीयं व्याकरणं स्वनीतिनियमकारणेनैयतीं न्यायिकां ख्यातिमार्जयद् यदाधारेण वक्तुं शक्यते यद् भारतीयव्याकरणे विश्वस्मिन् सर्वप्रथमं शब्दानां वैज्ञानिकं विवेचनं जातम्, प्रकृतिप्रत्यययोर्भेदपरिचयो जातः, शब्दसिद्धिप्रकारनिर्द्धारणं निश्चितम्, सार्वजनीनसर्वाङ्गीणविशुद्धायाः पद्धतेर्निर्माणमजायत, यस्य तुलना विश्वस्य केनाऽपि व्याकरणेन न कर्तुं शक्यते ।[3]

---

१. पाणिनि-अष्टाध्यायी, १।४।५४।।

२. अस्मिन् ग्रन्थे पाणिनिना भारतवर्षस्य श्रीकृष्णस्य भगवतः पातालदेशे ( ऋक्षदेशे ) गत्वा ऋक्षराजस्य जाम्बवतः पुत्र्याः जाम्बवत्याः विजयस्य परिणयस्य च वर्णनमस्ति । अनेन ग्रन्थेन पाणिनिनाऽपि भारतऋक्ष ( रूस ) देशयोः सांस्कृतिक-सम्बन्धानां प्राचीनतमत्वमेव समर्थितम् ।

३. द्रष्टव्यम्, वाचस्पति गैरोला—संस्कृत साहित्य का इतिहास, पृ० ६२९-६३१, चौखम्बा विद्याभवन संस्करणम्, काशी, सन् १९६० ई० ।।

भारतस्य भाषागतपरम्परायां साहित्यक्षेत्रे पाणिनिव्याकरणेनैकमभिनवयुगानुवर्तनं विहितम्। यत्र वैदिकयुगापेक्षया व्याकरणशास्त्रस्याऽभिवृद्धयर्थं नवं नवं कार्यमजायत। भारतस्य प्रसिद्धेन भाषाविदा बाबूसुनीतिकुमारचटर्जीमहोदयेनाऽपि स्पष्टमुक्तमस्ति यद् "यदा ऋग्वेदस्य भाषा किञ्चित् प्राचीना सर्वसाधारणस्य कृते आंशिकरूपेण दुर्बोधा चानुभूता तदा भारतीयाऽऽर्यभाषाया एकमर्वाचीनतरं रूपं विशिष्टसाहित्यिकभाषारूपेण प्रतिष्ठापयितुं पश्चिमोत्तरपञ्जाबनिवासिना पाणिनिना नवीनसाहित्यिकभाषाव्याकरणं विरच्य लौकिकभाषाया रूपं प्रदत्तम्[1]।"

पाणिनेरष्टाध्याय्या अस्तित्वं तावत्पर्यन्तं स्थास्यति यावत्कालं विश्वस्मिन् संस्कृतस्याध्ययनाध्यापनप्रवाहः प्रचलिष्यति। पाणिनेरष्टाध्याय्यां चतुःसहस्राणि सूत्राणि सन्ति, तथा चेयमष्टसु अध्यायेषु विभक्ताऽस्ति, यत्र प्रत्येकं चत्वारः पादास्सन्ति। पाणिनिनाऽत्यन्तसरलया, मनोरमया च शैल्या सूत्राणां रचना कृताऽस्ति, यां वयमनायासेनावगच्छामः।

महाभाष्यकारोभगवान् पतञ्जलिः पाणिनिविषये लिखति यत्—

**"प्रमाणभूत[2] आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म। तत्राऽशक्यं वर्णेनाऽप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण।"**

पुनरग्रे लिखति—

**"सामर्थ्ययोगान्नहि[3] किञ्चिदस्मिन् पश्यामि शास्त्रे यदनर्थकंस्यात्।"**

अशेषशेमुषीसम्पन्नस्य तर्कप्रवणस्य पतञ्जलेः पाणिनीयशास्त्रविषये उक्तो लेखस्तस्याऽत्यन्तं महत्त्वं व्यनक्ति। तथा चोक्तम् काशिकायां जयादित्यमहोदयेन—

**"उदक् च विपाशः.........महती सूक्ष्मेक्षिका वर्तते सूत्र[4]कारस्य॥"**

१. तदेव, पृष्ठम् ६३२॥

२. पतञ्जलि—व्याकरणमहाभाष्यम्, १।१। आ० ३ सू० १॥

३. तदेव, ६।१। आ० ३। सू० ७७॥

४. जयादित्य—काशिका, ४।२।७४॥

प्रसिद्धश्चीनदेशीयः श्रीह्वेनसांग नामाभिधो यात्री लिखति यत्—

"ऋषिः[१] पूर्णमनसा शब्दभण्डारतः शब्दानसञ्चयद्, १००० पद्येषु च सम्पूर्णां व्युत्पत्तिं विरचितवान् प्रत्येकं पद्यं ३२ अक्षराणामासीत्। अत्र प्राचीनाऽर्वाचीनं समस्तं लिखितं ज्ञानं समाप्तम्। तत्र शब्दाऽक्षरविषयकं किमपि तथ्यं विस्मृतं भवितुं नाऽशकत्।"

द्वादशशतकीयः ऋग्वेदभाष्यकारः श्रीवेङ्कटमाधवो लिखति—

**"शाकल्यः[२] पाणिनिर्यास्क इत्यृगर्थपरास्त्रयः॥"**

अर्थाद् ऋग्वेदस्य त्रयो ज्ञातारस्सन्ति--शाकल्यः, पाणिनिर्यास्कश्चेति। वेङ्कटमाधवस्येदं कथनं सर्वथा सत्यमेव। वेदार्थे स्वरज्ञानं सर्वतः प्रधानं साधनम्। पाणिनिना स्वरशास्त्रस्य सूक्ष्मविवेचनदृष्ट्या न केवलं प्रत्येकं प्रत्ययस्याऽऽदेशस्य च जित्नित्चित्प्रभृतिष्वनुबन्धेषु ध्यानं दत्तम्, अपितु ४०० सूत्राणि केवलं स्वरविशेषपरिज्ञानायैव प्रणीतानि। अतः पाणिनेराचार्यस्य वेदज्ञता स्पष्टं विद्यते।

अतः परं पाणिनीयव्याकरणविषये आधुनिकानां पाश्चात्यानां विदुषां मतानि प्रदर्श्यन्ते—

इङ्गलैण्डदेशस्य प्रो० मोनियर विलियम्समहोदयो वक्ति यत्—

"संस्कृतं व्याकरणं[३] तस्याः मानवमस्तिष्कप्रतिभाया आश्चर्यतम आदर्शोऽस्ति, यः केनाऽपि देशेन नाऽद्यावधि आविष्कृतः॥"

जर्मनीदेशस्थः श्रीमैक्समूलरमहोदयो ब्रवीति यत्—

---

द्रष्टव्यम्,

१. ह्यूनसांग—वाटर्स का अनुवाद, भाग १, पृ० २२१॥

❀ ह्यूनसांग के लेख से यह भ्रान्ति नहीं होनी चाहिए कि पाणिनीय ग्रन्थ पहिले छन्दोबद्ध था। ग्रन्थ परिमाण दिखलाने की यह प्राचीन शैली है।

२. वेङ्कटमाधव—मन्त्रार्थानुक्रमणी, ऋग्भाष्य, ८।१॥

३. द्रष्टव्यम्, रमाशङ्कर मिश्र—महान् भारत, पृ० १४३-५०। सं० १९९३ वि०।

''हिन्दूनां[१] व्याकरणान्वय योग्यता विश्वस्य कस्या अपि जातेर्व्याकरण-साहित्यादधिकं विद्यते ।।''

सरहन्टरमहोदयः ( W. W. Hunter ) कथयति यत्-

''विश्वव्याकरणेषु[२] पाणिनीयव्याकरणम् शेखरीभूतमस्ति । तस्य वर्णशुद्धता, भाषायाः धात्वन्वयसिद्धान्तः, प्रयोगविषयश्चाऽद्वितीया अपूर्वाश्च सन्ति ।।''

रूसदेशस्थ लेनिनग्रादनगरीयेण श्रीप्रोफेसर त०शेरवात्सकी (T.Shervatskii) महोदयेन पाणिनीयव्याकरणविषये उक्तम् यत्-

**पाणिनीयव्याकरणम्[३]मानवमस्तिष्कस्य सर्वोत्कृष्टकृतिष्वेकमस्ति ।।''**

सुप्रसिद्धेनाऽऽधुनिकभाषावैज्ञानिकेन ब्लूमफील्डमहोदयेनोक्तम्-

''Generations[४] of such labour must have preceded the oldest treatise that has come down to us, the grammar of Panini. This grammar, which dates from somewhere round 350 to 350 to 250 B. C., is one of the greatest monuments of human inteliigence.''

अर्थाद्—अनेकेषां वंशानामेतादृशपरिश्रमेणाऽस्माभिः प्राचीनतमं व्याकरणम्-पाणिनीयं व्याकरणमुपलब्धम् । व्याकरणमिदम्, यस्य रचनाकालः ३५० ईशवीय-पूर्वतः २५० ईशवीयपूर्वं भवितुमर्हति, मानवबुद्धिमत्तायाः महत्तमासु कृतिष्वे-कमस्ति ।

---

१. द्रष्टव्यम्, तदेव, पृ० १४९-५० ।। ५. द्रष्टव्यम् तदेव, १४९-५०।।

२. द्रष्टव्यम्, रामशङ्कर मिश्र–महान् भारत, पृ० १५० ।। सं० १९९३ वि० ।।

३. द्रष्टव्यम्, नेहरू जवाहरलाल–हिन्दुस्तान की कहानी, पृ० १३१ ।।

४. Leyonard Bloomfield—Language, Page 11, Motilal Banarsidas Delhi, 1963.

## ४. व्याकरणमहाभाष्यकार आचार्यः पतञ्जलिः

महामुनिना भगवता पतञ्जलिना हि पाणिनीयसूत्राणां याऽत्युत्कृष्टा व्यवहारोपयोगिनी व्याख्या कृता सा संस्कृतजगति "महाभाष्य" नाम्ना व्यपदिश्यते। अत्र व्याकरणस्य शुष्कविषया एवंविधया सरसया सरलया सरण्योपस्थापिताः, यां मुक्तकण्ठं प्रशंसन्ति सर्वे विद्वांसः। अस्य रचनासौष्ठवं संस्कृतवाङ्मयेऽपूर्वमस्ति मञ्जुलम्। वस्तुतो महाभाष्यमेतन्न केवलं पाणिनीयव्याकरणेऽतिमहत्त्वाधायकमस्ति अपितु समस्ते संस्कृतवाङ्मये इदमेकमद्भुतं प्रामाणिकं ग्रन्थरत्नमस्ति। सर्वे वैयाकरणा एतस्य समक्षं नतमस्तकाः भवन्ति, महाभाष्ये हि प्रायः पाणिनीयसूत्राणां प्रत्येकपदानां विवेचनं कृतं विद्यते। वैयाकरणा हि सूत्रवार्तिकभाष्येषु प्ररस्परविरोधे महाभाष्यमेव प्रामाणिकं मन्यन्ते। तथा हि महाभाष्यस्य प्रदीपे कैयटेनोक्तम्— "**यथोत्तरं[1] हि मुनित्रयस्य प्रामाण्यम्**"; प्रदीपोद्योतटीकायाञ्च नागेशेनोक्तम्— "**यथोत्तरं[2] मुनीनां प्रामाण्यम्**" इति।

अत्राऽयमाशयः—पाणिनिसूत्रविषये यत्र वार्तिककृता काचिद् विप्रतिपत्तिः प्रदर्शिता, उपसंख्यानादिकं च कृतम्, तत्र तस्यैव वचनं ग्राह्यम्। तद्वचनसंस्कृताः प्रयोगा एव साधवो मन्तव्याः। यत्र वा वार्तिककृद्वचनानि खण्डयित्वा भाष्यकारेण कश्चन प्रयोगः समर्पितः वार्तिकं वा प्रत्याख्यातम्; तत्र तत्र तद्वचनमेवाऽनुसृत्य प्रयोगाणां साधुत्वमनुसन्धेयम्। यथा—"**न[3] बहुव्रीहौ**" इति सूत्रेण बहुव्रीहिसमासार्थप्रक्रियाविग्रहवाक्य सर्वनामसंज्ञानिषेधं कुर्वतः सूत्रकारस्य मते सर्वनामत्वाभावेनाऽकचोऽप्रवृत्या त्वं पिता यस्येति विग्रहे स्वार्थिके क प्रत्यये "त्वत्कपितृक" इत्येव प्रयोगः साधुत्वेनाऽभ्युपगन्तव्य, परन्तु—

---

१. कैयटः—महाभाष्ये १।१। आ० ६। सू० २९। प्रदीपटीका॥

२. नागेशभट्टः—महाभाष्ये ३।१। आ० ५। सू० ८७। प्रदीपोद्योतटीका॥

३. पाणिनि—अष्टाध्यायी, १।१।२९॥

"गोनर्दीयस्त्वाह--

अकच्स्वरौ[१] तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयम्।
त्वकत्पितृको मकत्पितृक इत्येव भवितव्यमिति ॥"

इति महाभाष्यवचनादकचि कृते "त्वकत्पितृकः" इत्येव स्वीकर्तव्यम्। तस्मात्तत्र भाष्यकृद्वचनमेव श्रेष्ठं मत्वा व्यवस्था भवति।

भाष्यवार्तिककारयोः पर्यालोचनया प्रतीयते यत् वार्तिककारः सूत्रकृतो न्यूनताप्रदर्शनमेवाभिलक्ष्य वार्तिककरणे प्रवृत्तः, भाष्यकारस्तु सूत्रकृतो गौरवरक्षार्थमेव प्रवर्तते। अत एव स्पष्टं तेनोक्तम् "**वृद्धिरादैच्**[२]" इति सूत्रे भाष्ये–

**"प्रमाणभूत[३] आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयतिस्म, तत्राऽशक्यं वर्णनाऽप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण।"**

अत एव कथासरित्सागरे पाणिनिकात्यायनयोर्विद्वेषपूर्वकं परस्परशास्त्रार्थकथा प्रवृत्ता। महाभाष्यञ्चेदं वार्तिकानामेव व्याख्यानम्, वार्तिकमवलम्ब्यैव भाष्यस्य प्रायः प्रवृत्तिदर्शनात्।

पाणिनिना हि भूतार्थे लकारत्रयं विहितम्--तत्र सामान्यभूते लुङ्, अनद्यतनभूते लङ्, अनद्यतनपरोक्षे च लिडिति "**लुङ्**"[४] "**अनद्यतने**[५] **लङ्**" "**परोक्षे**[६] **लिट्**" चेति सूत्रव्यवस्थाकृता। "**अनद्यतने**[७] **लङ्**" इति सूत्रे कात्यायनेन

---

१. पतञ्जलि–व्याकरणमहाभाष्यम्, १।१। आ० ६। सू० २९॥
२. पाणिनि–अष्टाध्यायी, १।१।१॥
३. पतञ्जलि–व्याकरणमहाभाष्यम्, १।१। आ० ३। सू० १॥
४. पाणिनि–अष्टाध्याणी, ३।२।११०॥
५. तदेव, ३।२।१११॥
६. तदेव, ३।२।११५।
७. तदेव, ३।२।१११॥

**परोक्षे च[१] लोकविज्ञाने प्रयोक्तुर्दर्शनविषये"** इति वार्तिकं पठितम्। तत्रोदाहरणप्रसङ्गे भगवान् भाष्यकारः प्राह—**"अरुणद् यवनः[२] साकेतम्, अरुणद् यवनो मध्यमिकाम्।"** प्रयोक्तुर्दर्शनविषय इति किम्, **"जघान कंसं किल वासुदेवः"** इति। अत्र प्रदीपे कैयटः—अननुभूतत्वात्परोक्षेऽपि प्रत्यक्षयोग्यतामात्राश्रयेण दर्शनविषय इति विरोधाभावः, उद्द्योते च नागेशः। भाष्ये जघानेति कंसवधो हि नेदानीन्तनप्रयोक्तुर्दर्शनयोग्योऽपीत्यर्थः, अरुणदित्युदाहरणे तु तुल्यकालं प्रवक्तेति बोध्यम्। एतस्याऽयमभिप्रायः—या घटना स्वयं न दृष्टा, परं स्वकाले एव जातत्वेन दर्शनयोग्या लोकप्रसिद्धा च तस्य अदृष्टत्वेन परोक्षत्वात् पाणिनिमते लिडेव भवति, किन्तु कात्यायनमते तत्र लङ्प्रयोक्तव्य इति।

अद्यत्वे पाणिनीयव्याकरणस्य यादृशी प्रतिष्ठा यथा वा शास्त्रेषु मुख्यं स्थानं गण्यते, सोऽयं भगवतः पाणिनेः, कात्यायनस्य, पतञ्जलेश्च प्रभावः। पतञ्जलिकृतं महाभाष्यं न केवलं व्याकरणस्यैव निबन्धः, किन्त्वत्र सर्वे ज्ञातव्याः विषयाः, लौकिका व्यवहाराः, प्राक्तना इतिहासाः आवश्यकाः धर्माः दर्शनानां सिद्धान्ताः, गूढतमानि विज्ञानानि च तत्र तत्र सपरिकरं विवेचितानि। वैज्ञानिका यमाकर्षणसिद्धान्तं न्यूटनेनाऽऽविष्कृतं मन्यन्ते, स तु भगवता पतञ्जलिना **"स्थाने[३]ऽन्तरतमः"** इति सूत्रभाष्ये बहुपूर्वमेव समुद्घोषितः[४]।

---

१. पतञ्जलि-व्याकरणमहाभाष्यम्, ३।२। आ० २। सू०१११।।

२. तदेव, ३।२।आ० २। सू० १११।।

३. पाणिनि–अष्टाध्यायी, १।१।५०।।

४. तद्यथा लोष्टः क्षिप्तो बहुवेगं गत्वा नैव तिर्यग् गच्छति नोर्ध्वमारोहति पृथिवीविकारः पृथिवीमेव गच्छत्यान्तर्यतः। तथा या एता आन्तरिक्ष्यः सूक्ष्मा आपस्तासां विकारो धूमः। स धूम आकाशे निवाते नैव तिर्यग् गच्छन्ति नार्वागवरोहति। अब्विकारोऽप एव गच्छत्यान्तर्यतः। तथा ज्योतिषो विकारोऽर्चिराकाशदेशे निवाते सुप्रज्वलितं नैव तिर्यग् गच्छति नार्वागवरोहति। ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्यतः।।

(पतञ्जलि–व्याकरणमहाभाष्यम्, १।१।आ०७।सू०५०।।)

**नामान्तराणि**

विभिन्नेषु प्राचीनेषु ग्रन्थेषु पतञ्जलेराचार्यस्य गोनर्दीय-गोणिकापुत्र-नागनाथ-अहिपति-फणिभृत्-शेषराज-शेषाहि-चूर्णिकार-पदकारप्रभृतीनि नामान्तराण्युपलभ्यन्ते। वैजयन्तीकोषकारो गोनर्दीयशब्दं पतञ्जलेर्नामान्तररूपेण स्वीकरोति[१]। व्याकरणमहाभाष्येऽनेकेषु स्थलेषु गोनर्दीय आचार्यस्य मतानि निर्दिष्टानि। तथा हि—

"गोनर्दीयस्त्वाह–सत्यमेतत्, सति त्वन्यस्मिन्निति[२]।"

"गोनर्दीयस्त्वाह–अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ।
त्वकत्पितृको मकत्पितृक इत्येव भवितव्यमिति[३]।"

"न तर्हि इदानीमिदं भवति–इच्छाम्यहं काशकटीकारमिति।
इष्टमेवैतद् गोनर्दीयस्य[४]।"

"गोनर्दीय आह–इष्टमेवैतत् संगृहीतं भवति—अतिजरमतिजरैरिति
भवितव्यम्[५]।"

भर्तृहरि-कैयट-नागेश-राजशेखरप्रभृतीनां मते गोनर्दीयः पतञ्जलेर्वाचकः[६]। श्री पं० युधिष्ठिरमीमांसकमहोदयमतानुसारेण गोनर्दीयः पतञ्जलेराचार्यात् सर्वथा

---

१. गोनर्दीयः पतञ्जलिः॥ (वैजयन्ती-कोषः, पृ० ९६, श्लोकः १५७॥)
२. पतञ्जलि—व्याकरणमहाभाष्यम्, १।१।आ०५।सू०२१॥
३. तदेव, १।१।आ०६, सू०२९॥
४. तदेव, ३।१।आ० ५, सू० ९२॥
५. तदेव, ७।२।आ०२, सू० १०१॥
६. गोनर्दीयस्त्वाह तस्माद् भाष्यकारो व्याचक्षति ? ( व्याचष्टे ) सूत्रमिति। ( १।१।२१ भाष्ये भर्तृहरिटीका )
भाष्यकारस्त्वाह—( कैयट-प्रदीप, महाभाष्य १।१आ०५।२१)
गोनर्दीयपदं व्याचष्टे—भाष्यकार इति। ( नागेश–उउद्योत, महाभाष्य १।१आ०५।२१ )

भिन्नः प्रतीयते[1]। महाभाष्ये[2] गोणिकापुत्रस्य मतमुपलभ्यते, तथैव नागेशभट्टस्य उद्द्योतटीकया प्रतीयते यदनेके प्राचीनाः टीकाकाराः गोणिकापुत्रशब्दं भाष्यकारस्य पतञ्जलेर्नामान्तरत्वेन स्वीकुर्वन्ति स्म[3]। परन्तु श्रीमीमांसकमतानुसारेण गोणिकापुत्रो भाष्यकारस्य पतञ्जलेर्नामान्तरं नास्ति, सः पतञ्जलेर्भिन्नः। कैयटेन महाभाष्ये प्रदीप टीकायां पतञ्जलिकृते "नागनाथ"शब्दः प्रयुक्तः[4]। चक्रपाणिः चरकसंहिताग्रन्थस्य टीकाप्रारम्भे अहिपतिनाम्ना पतञ्जलिं नमस्करोति[5]। वैयाकरणभूषणसारे[6] भाष्यकारस्य "फणि" इति नाम दृश्यते। भोजराजेन योगसूत्रवृत्तेरारम्भे "फणिभृत्" नाम्ना पतञ्जलेर्निर्देशो विहितः[7]। अमरचन्द्रसूरिमहोदयेन हैमबृहद्वृत्त्यवचूर्णिग्रन्थे महाभाष्यस्यैकः पाठः "शेषराज" नाम्नाऽभिहितः[8]। बल्लभदेवेन शिशुपालवधमहाकाव्यस्य (२।११२) टीकायां पतञ्जलिः "शेषाहि" "नाम्ना स्मृतः[9]। भर्तृहरिप्रणीतायां महाभाष्यदीपिकायां "चूर्णिकारपदेन" त्रिधा पतञ्जले-

१. द्रष्टव्यम्, युधिष्ठिर मीमांसक–संस्कृत व्याकरणशास्त्र का इतिहास, भाग १, पृ० ३२०-३२१, सोनीपत, सं० २०३० ॥

२. उभयथा गोणिकापुत्र इति। (पतञ्जलि-महाभाष्यम्, १।४।आ०३।सू०५१॥)

३. गोणिकापुत्रो भाष्यकार इत्याहुः। (नागेश–उपर्युक्तभाष्यस्य उद्द्योतटीका)

४. तत्र जात इत्यत्र तु सूत्रेऽस्य लक्षणत्वमाश्रित्यैतेषां सिद्धिमभिधास्यति नागनाथः॥ (कैयट–४।२।९३ सूत्रस्थभाष्यस्य प्रदीपः)

५. पातञ्जलमहाभाष्यचरकप्रतिसंस्कृतैः। मनोवाक्कायदोषाणां हन्त्रेऽहिपतये नमः।
(चक्रपाणि–चरकसहिता, चक्रपाणिटीकाप्रारम्भः)

६. फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः। (कौण्डभट्ट-वैयाकरणभूषणसारः, मङ्गलवादः)

७. वाक्चेतोवपुषां मलः फणिभृता भर्त्रेव येनोद्धृतः।

८. यदाह श्रीशेषराजः—नहि गोधाः सर्पन्तीति सर्पणादहिर्भवति।
(हैमबृहद्वृत्त्यवचूर्णि)
[व्याकरणमहाभाष्येऽप्यनेकेषु स्थलेष्वेषः पाठ उपलभ्यते]

९. पदं शेषाहिविरचितं भाष्यम्। (बल्लभदेवः—शिशुपालवधस्य २।११२ श्लोकस्य टीकायाम्)

रुल्लेखो विहितः[१]। सांख्यकारिकायाः युक्तिदीपिकायां टीकायां महाभाष्यस्य (१।४।आ०२।२१) वचनं "चूर्णिकार" नाम्नोद्धृतम्[२]। बौद्धधर्मावलम्बिना चीनदेशीयइत्सिंगमहोदयेन महाभष्यस्य "चूर्णि" चूर्णिनाम्नोल्लेखो विहितः[३]। क्षीरस्वामिना अमरीटीकायां "चूर्णिः" भाष्यपर्यायत्वेन स्वीकृतः[४]। स्कन्धस्वामिना निरुक्तटीकायां (१।३) पदकारनाम्ना ५।२।२८ सूत्रस्थमहाभाष्यपाठः उद्धृतः[५]। उव्वटेनाऽपि ऋक्प्रातिशाख्यस्य (१३।१९) टीकायां पदकारनाम्ना महाभाष्यस्य (१।१।आ०४। सू०९) पाठ उद्धृतः[६]। दुर्घटवृत्तिग्रन्थे [७] अनुपदकारस्यैकं मतमुद्धृतमस्ति। मैत्रेयरक्षितेनाऽपि तन्त्रप्रदीपे (७।४।१) अनुपदकारस्य मतमुद्धृतम्[८]। परन्तु, अनुपदकारनाम्नोद्धृतानि मतानि महाभाष्ये नोपलभ्यन्ते। काशिकायां[९] पदशेषकारस्यैकं मतमुद्धृतमस्ति, परन्तु तदपि महाभाष्ये नोपलभ्यते।

---

१. द्रष्टव्यम्, श्री पं० युधिष्ठिरमीमांसक–संस्कृत व्याकरणशस्त्र का इतिहास, भाग १, पु० ३३१, सोनीपत, सं० २०३० ॥

२. कदाचिद् गुणो गुणिविशेषको भवति, कदाचित्तु गुणिना गुणो विशेष्यते इति चूर्णिकारस्य प्रयोगः।

३. प्रौढ़ विद्यार्थी उसे (चूर्णि अर्थात् महाभाष्य को) ३ वर्ष में सीख लेते हैं। (इत्सिंग की भारतयात्रा, पृष्ठ २७३)

४. भाष्यं चूर्णिः। (क्षीरस्वामी–अमरटीका, ३।५।३१ ॥ पृष्ठम् ३५३)

५. पदकार आह—उपसर्गाश्च पुनरेवात्मका......क्रियामाहुः। (स्कन्दस्वामी–निरुक्तटीका, १।३)

६. पदकारेणाऽप्युक्तम्–प्रथमद्वितीयाः......महाप्राणा इति। (उव्वट–ऋक्प्रातिशाख्यटीका, १३।१९)

७. प्रेन्वनमिति। अनुपदकारेणानुम उदाहरणमुपन्यस्तम्। (दुर्घटवृत्ति, पृष्ठम्, १२९)

८. एवं च युवानमाख्यत् अचीकलदित्यादिप्रयोगोऽनुपदकारेण नेष्यत इति लक्ष्यते। (द्रष्टव्य, भारतकौमुदी भाग २, पृष्ठ ८९४ की टिप्पणी।)

९. पदशेषकारस्य पुनरिदं दर्शनम्......। (वामन-काशिकावृत्ति, ७।२।५८) पदशेषो ग्रन्थविशेषः। (हरदत्त–पदमञ्जरीटीका, ७।२।५८)

पदशेषकारस्यैकमुद्धरणं पुरुषोत्तमदेवप्रणीतायाः महाभाष्यलघुवृत्तेः "भाष्यव्याख्याप्रपञ्च" इत्याख्यायां टीकायामप्युपलभ्यते[1]। अनुपदकारपदशेषकारयोरेकत्वमस्ति न वेति विचारणीयमस्ति।

**वंशो देशश्च**

नागेशभट्टानुसारेण पतञ्जलेर्मातुर्नाम गोणिकाऽऽसीत्[2]। जनश्रुत्यनुसारं पतञ्जलेर्जन्मस्थानं गोनर्ददेश आसीत्। अत एव पतञ्जलिः गोनर्दीयः प्रोच्यते। भण्डारकरमहोदयेन अयोध्यात उत्तरपश्चिमे वर्तमानः सम्प्रतिकं गोण्डामण्डलमेव गोनर्दो मन्यते। "एङ्[3] प्राचां देशे" इति सूत्रस्य काशिकावृत्तौ एणीपचनीयः, गोनर्दीयः, भोजकटीय इत्याद्युदाहरणैरयं गोनर्दीयः प्राच्यदेशवासी प्रतीयते। भर्तृहरि[4]-कैयट-[5] राजशेखर[6]प्रभृतयो ग्रन्थकाराः विद्वांसो गोनर्दीयं पतञ्जलेर्नामान्तरं स्वीकुर्वन्ति। वैजयन्तीकोशकारोऽपि गोनर्दीयं पतञ्जलिमेव मनुते[7]। किन्तु डॉ० कीलहार्नमहोदयस्य मतमस्ति यद् गोनर्दीय आचार्यो हि पतञ्जलेर्भिन्न एवाऽस्ति। "पुष्यमित्रं याजयामहे" इति भाष्योदाहरणात् पुष्यमित्र पुरोहितोऽयमासीदित्यपि साधयन्ति समालोचकाः।

---

१. पदशेषकारस्तु शब्दाध्याहारं शेषमिति वदति। (इण्डियन हिस्टोरिकल क्वार्टर्ली सेप्टेम्बर १९४३, पृष्ठ २०७ में उद्धृत।)

२. गोणिकापुत्रो भाष्यकार इत्याहुः (नागेशः—१।४।३।५१ भाष्यस्य उद्द्योतटीका।)

३. पाणिनि—अष्टाध्यायी, १।१।७५॥

४. गोनर्दीयस्त्वाह, तस्माद् भाष्यकारो व्याचक्षति। (भर्तृहरि—१-१-२१ सूत्रस्थ भाष्यटीका)।

५. भाष्यकारस्त्वाह। (कैयट—१।१।५।२१, भाष्यस्य प्रदीपटीका)

६. यस्तु प्रयुङ्क्ते.........तत्प्रमाणमेवेति गोनर्दीयः। (राजशेखर-काव्यमीमांसा, पृ० २६)

७. गोनर्दीयः पतञ्जलिः। (वैजयन्तीकोषः, पृ० ९६, श्लो० १५७।)

यद्यपि पुष्यमित्रस्य राजधानी पाटलिपुत्रमासीत् तथापि, अयोध्यायां तेनो॰पराज्यं स्थापितमासीत् । ततश्च गोण्डामण्डलमधिवसतः पतञ्जलेः सम्भवति अयोध्यावसता पुष्यमित्रेण सह सम्बन्धः । केचित्तु गोनर्दम् उज्जयिनीप्रान्ते मध्यदेशे मन्यन्ते । यस्य प्राकृतं नाम गोनद्धमित्यासीत् । परन्तु काशिकादौ गोनर्दः प्राग्देशेषु गणितो, न दक्षिणदेशेषु । अतः गोण्डा एव गोनर्दो मन्तव्यः ।

महाभाष्ये "अभिजानासि[१] देवदत्त कश्मीरान् गमिष्यामः, तत्र सक्तून् पास्यामः" इत्याद्युदाहरणेषु कश्मीरगमनस्योल्लेख उपलभ्यते । एतादृशान्युदा॰हरणान्याधारीकृत्य कैश्चिद् विद्वद्भिः पतञ्जलिः काश्मीरनिवासीति साधितः ।

महाभाष्यस्य "इहाधीमहे, इह वसामः, इह पुष्यमित्रं याजयामः[२]" इत्याद्युदाहरणात् प्रतीयते यत् पतञ्जलिः पाटलिपुत्रे निवसति स्म । महाभाष्यस्य विविधनिर्देशैर्ज्ञायते यत् पतञ्जलिः मथुरा-साकेत-कौशाम्बी-पाटलिपुत्रादिभिर्यथावद्विज्ञ आसीत् । अतः पतञ्जलेर्जन्मस्थानं कुत्रासीदिति सन्दिग्धं प्रतीयते; किन्तु काश्मीराधिपतेरभिमन्योः शासनकाले चन्द्राचार्यद्वारा, पुनः काश्मीराधिपतेर्जयापीडस्य शासनकाले क्षीरद्वारा महाभाष्यस्य पुनरुद्धाराधारेणेदं वक्तुं शक्यते यद् भाष्यकारस्य पतञ्जलेर्जन्मभूमिः काश्मीरमेवासीत् ।

**भाष्यकारस्य पतञ्जलेः कालः**

पतञ्जलेरितिवृत्तमन्धकारावृतमस्ति । पतञ्जलेः कालनिर्णये महाभाष्ये अनेकाः सहायिकाः सामग्र्य उपलभ्यन्ते । तथा हि—

१. **"अनुशोणं पाटलिपुत्रम्"**[३] ॥

२. **"जेयो वृषलः"**[४] ॥

३. **"काण्डीभूतं वृषलकुलम् कुड्यीभूतं वृषलकुलम्"**[५] ॥"

---

१. पतञ्जलि—व्याकरणमहाभाष्यम्, ३।२। आ० २ । सू० ११४ ॥

२. तदेव ३।२। आ० २ । सू० १२३ ॥

३. तदेव, २।१। आ० १ । सू० १५ ॥

४. तदेव, १।१। आ० ७ । सू० ५० ॥

५. तदेव, ६।३। आ० ३। सू० ६१ ॥

४. "मौर्यैर्हिरण्यार्थिभिरर्चाः प्रकल्पिताः ॥"[1]

५. "अरुणद्यवनः साकेतम्, अरुणद् यवनो मध्वमिकाम्[2] ॥"

६ "पुष्यमित्रसभा, चन्द्रगुप्तसभा[3] ॥"

७. महीपालवचःश्रुत्वा जुघुषुः पुष्यमाणवाः। एष प्रयोग उपपन्नो भवति" ॥[4]

८. "इह[5] पुष्यमित्रं याजयामः ॥"

९. "पुष्यमित्रो यजते, याजका याजयन्ति ॥"[6]

१०. "यदा भवद्विधः क्षत्रियं याजयेत्। यदि भवद्विधः क्षत्रियं याजयेत् ॥"[7]

अत्र प्रथमोद्धरणे पाटलिपुत्रस्योल्लेखोऽस्ति। महाभाष्ये पाटलिपुत्रस्य नामाऽनेकधा प्रयुक्तम्। वायुपुराणानुसारेण[8] महाराजेन उदयी-नामाऽभिधेयेन राज्ञा गंगायाः दक्षिणे कूले कुसुमनामानं नगरं कृतम्। आधुनिकानामैतिहासिकानाम्मतानुसारेण कुसुमपुरमिति पाटलिपुत्रस्यैव नामान्तरमिति कृत्वा तेषां मते महाभाष्यकारः पतञ्जलिरुदयीनामाभिधेयमहाराजात् सर्वथाऽर्वाचीनः प्रतीयते।

द्वितीये तृतीये चोद्धरणे वृषल-वृषलकुलयोर्निर्देशोऽस्ति। द्वितीये उद्धरणे वृषलो "जेय" उक्तः। तृतीये उद्धरणे कस्यचिन्महतो वृषलकुलस्य कुड्यवत्

---

१. पतञ्जलि—व्याकरणमहाभाष्यम्,, ५।३। आ० २। सू० ९९ ॥

२. तदेव, ३।२। आ० २। सू० १११ ॥

३. तदेव, १।१। आ० ९। सू० ६८ ॥

४. तदेव, ७।२। आ० १। सू० २३ ॥

५. तदेव, ३।२। आ० २। सू० १२३ ॥

६. तदेव, ३।१। आ० २। सू० २६ ॥

७. तदेव, ३।३। आ० २। सू० १४७ ॥

८. उदायी भविता यस्मात् त्रयस्त्रिंशत् समा नृपः।
सवै पुरवरं राजा पृथिव्यां कुसुमाह्वयम्।
गङ्गायाः दक्षिणे कूले चतुर्थेऽब्दे करिष्यति ॥ (वायुपुराणम्, ९९।३१८)

अतिसङ्कीर्णतायाः सङ्केतोऽस्ति । "मुद्राराक्षस"नामाभिधेये नाटके चाणक्यश्चन्द्रगुप्तं प्रायो "वृषल" नाम्ना सम्बोधयति । सम्प्रति वृषलशब्दस्य "शूद्र" इत्यर्थोऽवबुद्धयते । विश्वप्रकाशकोशे[1] वृषलशब्दः शूद्र-चन्द्रगुप्ताऽश्वार्थवाचक उक्तः । वस्तुतो वृषलशब्दो "देवानां प्रियः"[2] इतिवद् द्वयर्थकोऽस्ति । अस्यैकोऽर्थोऽस्ति–पापी, द्वितीयश्च–धर्मात्मा । यास्काचार्यस्य निरुक्ते वृषलशब्द एवं व्याख्यातः—

"ब्राह्मणवद्[3] वृषलवत् । ब्राह्मणा इव वृषला इव । वृषलो वृषशीलो भवति, वृषाशीलो वा ॥"

अर्थाद् वृषलस्याऽर्थो द्विविधः । प्रथमस्तावत्, वृषः = धर्मः[4], शीलः द्वितीयश्चाऽर्थः–-वृषः = धर्मः + अशीलोऽस्ति । द्वितीयाऽर्थे "शकन्धुः"[5] इतिवद् अकारस्य पररूपं जातम् । एतयोरेव द्वयोरर्थयोर्वृषलशब्दस्य व्युत्पत्तिद्वयमपि समुपलभ्येते । तत्रैका व्युत्पत्तिस्तावत्, **"वृषं धर्मं लाति आदत्ते इति वृषलः"** इत्यस्ति । अत्रैव **"वृषादिभ्यश्चित्"**[6] इत्युणादिसूत्रेण वृषधातोः कर्तरि कलप्रत्यये जाते सति "वर्षतीति वृषलः" इति व्युत्पत्तिर्जायते । द्वितीया व्युत्पत्तिश्च मनुस्मृतावुल्लिखिताऽस्ति । तथा हि—

---

१. वृषलः कथितः शूद्रे चन्द्रगुप्ते च वाजिनि (विश्वप्रकाशकोशः, पृ० १५६, श्लोकः–९०)

२. देवताओंका प्यारा और मूर्ख । इसको न समझकर भट्टोजिदीक्षित ने "देवानां प्रिय इति चोपसंख्यानम्" (महाभाष्य–६।३।२१) वार्तिकमें "मूर्खे" पद का प्रक्षेप कर दिया । द्रष्टव्य, वैयाकरणसिद्धान्तकौमुदी, सूत्र-संख्या ९७९ ।

३. यास्क–निरुक्तम्, ३।१६ ॥

४. वृषो हि भगवान् धर्मः । मनुस्मृतिः, ८।१६ ॥ )

५. शक + अन्धुः = शकन्धुः । "शकन्ध्वादिषु च" (वार्तिकम्, ६।१।९४)

६. पञ्च उणा० १।१०१ ॥ दश० उणा० ८।१०९ ॥

"वृषो हि भगवान् धर्मस्तस्य यः कुरुते ह्यलम्।
वृषलं यं विदुर्देवास्तस्माद्धर्मं न लोपयेत्[1] ॥"

एतादृशविभिन्नप्रवृत्तिनिमित्तानि दर्शयितुमेव निरुक्तकारेण निर्वचनद्वयं दर्शितम्। अर्वाचीनैर्ग्रन्थकारैर्मौर्यचन्द्रगुप्ताय वृषलशब्दस्य प्रयोगं दृष्ट्वा "मुरा"-नाम्न्याः शूद्रायाः चन्द्रगुप्तोत्पत्तिः कल्पिता, या ऐतिह्यविरुद्धत्वात् त्याज्याऽस्ति। मौर्यवंशः क्षत्रियवंश आसीत्[2]। व्याकरणनियमानुसारेण मुरायाः संततिर्मौरेय-पदेनैव भाषितुं शक्यते, न मौर्यपदेन[3]।

विवेचनयाऽनया स्पष्टं यन्महाभाष्यस्य द्वितीयतृतीयोद्धरणयोर्मौर्यबृहद्रथ-समकालिकस्य मौर्यकुलस्य हीनताया उल्लेखोऽस्ति। चतुर्थोद्धरणे स्पष्टतया मौर्य-शब्दस्योल्लेखोऽस्ति। अतो महाभाष्यकारो मौर्यराज्यानन्तरमुत्पन्नोऽभूदिति अनुमातुं शक्यते।

पञ्चमोद्धरणे अयोध्यानगर्यां माध्यमिका[4]-( मध्यमिका ) नगर्याञ्च कस्यचिद् यवनस्याऽऽक्रमणस्योल्लेखोऽस्ति। गार्गीसंहितानुसारेणाऽस्य राज्ञो नाम धर्ममीत आसीत्। व्याकरणस्य नियमानुसारेण "अरुणत्"शब्दस्य प्रयोगकर्त्रा भाष्यकारेण यवनराजस्य धर्ममीतस्य समकालिकेन भाव्यम्[5]।

षष्ठसप्तमाऽष्टमनवमोद्धरणेषु स्पष्टतया पुष्यमित्रस्योल्लेखोऽस्ति। अनेकेषां विदुषां मतानुसारेणाऽष्टमोद्धरणे महाभाष्यकारद्वारा पुष्यमित्रीयाऽश्वमेधस्य

---

१. मनुस्मृतिः, ८।१६॥

२. चन्द्रगुप्ताय मौर्यकुलप्रसूताय ॥ (कामन्दक नीतिसार की उपाध्यायनिरपेक्षा टीका। अलवर राजकीय पुस्तकालय सूचीपत्र, परिशिष्ट, पृ० ११०॥)

३. 'द्व्यचः' ( पाणिनि—अष्टाध्यायी, ४।१।१२१ )

४. यह चित्तौड़गढ़ से ६ मील पूर्वोत्तर दिशा में है। सम्प्रति "नगरी" नाम से प्रसिद्ध है।

५. परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये ॥

(पतञ्जलि—व्याकरणमहाभाष्यम्, ३।२। आ० २।सू०१११ )

ऋत्विक्-कर्मकरणस्य सङ्केतोऽस्ति। दशमोद्धरणं तथ्यमिदं पुष्णाति। अत्र क्षत्रियद्वारा यजनकर्मणो निन्दा विहिता। पतञ्जलेर्यजमानो पुष्यमित्रो ब्राह्मण-वंशीय आसीत्।

महाराजेन समुद्रगुप्तेन प्रणीतस्य कृष्णचरितस्य प्रस्तावनया ज्ञायते यन्महामुनिना पतञ्जलिना "महानन्दमयं काव्यं" निर्मितमासीत्। तथा हि—

"विद्ययोद्रिक्तगुणतया भूमावमरतां गताः।
पतञ्जलिर्मुनिवरो नमस्यो विदुषां सदा॥
कृतं येन व्याकरणभाष्यं वचनशोधनम्।
धर्मावियुक्ताश्चरके योगाः रोगमुषः कृताः॥
महानन्दमयं काव्यं योगदर्शनमद्भुतम्।
योगव्याख्यानभूतं तद् रचितं चित्तदोषहम्॥"

यदि महानन्दशब्दः श्लेषाद् महानन्दपद्मस्य वाचको भवेत्तर्हि निश्चयेनैव पतञ्जलिर्महानन्दपद्मादुत्तरवर्ती भविष्यति।

एतानि प्रमाणान्याधारीकृत्येदं वक्तुं शक्यते यन्महाभाष्यकारः पतञ्जलिः शुङ्गवंशीयस्य महाराजस्य पुष्यमित्रस्य समकालीन आसीत्; परन्तु श्री पं० युधिष्ठिरमीमांसकमहोदयेन "संस्कृत व्याकरण-शास्त्र का इतिहास" इत्यभिधेये स्वग्रन्थे महाभाष्यकारस्य पतञ्जलेः कालः द्विसहस्रवैक्रमाब्दपूर्वमिति निर्धारितम्। तत्रोपस्थापितानि प्रमाणान्यधोलिखितानि—

१. महाभाष्ये कुत्रचिदपि पुष्यमित्रस्य "शुङ्ग" "राजा" इति वा विशेषणं वा नोपलभ्यते, न च कुत्रचित् पुष्यमित्रस्याऽश्वमेधयज्ञकरणस्यैव सङ्केतोऽस्ति। अत इदं नामाऽपि देवदत्त-यज्ञदत्त-विष्णुमित्रादिवत् सामान्यपदमेव।

२. यदि "इह पुष्यमित्रं याजयामः" इत्यस्मिन् वाक्ये "इह" इति पदं पाटलिपुत्रस्य निर्देशकत्वेन स्वीक्रियेत तर्हि, तदुत्तरवर्त्तिना "**इह अधीमहे**" इत्यनेन वाक्येनेदं स्वीकर्तव्यं भविष्यति यत् पतञ्जलिः पुष्यमित्रस्याऽश्वमेधयज्ञ-समये पाटलिपुत्रेऽध्ययनं करोति स्म। एतादृशाऽर्थस्वीकारे अश्वमेधयाजनं गुरु-

मुखादध्ययनमिति द्विविधमपि कार्यं सममेव न भवितुमर्हति । अत एतादृश वाक्यानां कस्मिंश्चिदर्थविशेषे सङ्केतरूपेण स्वीकरणमनुपपन्नमेव ।

३. "**चन्द्रगुप्तसभा**" इत्युदाहरणं महाभाष्यस्यानेकेषु हस्तलेखेषु नोपलभ्यते; यत्रोपलभ्यते तत्रापि "**पुष्यमित्रसभा**" इति वाक्यादनन्तरमेवोपलभ्यते । पाठक्रमोऽयमैतिहासिकदृष्ट्याऽयुक्तमेवाऽस्ति ।

४. महाभाष्यस्य पूर्वोद्धृते उद्धरणे वृषल"शब्दस्याऽति प्रसिद्धो "धर्मात्मा" इत्यर्थोऽपि भवितुमर्हति । वृषलस्याऽर्थः केवलं चन्द्रगुप्त एव नाऽस्ति ।

५. "**अरुणद् यवनः साकेतम्, अरुणद् यवनो मध्यमिकाम्**" इत्यत्र कस्यचिद् विशिष्टस्य यवनस्य राज्ञ उल्लेखो नाऽस्ति । कालयवननामाऽतिप्राचीनो यवनसम्राड् भारतस्यैकस्मिन् बृहद्भागे आक्रमणं चकार, देशेऽस्मिन् तेनाऽत्यन्तमत्याचारा विहिताः । श्रीकृष्णस्तमवधीत् । भारतीया आर्या अतिप्राचीनकालाद् यवनेभ्यः परिचिता आसन् । रामायणमहाभारतादिषु यवनानां बहुधा उल्लेख उपलभ्यते । अतः केवलमेतावता निर्देशेन कालविशेषस्य सिद्धिर्न भवितुमर्हति ।

६. मौर्यवंशःप्राचीनः, तस्याऽऽरम्भश्चन्द्रगुप्तादेव जातः । अतः केवलं मौर्यपदस्योल्लेखाद् विशिष्टः परिणामो न साधयितुं शक्यते । महाभाष्यस्य टीकाकारमतेषु मौर्यशब्दः शिल्पिवाचकोऽस्ति ।[1]

७. आचार्यस्य भर्तृहरेः,[2] कल्हणस्य[3] च लेखाज्ज्ञायते यत् चन्द्राचार्येण

---

१, मौर्याः—विक्रेतुं प्रतिमाशिल्पवन्तः । (नागेश–भाष्यप्रदीपोद्योत, ५।३।९९॥)

२, पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः ।
स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः ॥
(भर्तृहरि–वाक्यपदीयम्, २।४८९॥)

३. चन्द्राचार्यादिभिर्लब्ध्वाऽऽदेशं तस्मात्तदागमम् ।
प्रवर्तितं महाभाष्यं स्वं च व्याकरणं कृतम् ॥
( कल्हण–राजतरङ्गिणी, १।१७६ )

विलुप्तप्रायस्य व्याकरणमहाभाष्यस्य पुनरुद्धारो विहित आसीत् । महता प्रयत्नेन चन्द्राचार्येण दक्षिणप्रदेशान्महाभाष्यस्यैका प्रतिरुपलब्धा। अत एवेदं सम्भाव्यते यद् यथा विलुप्ताया अग्निवेशसंहितायाश्चरकदृढबलाभ्यां परिष्कारो विहितः, यथा च जीवकेन काश्यपसंहितायाः, परिष्कारो विहितस्तथैव चन्द्राचार्येण विनष्टस्य महाभाष्यस्य परिष्कारो विहितो भवेत् ।

आयुर्वेदीयचरकसंहितायामुक्तं—यद् अस्मिन् काले अर्थात् कलेरारम्भे मनुष्याणां खल्वायुर्वर्षशतपरिमाणमस्ति[1] । प्रत्येकं शतवर्षानन्तरं मनुष्याणामायुषः काले खल्वेकसंवत्सरस्य ह्रासो जायते[2] । पतञ्जलिनाऽप्युक्तं महाभाष्ये—

**"किं पुनरद्यत्वे । यः सर्वथा चिरं जीवति वर्षशतं जीवति[3] ॥"**

अनेन स्पष्टतया सिद्ध्यति यद् भाष्यकारकाले मनुष्याणां प्रायिकमायुः शतवर्षाणामासीदिति । चरकसंहितायां मनुष्यायुषो यो निर्देशो विहितः, उत्तरोत्तरञ्चायुषो ह्रासस्य यद् वैज्ञानिकं तत्वं सङ्केतितम्, तस्योल्लेखोऽभारतीयग्रन्थेष्वप्युपलभ्यते । बाइबिलग्रन्थे लिखितमस्ति—

**"हमारी आयु के बरस सत्तर तो होते हैं, और चाहे बल के कारण अस्सी बरस भी हों, तो भी उन पर का घमण्ड कष्ट और व्यर्थ बात ठहरता है[4]।"**

---

१. वर्षशतं खल्वायुषः प्रमाणमस्मिन् काले । (चरकसंहिता, शारीरस्थानम्, ६।२६ ॥)

२. संवत्सरे शते पूर्णे याति संवत्सरः क्षयम् ।
देहिनामायुषः काले यत्र यन्मानमिष्यते ॥
(चरकसंहिता, विमानस्थानम्, ३।३१ )

३. पतञ्जलि—व्याकरणमहाभाष्यम्, १।१। आ० १ ॥

४. द्रष्टव्यम्, पुराना नियम, भजनसंहिता, अ० ९०, पृष्ठ ५९७, मिशन प्रेस, इलाहाबाद, सन् १९१९ ॥

अनेन स्पष्टं यद् ईसामसीहमहोदयस्य काले मनुष्याणां प्रायिकमायुः सप्तति-वर्षाणां स्वीक्रियते स्म। भारतीयैतिहासिककालगणनानुसारेण ईसामसीहमहोदयस्य कालः ३१०० मितकलिसंवत्सरे स्वीक्रियते। एवं कलिप्रारम्भकालाद् ईसामसीहकालं यावत् ३०००वर्षेषु चरकस्य प्रतिशतवर्षे एकसंवत्सरस्य ह्रासनियमानुसारेण ३० वर्षाणां ह्रास आवश्यक एव। अनेनेदमपि प्रमाणितं भवति यत् चरकसंहिता ईसामसीहकालात् त्रिसहस्रवर्षप्राचीना त्ववश्यमेवाऽस्ति। अर्थाद् भारतीया कालगणनैव समीचीना। पाश्चात्यैर्विद्वद्भिः ईसातः १४०० मितवर्षपूर्वं विहिता भारतयुद्धकालस्थापना च नितान्तमशुद्धैव।

पतञ्जलिना **"यः सर्वथा[1] चिरं जीवति"** इत्यनेन यो भावो व्यक्तः, स एव बाइबिलग्रन्थे "चाहे बल के कारण" शब्दैः प्रकटितः। अत एवैततदुभय-वर्णनस्य तुलनया स्पष्टं ज्ञायते यत् सामान्यमायुः प्रयत्नद्वाराऽतिरिक्तरूपेण दश वर्षाणि यावद् वर्द्धयितुं शक्यते। एतन्नियमानुसारेण, भाष्यकारशब्दैरिदमेव तात्पर्य-मवबुद्धचते यद् भाष्यकारस्य काले मनुष्याणां सामान्यमायुर्नवतिमितवर्षाणामासीत्; चिरञ्जीविनश्च शतं वर्षाण्यपि जीवन्ति स्म। एवं चरकस्यायुर्विज्ञाननियमानुसारेण महाभाष्यकारस्य पतञ्जलेराचार्यस्य कालो वैक्रमाब्दाद्द्विसहस्रमितवर्षपूर्वं मेव स्वीकर्तव्यः।

**कृतयः**

पतञ्जलेराचार्यस्य सम्प्रति त्रयो ग्रन्था उपलभ्यन्ते—निदानसूत्रम्, योगदर्शनम्, व्याकरणमहाभाष्यञ्चेति। तत्र निदानसूत्रम्, योगदर्शनञ्चोभे अपि कस्यचित् प्राचीनस्य पतञ्जलेः कृती स्तः, इति श्रीमीमांसकमतम्।

महाराजसमुद्रगुप्तप्रणीतस्य कृष्णचरितस्य पूर्वोद्धृतपद्यावलोकनेन ज्ञायते यद् महाभाष्यकारेण पतञ्जलिना "महानन्द", "महानन्दमय"मित्याख्यं वा काव्यं प्रणीतमासीत्[2]। काव्येऽस्मिन् पतञ्जलिना काव्यमिषेण योगस्याऽपि व्याख्या

---

१. पतञ्जलि—व्याकरणमहाभाष्यम्, १।१ आ० १॥

२. महानन्दमयं काव्यम्.......। ( महाराजसमुद्रगुप्त—कृष्णचरितम्, प्रस्तावना )

विहिताऽऽसीत् । अस्य "महानन्द"काव्यस्य मगधसम्राजा महानन्देन सह कश्चिदपि सम्बन्धो नाऽऽसीत् ।

चक्रपाणि[1]-पुण्यराज[2]-भोजदेवप्रभृतयोऽनेके ग्रन्थकाराः पतञ्जलिं चरकसंहितायाः प्रतिसंस्कारकं स्वीकुर्वन्ति । समुद्रगुप्तस्य कृष्णचरिताऽवलोकनेन ज्ञायते यद् महाभाष्यकारेण पतञ्जलिना चरकसंहितायां केषाञ्चिद् धर्माविरुद्धानां योगानां सन्निवेशो विहितः[3] । चरकसंहितायाः सूत्रस्थानादिष्वन्तेऽधोलिखितं वाक्यमुपलभ्यते—

१. पातञ्जलमहाभाष्यचरकप्रतिसंस्कृतैः ।
मनोवाक्कायदोषाणां हन्त्रेऽहिपतये नमः ॥
( चक्रपाणि—चरकसंहिताटीकायाः मङ्गलाचरणम् )

२. तदेवं ब्रह्मकाण्डे "कायवाग्बुद्धिविषया ये मलाः" ( कारिका १४७ ) इत्यादि श्लोकेन भाष्यकारप्रशंसोक्ता ॥ ( पुण्यराज—वाक्यपदीयटीका, काण्ड २, पृ० २८४, काशी-संस्करणम् । )

३. धर्मावियुक्ताश्चरके योगा रोगमुषः कृताः । ( समुद्रगुप्त—कृष्णचरितम्, प्रस्तावना । )

दृढबल ने जब चरक का परिष्कार किया, उस समय चरक के चिकित्सास्थान के १३वें अध्याय से आगे के ४० अध्याय नष्ट हो चुके थे । उन्हें दृढ़बल ने अनेक तन्त्रों के माध्यम से पूरा किया; परन्तु शैली वही रखी, जो ग्रन्थ में आरम्भ से विद्यमान थी । दृढ़बल स्वयं लिखता है—

अतस्तन्त्रोत्तममिदं चरकेणाऽतिबुद्धिना ।
संस्कृतं तत्त्वसम्पूर्णं त्रिभागेनोपलक्ष्यते ॥

तच्छंकरं भूतपतिं सम्प्रसाद्य समापयत् ।
अखण्डार्थं दृढबलो जातः पञ्चनदे पुरे ॥

( चरकसंहिता, सिद्धिस्थानम्, १२।६६-६८ )

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते[१] ।।

सम्प्रति प्रश्नोऽयं समुपतिष्ठते यत् किं "चरक" इति पतञ्जलेरेव नामान्तरमस्ति । श्री पं० युधिष्ठिरमीमांसकमहोदयेन स्वकीये "संस्कृत व्याकरणशास्त्र का इतिहास" इत्यभिधेये ग्रन्थे महाभाष्ये समुपलभ्यमानानां वैदिकपाठानां सम्प्रत्युपलभ्यमानशाखानां पाठैः सह तुलना विहिता[४] । तेनेदं साधितं यत् पतञ्जलिः प्रायः काठकसंहितापाठान् महाभाष्ये समुद्धृतवान् । काठकसंहिता चरकचरणान्तर्गताऽस्ति । अतः पतञ्जलिश्चरकशाखाध्यायीति प्रतीयते, तस्य चरकचरणत्वाच्च सः "चरक" इति वक्तुं शक्यते[२] ।

पण्डितगुरुपदहालदारमहोदयमतानुसारेण[३] "वातस्कन्धोपेत्तस्कन्धोपेतसिद्धान्तसारावली" इत्यभिधेयो वैद्यकग्रन्थोऽपि पतञ्जलिना प्रणीतः ।

कोषग्रन्थानामनेकासु टीकासु वासुकि-शेष-भोगीन्द्र-फणिपतिप्रभृतिनामभिः कस्यचित् कोशग्रन्थस्योद्धरणान्युपलभ्यन्ते । हेमचन्द्र आत्मनः "अभिधानचिन्तामणि कोषटीकायाः" प्रारम्भेऽन्यैः कोषकारैः सह वासुकिं निर्दिशति; परन्तु स्वग्रन्थे तस्यानेकान् पाठान् "शेष"नाम्ना समुद्धरति । अतः शेषवासुदेयोर्भेदो नाऽस्ति । "विश्वप्रकाशकोषस्य" प्रारम्भे (१।१६, १९) भोगीन्द्रफणिपति इत्याख्ये नामनी उपलभ्येते । राघवो "नानार्थमञ्जरी"ग्रन्थस्य प्रारम्भे शेषकारस्य नाम उद्धृतं करोति । अतः शेष-वासुकि-भोगीन्द्र-फणिपति-अहिपति-नागनाथ-पदकारादीनि पतञ्जलेरेव नामान्तराणि । अनेन प्रतीयते यन्महाभाष्यकारेण पतञ्जलिना कश्चन कोषग्रन्थोऽपि प्रणीत आसीत् ।

---

१. तुलनीयम्--पुनरुत्स्यूतं वासो देयम्, पुनर्निष्कृतो रथः (पतञ्जलि-महाभाष्यम्, २।१।१।४ पुनरुत्स्यूतं वासो देयम्, पुनरुत्सृष्टोऽनड्वान्, पुनर्निष्कृतो रथः । (काठकसंहिता, ८।१५)

२. कठचरकाल्लुक् । (पाणिनि–अष्टाध्यायी, ४।३।१०७) चरकप्रोक्तां संहितामधीयते विदन्ति वा ते चरकाः ।।

३. पं० गुरुपदहालदार--वृद्धत्रयी, पृष्ठ २९ ।।

शेषनाम्ना ग्रन्थकारेण (पतंजलिना) सेश्वरसांख्यस्य "आर्यापञ्चाशीति"-नामा कश्चित् कारिकाग्रन्थः प्रणीत आसीत्। अभिनवगुप्तेन तस्मिन्नेव किञ्चित् परिवर्तनं विधाय तस्य नाम "परमार्थसार" इति निर्धारितम्। सांख्यकारिकायाः युक्तिदीपिकाटीकायां पतञ्जलेराचार्यस्य सांख्यविषयकान्यनेकानि मतान्युद्धृतानि[1]। पतञ्जलेराचार्यस्यैकं मतं योगसूत्रस्य व्यासभाष्येऽप्युद्धृतमस्ति[2]।

गायकवाड़संस्कृतग्रन्थमालान्तर्गते प्रकाशिते शारदातनयप्रणीते "भावप्रकाशनम्" इत्यभिधेये ग्रन्थे वासुकि–(पतञ्जलि) प्रणीतात् कस्माच्चित् साहित्यशास्त्राद् "भावद्वारा रसोत्पत्ति"प्रकरणस्योल्लेख उपलभ्यते[3]।

शिवदासेन चक्रदत्तस्य टीकायां पतञ्जलि प्रणीतस्य "लोहशास्त्र"स्योल्लेखो[4] विहितः। पतञ्जलिप्रणीतत्वेनाऽभिहितेषु सांख्यशास्त्र-साहित्यशास्त्र-लोहशास्त्र-ग्रन्थेषु कस्तावन्महाभाष्यकारेण पतंञ्जलिना प्रणीत इति तु सन्दिग्धमेव।

---

१. "सांख्यकारिका"ग्रन्थस्य युक्तिदीपिका टीका, पृ० ३२, १००, १३९, १४५, १४९, १७५॥

२. अयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिति पतंजलिः। (योगसूत्रस्य व्यासभाष्यम्, ३।४४) तुलनीयम्––सेश्वरसांख्यानामाचार्यस्य पतञ्जलेरित्यर्थः। "गुणसमूहो द्रव्यमिति पतञ्जलिः" इति योगभाष्ये स्पष्टम्। (नागेश––उद्द्योत ४।१।४)

३. उत्पत्तिस्तु रसानां या पुरा वासुकिनोदिता।
नानाद्रव्यौषधैः पाकैर्व्यञ्जनं भाव्यते यथा॥
एवं भावा भावयन्ति रसानभिनयैः सह।
इति वासुकिनाऽप्युक्तो भावेभ्यो रससम्भवः॥ (शारदातनय—भावप्रकाशनम्, पृ० ३७, ४७)

४. यदाह पतञ्जलिः—दिव्यं दावं समादाय लौहकर्म समाचरेदिति॥
(द्रष्टव्यम्, गुरुपद हालदार—वृद्धत्रयी, पृ० २९)

## ५. पातञ्जलमहाभाष्यस्वरूपम्, तद्वैशिष्ट्यञ्च

स्वातन्त्र्येण सूत्राणि तु क्वचिदेव व्याख्यातानि महाभाष्ये। अन्यशास्त्रभाष्यापेक्षया व्याकरणमहाभाष्ये इदमस्ति वैलक्षण्यम्--वेदान्तादिभाष्यस्य व्याख्यानभूतं वार्तिकम्, व्याकरणे तु वार्तिकव्याख्यानभूतं वार्तिकम्। अतो व्याकरणभाष्यं महाभाष्यमित्युच्यते। स्वातन्त्र्येष्टयादिमत्वं महत्त्वमिति गुरुचरणाः। भाष्यलक्षणञ्च --

"सूत्रार्थो वर्ण्यते[1] यत्र वाक्यैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥"

यथा "**वृद्धिरादैच्**[2]" इति सूत्रे वृद्धिपदेन सूत्रकृता पाणिनिना मङ्गलं कृतम्, "**सिद्धे**[3] **शब्दार्थसम्बन्धे**" इत्यत्र सिद्धपदेन वार्तिककृता मङ्गलं विहितम्, तथैव "**अथ**[4] **शब्दानुशासनम्**" इत्यत्र "**अथ**"शब्देन भाष्यकृता मङ्गलमनुष्ठितम्।

महाभाष्ये यद्यपि प्रधानतया कात्यायनीयवार्तिकानामुल्लेखो विद्यते, तथापि तत्राऽन्येषामपि वार्तिककाराणां वार्तिकानि समुद्धृतानि सन्ति। विष्णुधर्मोत्तरपुराणस्य तृतीये खण्डे चतुर्थाध्याये भाष्यस्य लक्षणं कृतमस्ति यद् यस्मिन् ग्रन्थे सूत्रार्थंसूत्रानुसारि वाक्यवार्तिकस्थपदानां व्याख्यानं क्रियते, स ग्रन्थो भाष्यनाम्ना व्यवह्रियते।

### महाभाष्यस्य रचनाशैली

यद्यपि पातञ्जलमहाभाष्यं व्याकरणशास्त्रस्यैव मान्यो ग्रन्थो विद्यते, तथापि अन्यव्याकरणग्रन्थवदयं शुष्क एकाङ्गी च नाऽस्ति। अत्र व्याकरणसदृशस्य क्लिष्टस्य

---

१. विष्णुधर्मोत्तरपुराणम्, तृतीयखण्डम्, चतुर्थाध्यायः॥

२. पाणिनि—अष्टाध्यायी, १।१।१॥

३. पतञ्जलि—व्याकरणमहाभाष्यम्, १।१। आ० १॥

४. श्रीपं० युधिष्ठिरमीमांसकः "अथ शब्दानुशासनम्" इति पाणिनीयव्याकरणग्रन्थस्य प्रथमसूत्र मनुते। द्रष्टव्यम्, संस्कृत व्याकरणशास्त्र का इतिहास, प्रथम भाग, पृ० २०९-२१५, सं० २०३०।

विषयस्याऽत्यन्तसरस-सरल-प्राञ्जलया सरण्या प्रतिपादनं कृतमस्ति। अस्य भाषा दीर्घपदसमासरहिता, लघुलघुतरवाक्यकदम्बकैर्गुम्फिता, प्रश्नोत्तरसनाथा, सरला, सरसा, मञ्जुला चाऽस्ति। लेखनशैलीदृष्ट्या ग्रन्थोऽयं संस्कृतवाङ्मयेऽद्भुतो वर्तते। न कोऽपि ग्रन्थ एतद्रचनाशैलीसमतां विधातुं समर्थोऽस्ति। शबरस्वामिना महाभाष्यस्याऽऽदर्शे स्वं मीमांसाभाष्यं लिखितुं प्रयतितम्; परन्तु तस्य भाषा नैतादृशी प्राञ्जला जाता, स्थले-स्थले तद्भाषा प्रस्खलितभावा सती, न नैजं भावमभिव्यञ्जयितुं क्षमा। स्वामिशंकराचार्यकृता वेदान्तभाष्यभाषा यद्यपि प्राञ्जला, भावव्यञ्जनसमर्था, प्रसादगुणगुम्फिताऽस्ति, तथापि महाभाष्यवत् सरला, सरसा, स्वाभाविकी च नाऽस्ति। चरकसंहितायाः गद्यभागभाषा महाभाष्यवत्सरला, सरसा, स्वाभाविकी, प्राञ्जला वा सती अपि तद्विषयप्रतिपादनशैली अत्युत्कृष्टत्वं न बिभर्ति। अतो भाषायाः सरलता-प्राञ्जलता-स्वाभाविकता-विषयप्रतिपादनशैल्युत्कृष्टत्वादिदृष्ट्या पतञ्जलिप्रणीतं व्याकरणमहाभाष्यं समस्तसंस्कृतवाङ्मयेष्वादर्शभूतमस्ति।

### महाभाष्यस्य वैशिष्ट्यम्

महाभाष्यं हि पाणिनीयव्याकरणस्याऽत्यन्तं प्रामाणिकं ग्रन्थरत्नमस्ति। महामुनेः पतञ्जलेराचार्यस्य काले पाणिनीयव्याकरणस्याऽन्येषां प्राचीनानां व्याकरणग्रन्थानाञ्च महती ग्रन्थराशिर्विद्यमानाऽऽसीत्। महामुनिना भगवता पतञ्जलिना पाणिनीयव्याकरणव्याख्यानव्याजेन महाभाष्ये तेषां समस्तानां ग्रन्थानां सारः संगृहीतोऽस्ति। महाभाष्येऽनेकेषां प्राचीनवैयाकरणानामुल्लेखोऽस्ति, अनेकेषाञ्च प्राचीनग्रन्थानामनेकानि वचनानि चोद्धृतानि। महाभाष्यस्य सूक्ष्मपर्यालोचनया प्रतीयते यदयं ग्रन्थो न केवलं पाणिनीयव्याकरणशास्त्रस्यैव प्रामाणिको ग्रन्थोऽस्ति; अपि त्वयं समस्तानां विद्यानामाकरग्रन्थोऽस्ति। अत एवोक्तं भर्तृहरिणा वाक्यपदीये—

"कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने[1]॥"

### महाभाष्यस्याऽनेकशो लोपस्तदुद्धारश्च

उपर्युक्तलेखेन स्पष्टतया प्रतीयते यत् "पातञ्जलमहाभाष्यम्" अतिप्राचीनतमो

---

१. भर्तृहरि—वाक्यपदीयम्, २।४८६॥

ग्रन्थोऽस्ति । एतावति सुदीर्घकाले महाभाष्यस्याऽध्ययनाऽध्यापनपरम्परायाः न्यूनातिन्यूनं त्रिधोच्छेदोऽवश्यमेव जातः ।

**प्रथमवारम्**—भर्तृहरेराचार्यस्य लेखाज्ज्ञायते यद् बैंजिसौभवहर्यक्षप्रभृतिभिः शुष्कतार्किकैर्व्याकरणमहाभाष्यस्य प्रचारो विनष्टः । चन्द्राचार्येण महता परिश्रमेण दक्षिणस्य कस्माच्चिद् पर्वतीयप्रदेशादेकं हस्तलेखं लब्ध्वा तस्य पुनः प्रचारो विहितः । तथा हि—

"बैजिसौभवहर्यक्षैः शुष्कतर्कानुसारिभिः ।
आर्षे विप्लाविते ग्रन्थे संग्रहप्रतिकञ्चुके ॥"
यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः ।
काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः ॥
पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः ।
स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः ॥"[१]

कल्हणेन लिखितं यत् चन्द्राचार्येण काश्मीराधिपतेरभिमन्युमहाराजस्याऽऽदेशेन महाभाष्यस्योद्धारो विहितः ।[२]

**द्वितीयवारम्**—कल्हणमहोदयस्य "राजतरङ्गिणी"त्यभिधेयग्रन्थानुसारेण वैक्रमाब्दस्याऽष्टमे शतके महाभाष्यस्य प्रचारः पुनः विनष्टो जातः । काश्मीरस्य महाराजो जयापीडो देशान्तरात् "क्षीर"नामानं शब्दविद्योपाध्यायमाहूय विच्छिन्नस्य महाभाष्यस्य पुनः प्रचारमकारयत् । तथा हि—

"देशान्तरादागमय्याथ व्याचक्षाणान् क्षमापतिः ।
प्रावर्तयत विच्छिन्नं महाभाष्यं स्वमण्डले ॥
क्षीराभिधानाच्छब्दविद्योपाध्यायात् संभृतश्रुतः ।
बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः[३] ॥"

---

१. भर्तृहरि–वाक्यपदीयम्, २ । ४८७-४८९ ॥

२. चन्द्राचार्यादिभिर्लब्ध्वादेशं तस्मात्तदागमम् ।
प्रवर्तितं महाभाष्यं स्वं च व्याकरणं कृतम् ॥
(कल्हण—राजतरङ्गिणी, १।१७६ ॥)

३. कल्हण—राजतरङ्गिणी, १।४८८-४८९ ॥

महाराजस्य जयापीडस्य शासनकालः ८०८ वैक्रमसंवत्सरात् ८३९ मितवैक्रमसंवत्सरं यावत् स्वीक्रियते। एकः "क्षीरस्वामी"नामा वैयाकरणः क्षीरतरङ्गिणी-अमरकोशटीकाद्यनेकग्रन्थानां प्रणेताऽऽसीत्। कल्हणेन स्मृतः 'क्षीरः' एतस्मात् क्षीरस्वामिनो भिन्न एव। क्षीरस्वामी स्वग्रन्थेषु महाराजं भोजम्, तस्य सरस्वतीकण्ठाभरणञ्च बहुधा समुद्धरति। अतोऽस्य क्षीरस्वामिनः कालः वैक्रमैकादशशतकस्योत्तरार्द्धोऽस्ति[1]।

**तृतीयवारम्**—वैक्रमसंवत्सरस्य अष्टादशशतके एकोनविंशतितमे शतके च सिद्धान्तकौमुदीलघुशब्देन्दुशेखरादीनामर्वाचीनग्रन्थानामत्यधिकेन प्रचारेण महाभाष्यस्याऽध्ययनाऽध्यापनं प्रायो लुप्तमेव संवृत्तमासीत्। काश्या अनेकेषां वैयाकरणपण्डितानामियं धारणाऽस्ति—

"कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः।
कौमुदी यद्यकण्ठस्था वृथा भाष्ये परिश्रमः॥"

प्रथमवारं द्वितीयवारं च चन्द्राचार्यक्षीराभ्यां महाभाष्यस्योद्धारस्तात्कालिकानां सम्राजां साहाय्येन विहितः; परन्तु तृतीयवारं महाभाष्यस्योद्धारः कौपीनमात्रधारिणा परमहंसदण्डिना स्वामिविरजानन्दसरस्वतिमहाभागेन, तच्छिष्येण महर्षिदयानन्दसरस्वतिमहाभागेन च विहितः। श्रीमता विरजानन्दमहाभागेन तात्कालिकवैयाकरणपण्डितानां पूर्वोक्तधारणायाः विपरीताऽधोलिखिता घोषणा विहिता—

"अष्टाध्यायी महाभाष्ये द्वे व्याकरणपुस्तके।
ततोऽन्यत् पुस्तकं यत्तु तत्सर्वं धूर्तचेष्टितम्॥"

अद्य भारते वर्षे यत् कुत्रचिद् महाभाष्यस्येषदध्ययनाध्यापनमवलोक्यते, तत् श्रीस्वामिविरजानन्दमहाभागस्य, तच्छिष्यस्य महर्षिदयानन्दसरस्वतिमहाभागस्य चैव कृपाऽस्ति।

---

१. क्षीरतरङ्गिणी की रचना जयसिंह के शासनकाल में हुई थी, जो कि वि० सं० ११८५-११९५ तक रहा। द्रष्टव्य वही ग्रन्थ, अ० २१॥

## व्याकरणशास्त्रप्रवक्तॄणां वर्गीकरणम्

संस्कृतभाषायाः व्याकरणशास्त्रपरम्परा ब्रह्मणः प्रारब्धा, ब्रह्मा एवाऽऽदिमः प्रवक्ता व्याकरणशास्त्रस्येति पूर्वमेव व्याख्यातम्। व्याकरणशास्त्रस्य सुदीर्घपरम्पराया ऐतिहासिकः केन्द्रबिन्दुः पाणिनिराचार्य एव स्वीक्रियते। अतो व्याकरणशास्त्र-प्रवक्तार ऐतिहासिकदृष्ट्या द्विधा विभज्यन्ते—

(१) पाणिनेः पूर्ववर्तिनः।

(२) पाणिनेरर्वाचीनाश्चेति भेदात्।

पाणिनेः पूर्ववर्तिनो वैयाकरणा अपि द्विधा विभज्यन्ते—

(१) अष्टाध्याय्यामनुल्लिखिताः।

(२) अष्टाध्याय्यामुल्लिखिताश्चेति भेदात्।

श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयमतानुसारेण "पाणिनेः पूर्ववर्तिनः पाणिनीयाऽष्टाध्याय्यामनुल्लिखिताः" इत्यस्मिन् प्रथमवर्गे—ब्रह्मा-बृहस्पति-इन्द्र-शिव-वायु-भरद्वाज-भागुरि–पौष्करसादि–चारायण-काशकृत्स्न-शन्तनु–वैयाघ्रपद्य-माध्यन्दिनि-रौढि-शौनकि-गौतम-व्याडिप्रभृतयः षोडश वैयाकरणाः समाविशन्ति। "पाणिनेः पूर्ववर्तिनः अष्टाध्याय्यामुल्लिखिता" इत्यस्मिन् द्वितीये वर्गे आपिशलि-काश्यप-गार्ग्य-गालव-चाक्रवर्म्मण-भारद्वाज-शाकटायन-शाकल्य-सेनक-स्फोटायनप्रभृतयो दश वैयाकरणाः समाविष्टाः, ये ह्यष्टाध्याय्यां पाणिनिना समुल्लिखिताः।

पाणिनेः समकालीना वैयाकरणा यास्क-कात्यायन-व्याडिप्रभृतय आसन्। यद्यपि श्रीमीमांसकमहोदयेन संग्रहकारस्य व्याडेः पाणिनीयाऽष्टाध्याय्यामनुल्लिखितपाणिनिपूर्ववर्तिषु वैयाकरणेषु गणना विहिता; परन्तु तन्न समीचीनम्, यतो हि व्याडेरपरं नाम दाक्षायणोऽप्यासीत्, व्याडिश्च पाणिनेर्मातुल आसीदिति कृत्वा सः पाणिनेः समकालिक एव प्रतीयते। मया "पाणिनेः समकालिकवैयाकरणाना"-मेकोऽपरो वर्गो निर्धारितः, यत्र निरुक्तकारयास्काचार्य–वार्तिककारकात्यायन-संग्रहकारव्याडिरित्येतेषामाचार्याणां परिगणनं विहितम्।

पाणिनेरर्वाचीना अनेके वैयाकरणाः समभूवन्निति श्रीपण्डितयुधिष्ठिरमीमांसक-महोदयेन स्वकीये "संस्कृत–व्याकरणशास्त्र का इतिहास" इत्यभिधेये ग्रन्थे समुपवर्णितम् । अत्र क्रमशः पाणिनेः पूर्ववर्तिनामष्टाध्याय्यामनुल्लिखितानामुल्लिखि-तानाञ्चाऽऽचार्याणां, पाणिनेः समकालीनानामाचार्याणां, अष्टाध्यायिवृत्तिकार-वार्तिक-कार-वार्तिकभाष्यकाराणां, काशिकावृत्तेर्व्याख्यातृविदुषामाचार्याणां, महाभाष्यटीका-कार–प्रदीपव्याख्याकार-प्रक्रियाग्रन्थकाराणां, उणादिसूत्र-लिङ्गानुशासन-परिभाषा-पाठ-फिट्सूत्राणां प्रवक्तृणां, व्याख्यातृणां, व्याकरणशास्त्रस्य दार्शनिकग्रन्थकार-काव्यशास्त्रकारवैयाकरणानां, ततः पाणिनेरर्वाचीनानां प्रामुख्यम्भजमानानां वैयाकरणानाम्परिचयः समुपवर्णितः ।

॥ इति संस्कृतव्याकरणशास्त्रैतिह्यविमर्शे व्याकरणशास्त्रविकासवर्णनं नाम द्वितीयोऽध्यायः ॥

अथ तृतीयोऽध्यायः

# अष्टाध्याय्यनुल्लिखितपाणिनिपूर्ववर्ति-वैयाकरणवर्णनम्

## १. संस्कृतव्याकरणशास्त्रस्याऽऽदिमः प्रवक्ता–ब्रह्मा

भारतीयैतिह्यग्रन्थेषु सर्वासामपि विद्यानाम्प्रथमः प्रवक्ता ब्रह्मेत्युक्तम्। तदनुसारेण व्याकरणशास्त्रस्याऽऽदिमः प्रवक्ता अपि ब्रह्मेति सुनिश्चितम्। तदुक्तम् ऋक्तन्त्रकृता—

**'यथाऽऽचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते [१]।'**

लोके प्रकाशितानां सर्वासामपि विद्यानाम्प्रवचनमादौ ब्रह्मा चकारेति न तिरोहितं सकलभारतीयप्राचीनैतिह्यविदाम्। ब्रह्मण इदम्प्रवचनमतिविस्तृतमासीत्। इदमादिमम्प्रवचनमेव 'शास्त्रम्', 'शासनम्' इत्यभिधेयेन वा प्रसिद्धम्। उत्तरवर्तीनि सर्वाण्यपि प्रवचनानि ब्रह्मण आदिमप्रवचनानुसारेणैव जातत्वात्, अनुशास्त्रम्, अनुतन्त्रम्, अनुशासनम्, इत्येवं रूपेणोच्यन्ते। पण्डितभगवद्दत्तमहोदयेन स्वकीयस्य 'भारतवर्ष का बृहद् इतिहास' इति ग्रन्थस्य द्वितीये भागे चतुर्थाध्याये ब्रह्मणा प्रोक्तानां द्वाविंशतिशास्त्राणामुल्लेखो[२] विहितः। तद्यथा—

---

१. ऋक्तन्त्रम्, १।४।

२. द्रष्टव्यम्, पं० युधिष्ठिर मीमांसक—संस्कृत व्याकरणशास्त्र का इतिहास, पृ० ५९, सं० २०३० वै०।

| | | |
|---|---|---|
| (१) वेदज्ञानम् | (९) धर्मशास्त्रम् | (१७) शिल्पशास्त्रम् |
| (२) ब्रह्मज्ञानम् | (१०) अर्थशास्त्रम् | (१८) अश्वशास्त्रम् |
| (३) योगविद्या | (११) कामशास्त्रम् | (१९) नाट्यवेदः |
| (४) आयुर्वेदः | (१२) व्याकरणम् | (२०) इतिहास-पुराणम् |
| (५) हस्त्यायुर्वेदः | (१३) लिपिज्ञानम् | (२१) मीमांसाशास्त्रम् |
| (६) रसतन्त्रम् | (१४) ज्योतिषशास्त्रम् | (२२) शिवस्तवः, स्तवशास्त्रं वेति । |
| (७) धनुर्वेदः | (१५) गणितशास्त्रम् | |
| (८) पदार्थविज्ञानम् | (१६) वास्तुशास्त्रम् | |

## (२) संस्कृतव्याकरणशास्त्रस्य द्वितीयः प्रवक्ता—बृहस्पतिः

ऋक्तन्त्रानुसारेण[1] व्याकरणशास्त्रस्य द्वितीयः प्रवक्ता बृहस्पतिः । अयमङ्गिरसपुत्रः, अत एवाऽयमाङ्गिरसनाम्नाऽपि प्रसिद्धः । ब्राह्मणग्रन्थेष्वयं देवानां पुरोहित इत्युक्तः[2] । कोशग्रन्थेष्वयं सुराचार्यः, मत्स्यपुराणे च वाक्पतिपदेन स्मृतः[3] । देवगुरुणा बृहस्पतिनाऽनेकेषां शास्त्राणां प्रवचनं विहितमिति प्राचीनेषु ग्रन्थेषूपलभ्यते । महाभारते बृहस्पतिः समस्तानां वेदाङ्गानां प्रवक्ता अभिहितः[4] । पतञ्जलेराचार्यस्य व्याकरणमहाभाष्यस्य **"बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणम्प्रोवाच, नान्तं जगाम"**[5] इति वचनानुसारेण बृहस्पतिना इन्द्राय दिव्यं वर्षसहस्रं यावत् प्रतिपदव्याकरणापदेशो विहितः । "शब्दपारायणम् प्रोवाच" इति भाष्योक्त्या ज्ञायते यद् बृहस्पतिना प्रोक्तं व्याकरणशास्त्रम् "शब्दपारायणम्" इत्यभिधेयेन प्रसिद्धमासीत् ।

---

१. ऋक्तन्त्रम्, १।४ ।।

२. बृहस्पतिर्वै देवानां पुरोहितः ।। (ऐतरेयब्राह्मणम्, ८।२६)

३. भार्यामर्पय वाक्पतेस्त्वम् ।। ( मत्स्यपुराणम्, २३।४)

४. वेदाङ्गानि बृहस्पतिः ।। (महाभारतम्, शान्तिपर्व, ११२।३२ । कुम्भघोणसंस्करणम्)

५. पतञ्जलि—व्याकरणमहाभाष्यम्, १।१। आ० १ ।।

एतदतिरिक्तं बृहस्पतिना सामगान-अर्थशास्त्र-पुराणेतिहास-ज्यौतिष-वास्तुशास्त्र-अगदतन्त्रप्रभृतिशास्त्राणामपि प्रवचनं विहितम्। छान्दोग्योपनिषदि[1] बृहस्पतेराचार्यस्य सामगानस्योल्लेख उपलभ्यते। बृहस्पतिना एकमर्थशास्त्रमपि प्रणीतम्। महाभारते बार्हस्पत्यस्यार्थशास्त्रस्य विस्तारस्त्रिसहस्राऽध्यायमितः प्रोक्तः[2]। कौटिल्यार्थशास्त्र-कामन्दकीयनीतिसार-याज्ञवल्क्यस्मृतिबालटीकाप्रभृतिषु ग्रन्थेषु बार्हस्पत्यार्थशास्त्रस्य वचनान्युद्धृतानि सन्ति। वायुपुराणानुसारेण बृहस्पतिना पुराणेतिहासस्याऽपि प्रवचनं विहितम्। तथा चोक्तं वायुपुराणे—

"सर्वपापहरं पुण्यं पवित्रञ्च यशस्वि च।
ब्रह्मा ददौ शास्त्रमिदम्पुराणम्मातरिश्वने॥
तस्माच्चोशनसा प्राप्तं तस्माच्चापि बृहस्पतिः।
बृहस्पतिस्तु प्रोवाच सवित्रे तदनन्तरम्[3]॥"

"प्रबन्धचिन्तामणि" ग्रन्थावलोकनेन ज्ञायते यद् बृहस्पतिना वेदाङ्गान्तर्गतस्य ज्यौतिषशास्त्रस्यापि प्रवचनं विहितम्[4]। मत्स्यपुराणे बृहस्पतिर्वास्तुशास्त्रस्य प्रवर्तक उक्तः[5]। बृहस्पतिना अगदतन्त्रस्याऽपि प्रवचनं कृतमासीत्।

## (३) व्याकरणशास्त्रस्याऽऽदिमः संस्कर्ता—इन्द्रः

संस्कृतव्याकरणशास्त्रस्यैन्द्रसम्प्रदायप्रवर्तकः, तृतीयः प्रवक्ता, आदिमश्च संस्कर्ता इन्द्रो बभूव। ऋक्तन्त्रानुसारेणाऽयं बृहस्पतेराचार्यस्य शिष्यः। इन्द्रेण संस्कृत-

---

१. छान्दोग्योपनिषद्, २।२२।१॥

२. अध्यायानां सहस्रैस्तु त्रिभिरेव बृहस्पतिः॥ (महाभारतम्, शान्तिपर्व, ५९।८४॥)

३. वायुपुराणम्, १०३। ५८-५९॥

४. चेद् बृहस्पतिमतं प्रमाणम्॥ (प्रबन्धचिन्तामणि, पृ० १०९)

५. तथा शुक्रबृहस्पती········अष्टादशैते विख्याता वास्तुशास्त्रोपदेशकाः॥ (मत्स्यपुराणम्, २५१।३-४)

व्याकरणशास्त्रस्य प्रवचनं विहितमिति ऋक्तन्त्रात्[१] पातञ्जलमहाभाष्याच्च[२] ज्ञायते। इन्द्रेण ब्रह्मबृहस्पतिभ्यां प्रवर्तितस्य व्याकरणशास्त्रस्य प्रकृतिप्रत्ययविभाग-द्वारा संस्कारो विहितः। व्याकरणशास्त्रजिज्ञासूनां प्रार्थनया ते व्याकरणज्ञाने दीक्षितारश्च कृताः। इन्द्रात् पूर्वं संस्कृतभाषाऽव्याकृता व्याकरणसम्बन्धरहिताऽऽ-सीत्। इन्द्रेण सर्वप्रथमं प्रकृतिप्रत्ययविभागं विचार्य शब्दोपदेशप्रक्रिया विकसिता। तथा चोक्तं तैत्तिरीयसंहितायाम्—

**"वाग् वै[३] पराच्यव्याकृतावदत्। ते देवा इन्द्रमब्रुवन्, इमां नो वाचं व्याकुर्विति। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोदिति।।"**

एतदेव व्याचक्षाणेन सायणाचार्येणोक्तम्—

**"तामखण्डां[४] वाचं मध्ये विच्छिद्य प्रकृतिप्रत्ययविभागं सर्वत्राऽक-रोदिति॥"**

**वंशो देशश्च**

इन्द्रः कश्यपप्रजापतेः पुत्र आसीत्। अस्य माता अदितिर्दक्षप्रजायतेः कन्या आसीत्। महाभारते[५] पुराणेषु[६] च धाता-अर्यमा-मित्र-वरुण-अंश-( अंशुमान् )-भग-विवस्वान्-पूषा-पर्जन्य-त्वष्टा-विष्णुप्रभृतयो[७] महेन्द्रस्यैकादश भ्रातर उक्ताः सन्ति,

---

१. "यथाऽऽचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमाचक्षते"॥ (ऋक्तन्त्रम्, १।४)

२. बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवा-च, नान्तं जगाम। ( पतञ्जलि–व्याकरणमहाभाष्यम्, १।१। आ० १॥ )

३. तैत्तिरीयसंहिता, ६।४।७॥

४. सायणऋग्भाष्यम्, उपोद्घातः, भाग १, पृ० २६, पूनासंस्करणम्॥

५. महाभारतम्, आदिपर्व, ६६।१५-१६॥

६. भविष्य० ब्रा० प० ७८।५३॥

७. इनमें से आठ आदित्यों के नाम ताण्ड्य-ब्राह्मण २४।१२।२४ में लिखे हैं॥

ते सर्वे चाऽदितेः पुत्रत्वादादित्याः प्रोच्यन्ते । तेषु विष्णुः कनिष्ठो बभूव, अत एव स "इन्द्रावरज" इत्युच्यते[1] । अग्निसोमावपीन्द्रस्य भ्रातरौ[2]; किन्तु न सहोदरौ स्तः ।

प्राचीनकाले "त्रिविष्टप"नाम्ना प्रसिद्धः स्वर्गलोक आसीत्, तत्रत्या निवासिनश्च देवा इत्युच्यन्ते स्म। इन्द्रस्तस्यैव स्वर्गलोकस्य राजा आसीत् । इन्द्रस्य बृहस्पति-अश्विनीकुमार-मृत्यु-(यम)-कौशिक-विश्वामित्रप्रभृतयः पञ्च आचार्या आसन् । तत्रेन्द्रेण प्रजापतेरात्मज्ञानमनुशीलितम्,[3] मीमांसाशास्त्रमधीतम्,[4] बृहस्पतेः शब्दशास्त्रस्याऽध्ययनं कृतम्,[5] अश्विनीकुमाराभ्यामायुर्वेदज्ञानमवाप्तम्,[6] मृत्युतः पुराणानामध्ययनं विहितम् ।[7]

इन्द्रः स्वर्गनिवासिनां राजा आसीदतोऽयं देवराज इत्युच्यते । देवासुर-संग्रामे समाप्ते पुनरनेन विश्वामित्रतो वेदानामध्ययनं कृतम्[8] । अयं हि वृत्रं निहत्य

---

१. प्रजापतिरिन्द्रमसृजतानुजमवरं देवानाम् ।। (तैत्तिरीयब्राह्मणम्, २।२।१०।।)

२. स इन्द्रोऽग्नीषोमौ भ्रातरावब्रवीत् ।। (शतपथब्राह्मणम्, ११।१६।१९ ।।)

३. छान्दोग्योपनिषद्, ८।७-११।।

४. तद्यथा ब्रह्मा प्रजापतये प्रोवाच, सोऽपीन्द्राय, सोऽप्याऽऽदित्याय ।। (श्लोक-वार्तिक—पार्थसारथि मिश्र की टीका, पृ० ८, काशी-संस्करणम् ।)

५. ...... बृहस्पतिरिन्द्राय...... । (ऋक्तन्त्रम्, १।४।) बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच ।। (पतञ्जलि-व्याकरणमहाभाष्यम्, १।१।१)

६. अश्विभ्यां भगवाञ्छक्रः । ( चरकसंहिता, सूत्रस्थानम्, १।५) अश्विभ्यामिन्द्रः । (सुश्रुतसंहिता, सूत्रस्थानम्, १।२०)

७. सविता मृत्यवे प्राह मृत्युश्चेन्द्राय वै पुनः । (वायुपुराणम्, १०३।६०)

८. युद्धे वा असुरैर्महासंग्रामं संयेते तद्धि वेदान् निराचकार । तान् ह विश्वामित्राद-धिजगे । तेन ह वै कौशिक ऊचे ।। ( जैमिनीयब्राह्मणम्, २।७९ )

'महेन्द्र'नाम्ना प्रसिद्धिं गतः[१]। इन्द्रस्य मन्त्रिपरिषदि एकसहस्रमृषय आसन्, अतोऽयं सहस्राक्ष इत्युच्यते[२]। सहस्रभगरूपपौराणिककथाया एतदेव मूलम्।

इन्द्रस्य भरद्वाजादयोऽनेके शिष्या बभूवुः। वायुपुराणानुसारेणेन्द्रो वशिष्ठाय पुराणविद्यायाः प्रवचनं कृतवान्[३], तथा च महाभारतानुसारेणेन्द्रतोऽर्जुनेन दिव्यास्त्र-शिक्षाऽवाप्ता[४]।

**कालः**

इन्द्रस्य समयविषये निश्चितरूपेण किमपि न वक्तुं शक्यते। इन्द्रो दीर्घ-जीवी आसीत्, अध्यात्मज्ञानार्थं स एकोत्तरशतवर्षपर्यन्तं ब्रह्मचर्यव्रतं पालयामास इति प्राचीनैतिह्यग्रन्थेभ्योऽवगम्यते[५]। इन्द्रस्य समयो वैक्रमाब्दात् पञ्चशतोत्तरनव-सहस्र-(९५००) वर्षपूर्वमिति श्रीपण्डितयुधिष्ठिरमीमांसकमतं न समीचीनम्, इन्द्रशिष्यस्य भरद्वाजस्य रामायणकालेऽपि सत्वात्। रामायणकालस्त्रेतायुगस्य द्वितीयचरणम्, अर्थाद् अद्यप्रभृति १२,६९,०८२ (द्व्यशीत्युत्तरैकोनसप्ततिसहस्र-द्वादशलक्ष) मितवर्षेभ्यः पूर्वमस्ति[६]। अतो मदीयदृष्ट्या इन्द्रस्य कालः सत्य-युगस्य चतुर्थचरणमिति स्वीकर्तुं शक्यते।

---

१. इन्द्रो वै वृत्रमहन् सोऽन्यान् देवान् अत्यमन्यत। स महेन्द्रोऽभवत्॥

(मैत्रायणीयसंहिता, (४।६।८)

इन्द्रो वै वृत्रं हत्वा स महेन्द्रोऽभवत्॥ (काठकसंहिता, २८।२)

इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत॥ (महाभारतम्. शान्तिपर्व, १५।१५, कुम्भघोणसंस्करणम्)

२. इन्द्रस्य हि मन्त्रिपरिषदि ऋषीणां सहस्रम्। तस्मादिमं द्व्यक्षं सहस्राक्षमाहुः॥ (कौटिल्य-अर्थशास्त्रम् १।१५)

३. इन्द्रश्चापि वशिष्ठाय सोऽपि सारस्वताय च॥ (वायुपुराणम्, १०३।६०)

४. यमात् कुबेराद् वरुणादिन्द्राच्च कुरुनन्दन।

अस्त्राण्यधीतवान् पार्थो दिव्यान्यमितविक्रमः॥ (महाभारतम्, वनपर्व, २२।१३)

५. छान्दोग्योपनिषद्, ८।७-११॥

६. द्रष्टव्यम्, पं० रघुनन्दन शर्मा—वैदिक सम्पत्ति, पृ० १०२, शूरजी वल्लभ-दास, बम्बई, सं० २०१६॥

**कृतयः**

इन्द्रेण व्याकरणशास्त्रस्य प्रवचनं विहितम्। यद्यपि ऐन्द्रव्याकरणं सम्प्रति नोपलभ्यते, तथाप्यनेकेषु ग्रन्थेषु अस्योल्लेखोऽत्रलोक्यते। तथा चोक्तं शाकटायन-व्याकरणे—

"जराया[१] ङसीन्द्रस्यार्ऽच॥"

लङ्कावतारसूत्रे[२], हैमबृहद्वृत्त्यवचूर्णिग्रन्थे[३], सोमेश्वरसूरिप्रणीते यशस्तिलक-जम्पूग्रन्थे[४] चैन्द्रव्याकरणस्योल्लेखो वर्तते। द्वादशशतके देवबोधेन महाभारत-टीकायामुक्तम्—

"यान्युज्जहार माहेन्द्राद् व्यासो व्याकरणार्णवात्।
पदरत्नानि किं तानि सन्ति पाणिनिगोष्पदे[५]॥"

अनेनाऽनुमीयते यद् ऐन्द्रव्याकरणं बृहदासीत्। तिब्बतीयग्रन्थानुसारेण ऐन्द्रव्याकरणपरिमाणं पञ्चविंशतिसहस्रश्लोकात्मकमासीदिति[६] श्रीपण्डित-युधिष्ठिरमीमांसकेन स्वकीये "संस्कृत, व्याकरणशास्त्र का इतिहास" इत्यभिधेये ग्रन्थे सम्यग् व्याख्यातम्[७]। व्याकरणातिरिक्तानामायुर्वेद[८]-अर्थशास्त्र[९]-मीमांसा[१०]-

१. जैनशाकटायन-व्याकरणम्, १।२।३७॥
२. इन्द्रोऽपि महामते अनेकशास्त्रविदग्धबुद्धिः स्वशास्त्रप्रणेता॥ (टेक्निकल टर्म्स आफ संस्कृत ग्रामर, पृ० २८०, प्र० सं० पर उद्धृत)
३. ऐन्द्रैशानादिषु चाऽज्झलादिरूपस्याऽसिद्धेः॥ (हैमबृहद्वृत्त्यवचूर्णि, पृष्ठ १०)
४. यशस्तिलकचम्पू, प्रथम आश्वास, पृ० ९० ।
५. देवबोध—महाभारत की ज्ञानदीपिका टीका का आरम्भ।
६. द्रष्टव्य, जर्नल गंगानाथ झा रिसर्च इन्स्टीट्यूट, भाग १, संख्या ४, पृ० ४१०, सन् १९४४ ई०।
७. द्रष्टव्य, पं० युधिष्ठिर मीमांसक— संस्कृत व्याकरणशास्त्र का इतिहास, भाग १, पृ० ८५, सं० २०३० ॥
८. ऋषिप्रोक्तो भरद्वाजस्तस्माच्छक्रमुपागमत्। (चरकसंहिता, सूत्रस्थानम्, १।५) इन्द्रादहम्। (सुश्रुतसंहिता, सूत्रस्थानम्, १।२०)
९. नेति बाहुदन्तीपुत्रः—शास्त्रविददृष्टकर्माकर्मसु विषादं गच्छेत्। अभिजनप्रज्ञाशौचशौर्याऽनुरागयुक्तानमात्यान् कुर्वीत गुणप्राधान्यादिति।
(कौटिल्यार्थशास्त्रम्, १।८)
"प्राचीन टीकाकारों के मतानुसार बाहुदन्तीपुत्र इन्द्र है।"
(द्रष्टव्य, पं० युधिष्ठिर मीमांसक—संस्कृत व्याकरणशास्त्र का इतिहास, भाग १, पृ० ८८, सं० २०३० ॥)
१०. पार्थसारथि मिश्र—श्लोकवार्तिक टीका, पृ० ८, काशी-संस्करणम्॥

छन्दःशास्त्र[1]-पुराणविद्या[2]-गाथा[3]-( इन्द्रगीत गाथा ) प्रभृतिशास्त्राणाञ्च प्रवचनमिन्द्रश्चकारेति भारतीयैतिह्यग्रन्थेभ्योऽवगम्यते ।

## (४) आचार्यः शिवः

पूर्वमेव वर्णितम्मया यत् सत्ययुगस्य चतुर्थचरणे समुत्पन्नः शिवो वेदाङ्गप्रवर्तकः, किञ्चाऽनेकशास्त्रप्रवर्तकः । तथा च वैक्रमाब्दात् त्रिसहस्रवर्षपूर्वमुत्पन्नस्तस्मात् पौराणिकशिवात् सर्वथा भिन्नोऽपर आचार्यो महेश्वर एव, येन वैक्रमाब्दात् २९०० ( नवशताधिकद्विसहस्र- ) वर्षप्राचीनाय पाणिनये व्याकरणशास्त्रोपदेशो विहितः ।

महाभारते,[4] हैमबृहद्वृत्त्यवचूर्णिग्रन्थे[5] च समुपलब्धवर्णनेन ज्ञायते यत् पौराणिकशिवेनैव षडङ्गप्रवचनं, व्याकरणशास्त्रप्रवचनं च विहितमिति । ऋग्वेदकल्पद्रुमे केशवेन यामलाष्टकतन्त्रस्योपशास्त्रनिर्देशकाः केचन श्लोकाः समुद्धृताः[6], तदनुसारेण रौद्रव्याकरणं पौराणिकशिवप्रोक्तमेव; परन्तु श्लोकात्मकपाणिनीय-

---

१. तस्माद् दुश्च्यवनस्ततोऽसुरगुरुः.......... ( यादवप्रकाश—छन्दःशास्त्र की टीका के अन्त में )

२. सविता मृत्यवे आह मृत्युश्चेन्द्राय वै पुनः ।
इन्द्रश्चापि वशिष्ठाय सोऽपि सारस्वताय च ।। (वायुपुराणम्, १०३।६०)

३. महाभारतम्, वनपर्व, ८८।५ ।।

४. वेदात् षडङ्गान्युद्धृत्य । ( तदेव, शान्तिपर्व, २८४।९२ )

५. ब्राह्ममैशानमैन्द्रञ्च प्राजापत्यं बृहस्पतिम् ।
त्वाष्ट्रमापिशलञ्चेति पाणिनीयमथाष्टमम् ।। ( हैमबृहद्वृत्त्यवचूर्णि, पृ० ३ )

६. यस्मिन् व्याकरणान्यष्टौ निरूप्यन्ते महान्ति च ।
तत्राद्यं ब्राह्ममुदितं द्वितीयं चान्द्रमुच्यते ।।
तृतीयं याम्यमाख्यातं चतुर्थं रौद्रमुच्यते ।
वायव्यं पञ्चमं प्रोक्तं षष्ठं वारुणमुच्यते ।।
सप्तमं सौम्यमाख्यातमष्टमं वैष्णवं तथा ।।
( केशव—ऋग्वेदकल्पद्रुमे उद्धृताः यामलाष्टकतन्त्रश्लोकाः, १०-१२)

शिक्षायां,[1] सारस्वतभाष्ये,[2] नन्दिकेश्वरकाशिकायां[3] च समुल्लिखितो महेश्वरः व्याकरणशास्त्रस्य माहेश्वरसम्प्रदायप्रवर्तकः पौराणिकशिवात् सर्वथा भिन्नो "महेश्वर"नामाऽभिधोऽपर आचार्य एव, यः पाणिनये व्याकरणशास्त्रमुपदिदेश।

पौराणिकशिवः प्रजापतिकश्यपस्य पुत्रः, माता चाऽस्य सुरभिनाम्नी आसीत्। अस्य दश सहोदरभ्रातर आसन्, ये भारतीयैतिह्यशास्त्रे एकादशरुद्रनाम्नोच्यन्ते। पौराणिकशिवस्य शिव-शर्व-भव-शंकर-शम्भु-पिनाकी-शूलपाणि-महेश्वर-महादेव-स्थाणु-गिरीश-विशालाक्ष-त्र्यम्बकप्रभृतीनि प्रधानानि प्रसिद्धतमानि च नामानि सन्ति। शिवोऽयं परमयोगी, दीर्घजीवी, अखण्डब्रह्मचर्य-योगज-शक्ति-रसायनसेवनादिना मृत्युञ्जय आसीत्। महाभारते शिवः सप्तवेदपारगेषु गणितः[4]। तत्रैव शिवः सांख्य-योगप्रवर्तकः, गीतवादित्रतत्त्वज्ञः, शिल्पिश्रेष्ठः, सर्वविधशिल्पप्रवर्तकश्चोक्तः[5]। श्रीकविराजसूरमचन्दजीमहोदयेन स्वकीये "आयुर्वेद का इतिहास" इत्यस्मिन् ग्रन्थे (पृ० ८३-८९) शिवप्रोक्तानां द्वादशग्रन्थानामुल्लेखो विहितः। तत्र आयुर्वेदातिरिक्तम्, वैशालाक्षाऽर्थशास्त्र—धनुर्वेद-वास्तुशास्त्र-नाट्यशास्त्र-छन्दःशास्त्रप्रभृतयो ग्रन्थाः प्रमुखाः॥

---

१. येनाक्षरसमाम्नायमधिगम्य महेश्वरात्। (श्लोकात्मक-पाणिनीयशिक्षा, श्लोक, ५०)

२. समुद्रवद् व्याकरणं महेश्वरे तदर्थकुम्भोद्धरणं बृहस्पतौ।
तद्भागभागाच्च गतं पुरन्दरे कुशाग्रबिन्दूत्पतितं हि पाणिनौ॥ (सारस्वतभाष्यम्)

३. नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।
उद्धर्तुकामः सनकादिसिद्धानेतद् विमर्शे शिवसूत्रजालम्॥
(नन्दिकेश्वरकाशिका)

४. महाभारतम्, शान्तिपर्व, १४२।४७, कुम्भघोणसंस्करणम्॥

५. सांख्याय सांख्यमुख्याय सांख्ययोगप्रवर्तिने।
गीतवादित्रतत्त्वज्ञो गीतवादनकप्रियः।
शिल्पिकः शिल्पिनां श्रेष्ठः सर्वशिल्पप्रवर्तकः।
(महाभारतम्, शान्तिपर्व, २८४।११४, १४२, १४८)

## (५) वायुः

संस्कृतव्याकरणशास्त्रस्य चतुर्थः प्रवक्ता वायुर्बभूव । तैत्तिरीयसंहितानुसारेण[१] वायोः साहाय्येन इन्द्रः प्रकृतिप्रत्ययरूपं व्याकरणशास्त्रम्प्रणिनाय । इन्द्रवायुसहयोगेन प्रवर्तमानमिदं व्याकरणशास्त्रं देववाण्याः सर्वप्रथमं व्याकरणमिति प्राचीनैतिह्यविद्भिरुच्यते । अतो वाण्यै "ऐन्द्रवायव" इति प्रयोग उपलभ्यते[२] । वायुपुराणे वायुः "शब्दशास्त्रविशारद" इत्युक्तः[३] ।

वायुना व्याकरणशास्त्रस्य प्रवचनं कृतमासीदिति कवीन्द्राचार्यप्रणीतसूचीपत्रस्य तृतीयपृष्ठाद्, यामलाष्टकतन्त्रस्याष्टसु व्याकरणेषूल्लेखाच्चाऽवगम्यते । वायुना हि ब्रह्मणः सकाशात् पुराणस्य शिक्षाऽधिगता, तथा तदेव पुराणज्ञानं तेन स्वशिष्यायोशनसे उपदिष्टम्[४] । पण्डितयुधिष्ठिरमीमांसकमतानुसारेण वायोः भार्या "अञ्जनी", पुत्रश्चाञ्जनेयो लोकविश्रुतो महाबली रामभक्तो हनुमान्[५] । वाल्मीकीयरामायणाऽवलोकनेन ज्ञायते यत्, हनुमानपि पितृवदेव शब्दशास्त्रस्य महान् वेत्ता बभूव[६]। हनुमानयं दाशरथेः श्रीरामचन्द्रस्य समकालिक आसीत् ।

---

१. वाग् वै पराच्यव्याकृतावदत् । ते देवा इन्द्रमब्रुवन् वाचं नो व्याकुर्विति । सोऽब्रवीत् वरं वृणै मह्यं चैव वायवे च सह गृह्याताम्—इति ।

( तैत्तिरीयसंहिता, ६।४।७।। )

२. वाग् वा ऐन्द्रवायवः ।। ( मैत्रायणीयसंहिता, ४।५।८ ।। कपि० ४२।३ )

३. तत्राऽभिमानी भगवान् वायुश्चाऽतिक्रियात्मकः ।
वातारणिः समाख्यातः शब्दशास्त्रविशारदः ।। ( वायुपुराणम्, २।४४ )

४. ब्रह्मा ददौ शास्त्रमिदं पुराणं मातरिश्वने ।
तस्माच्चोशनसा प्राप्तं तस्माच्चापि बृहस्पतिः ।। (वायुपुराणम्, १०३।५८)

५. अञ्जनीगर्भसम्भूतो हनुमान् पवनात्मजः । ( तदेव, ६०।७३ )

६. नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् ।
बहु व्याहरताऽनेन न किञ्चिदपभाषितम् ।।

( वाल्मीकीयरामायणम्, किष्किन्धाकाण्डम्, ३।२९)

**कालः**

उपर्युक्तवर्णनमवलोक्य वायोः कालो वैक्रमाब्दात् पञ्चशतोत्तराऽष्टसहस्रवर्षपूर्वम् (८५००) इति श्रीपण्डितयुधिष्ठिरमीमांसकमतं[1] न समीचीनम्, दाशरथि-श्रीरामचन्द्रसमये वायोराचार्यस्य विद्यमानत्वात्। अत एव मदीयदृष्ट्या वायोराचार्यस्य कालस्त्रेतायुगस्य द्वितीयचरणमेव स्वीकर्तुं शक्यते।

**कृतयः**

व्याकरणातिरिक्तं वायुना वर्तमानस्य वायुपुराणस्याऽपि प्रवचनं विहितमिति वायुपुराणात्,[2] महाभारताच्च[3] ज्ञायते। वायुना गाथाश्च प्रणीता इति मनुस्मृति-ग्रन्थादवगम्यते[4]।

## (६) आचार्यो भरद्वाजः

संस्कृतव्याकरणशास्त्रस्य पञ्चमः प्रवक्ता भरद्वाजो बभूवेति ऋक्तन्त्रादवगम्यते। अयमिन्द्रशिष्यः, आङ्गिरसबृहस्पतेश्च पुत्रः। अनेनेन्द्राद् व्याकरणम्,[5] आयुर्वेद-शास्त्र[6]ञ्चाधीतम्; पुराणज्ञानञ्च[7] तृणञ्जयतोऽवाप्तम्। वायुपुराणानुसारेण भरद्वाजाय धर्मशास्त्रस्योपदेशो विहितः[8]। भरद्वाजस्याऽनेके शिष्या आसन्, यान् स

---

१. द्रष्टव्य, पं० युधिष्ठिर मीमांसक—संस्कृत-व्याकरणशास्त्र का इतिहास, भाग १, पृ० ८९, सं० २०३०।

२ पुराणं सम्प्रवक्ष्यामि यदुक्तं मातरिश्वना। (वायुपुराणम्, १।४७)

३. वायुप्रोक्तमनुसृत्य पुराणमृषिसंस्तुतम्। (महाभारतम्, वनपर्व, १९१।१६)

४. अत्र गाथा वायुगीताः। (मनुस्मृतिः, ९।४२)

५. इन्द्रो भरद्वाजाय। (ऋक्तन्त्रम्, १।४) तस्य यानि व्यञ्जनानि तच्छरीरम्, यो घोषः स आत्मा, य ऊष्माणः स प्राणः……एतद्‌ु हैवेन्द्रो भरद्वाजाय प्रोवाच। (ऐतरेयारण्यकम्, २।२।४)

६. तस्मै प्रोवाच भगवानायुर्वेदं शतक्रतुः। (चरकसंहिता, सूत्रस्थानम्, १।२३)

७. तृणञ्जयो भरद्वाजाय। (वायुपुराणम्, १०३।६३)

८. भृगुणाऽभिहितं शास्त्रं भरद्वाजाय पृच्छते। (महाभारतम्, शान्तिपर्व, १८२।५)

व्याकरण[१]माऽऽयुर्वेदञ्चा[२]ऽपाठयत् । वायुपुराणानुसारेण भरद्वाजो गौतमाय पुराणशास्त्रमुपदिदेश[३] । वाल्मीकीयरामायणानुसारेण भरद्वाजस्याऽऽश्रमः प्रयागस्य गङ्गायमुनयोः सङ्गमे शोभते स्म[४] । भरद्वाजोऽमितायुः, अनूचानतमो, दीर्घजीवो चाऽऽसीदिति चरकसंहिता–ऐतरेयारण्यक-ऐतरेयब्राह्मणग्रन्थेभ्योऽवगम्यते[५] । तैत्तिरीयब्राह्मणग्रन्थे ( ३।१०।११ ) दीर्घजीविनो भरद्वाजस्येन्द्रेण सह विशिष्टसम्बन्धदर्शनादयमेव दीर्घजीवी भरद्वाजो व्याकरणशास्त्रप्रवक्ता इति सुनिश्चितम् ।

**कालः**

भरद्वाजः काशिपतिदिवोदासपुत्रस्य प्रतर्दनस्य पुरोहित आसीत्[६], प्रतर्दनश्च दाशरथिरामस्य समकालिक आसीत्[७] । रामसीतालक्ष्मणाः वनगमनकाले भर-

---

१. भरद्वाज ऋषिभ्य....। (ऋक्तन्त्रम्, १।४)

२. ऋषयश्च भरद्वाजात्...। अथ मैत्रीपर; पुण्यमायुर्वेदं पुनर्वसुः ॥ (चरकसंहिता, सूत्रस्थानम्, १।२७,३०)

३. गौतमाय भरद्वाजः । (वायुपुराणम्, १०३।६३)

४. गंगायमुनयोः सन्धौ प्रापतुर्निलयं मुनेः । (वाल्मीकीयरामायणम्, अयोध्याकाण्डम्, ५४।८)

५. तेनायुरमितं लेभे भरद्वाजः सुखान्वितः । (चरकसंहिता, सूत्रस्थानम्, १।२६), भरद्वाजो ह वा ऋषीणामनूचानतमो दीर्घजीवितमस्तपस्वितमः आस...। ( ऐतरेयारण्यकम्, १।२।२) भरद्वाजो ह वा कृशो दीर्घपालित आस। (ऐतरेयब्राह्मणम्, १५।५)

६. एतेन वै भरद्वाजः प्रतर्दनं दैवोदासिं समनह्यत् । ( मैत्रायणीयसंहिता, ३।३।७) एतेन ह वै भरद्वाजः प्रतर्दनं समनह्यत् । (गोपथब्राह्मणम्, २।१।१८)

७. तं विसृज्य ततो रामो वयस्यमकुतोभयम् ।
प्रतर्दनं काशिराजं परिष्वज्येदमब्रवीत् ॥ (वाल्मीकीयरामायणम्, उत्तरकाण्डम्, ३८।१५)

द्वाजस्याश्रमे निवासं चक्रुरिति वाल्मीकीयरामायणादवगम्यते[1]। सीतास्वयंवरानन्तरं दाशरथेः रामस्य जामदग्न्यरामेण सह साक्षात्कारो बभूव[2]। जामदग्न्यरामः त्रेताद्वापरयोः सन्धौ बभूवेति महाभारताज्ज्ञायते[3]। एभिः प्रमाणैर्मर्यादापुरुषोत्तमस्य श्रीरामचन्द्रस्य समये दीर्घजीविनो भरद्वाजस्य सत्ता सिद्ध्यति। श्रीरामचन्द्राऽवतारकालस्त्रेतायुगस्य द्वितीयचरणम्। अतो भरद्वाजस्य कालो वैक्रमाब्दात् ९३०० वर्षपूर्वमिति श्री पं० युधिष्ठिरमीमांसकमतं[4] न समीचीनम्, श्रीरामचन्द्रकाले भरद्वाजस्य विद्यमानत्वात्। अतएव, मदीयदृष्ट्या भरद्वाजस्य कालस्त्रेतायुगस्य द्वितीयचरणमेव स्वीकर्तुं शक्यते।

**कृतयः**

भरद्वाजेन प्रोक्तं व्याकरणं तु सम्प्रति नोपलभ्यते; किन्तु कात्यायनेन यजुःप्रातिशाख्ये आख्यातं ( क्रिया ) भरद्वाजदृष्टमुक्तम्[5]। अनेन प्रतीयते यद् भरद्वा-

---

१. रामस्त्वाश्रममासाद्य त्रासयन् मृगपक्षिणः।
गत्वा मुहूर्त्तमध्वानं भरद्वाजमुपागमत्॥
सीतातृतीयः काकुत्स्थः परिश्रान्तः सुखोचितः।
भरद्वाजाश्रमे रम्ये तां रात्रिमवसत् सुखम्॥ (तदेव, अयोध्याकाण्डम्, ५४।९,३५)

२. प्रतिगृह्य तु ताम्पूजामृषिदत्तां प्रतापवान्।
रामं दाशरथिं रामो जामदग्न्योऽभ्यभाषत॥
( वाल्मीकीयरामायणम्, बालकाण्डम्, ७५।२५ )

३. त्रेताद्वापरयोः सन्धौ रामः शस्त्रभृतां वरः।
असकृत् पार्थिवं क्षत्रं जघानाऽमर्षचोदितः॥ ( महाभारतम्, आदिपर्व, २।३ )

४. द्रष्टव्य, श्री पं० युधिष्ठिरमीमांसक—संस्कृत-व्याकरणशास्त्र का इतिहास, भाग १, पृ० ९२-९३, सं० २०३०।

५. भारद्वाजकमाख्यातम्। ( कात्यायन–यजुःप्रातिशाख्यम्, अ० ८, पृ० ३२७, मद्रासस्करणम्।
भरद्वाजेन दृष्टमाख्यातम्। ( उव्वट—यजुःप्रातिशाख्य ८ अध्यायस्थभाष्यम् )

जेन स्वव्याकरणे आख्यातविषये विशेषतया लिखितम्। एतदतिरिक्तं भरद्वाजेनाऽऽयुर्वेद[१]–धनुर्वेद[२]–राजशास्त्रा[३]–ऽर्थशास्त्र[४]-यन्त्रसर्वस्व[५]--पुराण[६] विद्या-धर्मशास्त्र[७] -शिक्षा[८]-उपलेख[९] प्रभृतीनि शास्त्राणि प्रणीतानीति प्राचीनभारतीयैतिह्यग्रन्थेभ्यो ज्ञायते।

## (७) आचार्यो भागुरिः

भागुरेराचार्यस्य नाम यद्यपि पाणिनीयाष्टाध्याय्यां नोपलभ्यते, तथापि भागुरेर्व्याकरणविषयकमतप्रदर्शनार्थं वैयाकरणनिकाये निम्नाङ्कितं पद्यमतिप्रसिद्धमस्ति—

---

१. आयुर्वेदं भरद्वाजश्चकार सभिषक्क्रियम्।
तमष्टधा पुनर्व्यस्य शिष्येभ्यः प्रत्यपादयत्॥ ( वायुपुराणम्, ९२।२२ )

२. भरद्वाजो धनुर्ग्रहम्। (महाभारतम्, शान्तिपर्वं, २१०।२१ )

३. भरद्वाजश्च भगवांस्तथा गौरशिरा भुवि।
राजशास्त्रप्रणेतारो ब्राह्मणा ब्रह्मवादिनः॥ ( तदेव, शान्तिपर्वं, ५८।३ )

४. इन्द्रस्य हि स प्रणमति यो बलीयसो नमतीति भारद्वाजः ( कौटिल्याऽर्थशास्त्रम्, १२।१ )
इन्द्रमेव प्रणमते यद्राजानमिति श्रुतिः। ( महाभारतम्, शान्तिपर्वं, ६४।४ )

५. द्रष्टव्य, श्री पं० युधिष्ठिर मीमांसक—संस्कृत-व्याकरणशास्त्र का इतिहास, प्रथम भाग, पृ० ९५, सं० २०३०।

६. गौतमाय भरद्वाजः। ( वायुपुराणम्, १०३।६३ )

७. द्रष्टव्य, संस्कारभास्कर, पत्रा २, हेमाद्रि में निर्दिष्ट भरद्वाज का एक लम्बा उद्धरण।

८. यो भरद्वाजशिक्षामर्थसमन्विताम्। ( भरद्वाजशिक्षा, पृ० ९९, भण्डारकर रिसर्च इन्स्टीट्यूट, पूनासंस्करणम् ) ·······प्रवक्ष्यामि, इति भरद्वाजमुनिनोक्तम्। ( भरद्वाजशिक्षा पर नागेश्वर भट्ट की टीका, पृ० १ )

९. द्रष्टव्यम्, पं० युधिष्ठिर मीमांसक—संस्कृत-व्याकरणशास्त्र का इतिहास, भाग १, पृ० ९५, सं० २०३०।

"वष्टि[1] भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥"

एतदाधारेणाऽवाप्योरुपसर्गयोरकारस्य लोपेन (अवगाह)वगाह-(अपिधान) पिधानशब्दयोः सिद्धिर्भवति, तथा हलन्तशब्देभ्य आपं (टापम्) प्रत्ययं विधाय वाचा-निशा-दिशादीनां शब्दानां निष्पत्तिर्जायते ।

पातञ्जल[2]महाभाष्यादपि प्रतीयते यत् कियन्त आचार्या हलन्तप्रातिपदिकेभ्योऽपि स्त्रीलिङ्गे टाप्प्रत्ययं मन्वते । पाणिनिना अजादिगणे क्रुञ्चा-उष्णिहा-देवविशा-शब्दाः पठिताः । काशिकाकारेणाऽप्येतेषु हलन्तशब्देषु टाप् स्वीक्रियते । भागुरेराचार्यस्य कतिपयानि वचनानि जगदीशतर्कालङ्कारेण स्वशब्दशक्तिप्रकाशिकायामुद्धृतानि । तथा हि—

"मुण्डादेस्तत् करोत्यर्थे गृह्णात्यर्थे कृतादितः ।
वक्तीत्यर्थे च सत्यादेर्, अङ्गादेस्तन्निरस्यति ॥

"तूस्ताद्विघाते संछादे वस्त्रात् पुच्छादितस्तथा ।
उत्प्रेक्षादौ कर्मणो णिस्तदव्ययपूर्वतः[3]"॥ इति भागुरिस्मृतेः ।

---

१. जिनेन्द्रबुद्धि—न्यास, ६।२।२७, पृ० ३४६ । धातुवृत्ति, इण् धातु, पृ० २४७ । प्रक्रियाकौमुदी, भाग १, पृ० १८२ । अमरटीकासर्वस्व, भाग १, पृ० ५३ में इस प्रकार का पाठ-भेद है—

टापं चापि हलन्तानां दिशा वाचा गिरा क्षुधा ।
वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ॥

२. यस्तर्ह्यनकारान्तात् क्रुञ्चा, उष्णिहा, देवविशा इति । (पतञ्जलि—व्याकरण-महाभाष्यम्, ४।१। आ० १ । सू० १)

३. जगदीश तर्कालङ्कार-शब्दशक्तिप्रकाशिका, पृ० ४४४-४४५ काशी-संस्करणम् ।

"वीणात उपगाने स्याद् हस्तितोऽतिक्रमे तथा ।
सेनातश्चाऽभियाने णिः श्लोकादेरप्युपस्तुतौ" ।। इति भागुरिस्मृतेः[1] ।

"गुपूधूपविच्छिपणिपनेरायः कमेस्तु णिङ् ।
ऋतेरियङ् चतुर्लषु नित्यं स्वार्थे परत्र वा" ।। इति भागुरिस्मृतेः[2] ।

"गुपो वधेश्च निन्दायां क्षमायां तथा तिजः ।
प्रतीकाराद्यर्थकाच्च कितः स्वार्थे सनो विधिः" ।। इति भागुरिस्मृतेः[3] ।

"अपादानसम्प्रदानकरणाधारकर्मणाम् ।
कर्तुश्चाऽन्योन्यसन्देहे परमेकं प्रवर्तते" ।। इति भागुरिवचनमेव शरणम्[4] ।

भागुरिशब्दे श्रूयमाणतद्धितप्रत्ययानुसारं भागुरेः पितुर्नाम "भगुरः" प्रतीयते । महाभाष्ये "भागुरी" नाम दृश्यते, तेन सम्भाव्यते यदियं भागुरेर्विदुषी भगिनी वर्तते । अनया पण्डितया लोकायतशास्त्रस्य टीकाऽपि कृताऽस्ति[5] । तस्माद् भगुरस्याऽपत्यं पुमान् भागुरिः, कन्या चेद् भागुरी । तथा च भागुरिः व्याकरणकर्ता, तत्स्वसा च लोकायतशास्त्रस्य प्रणेत्री दृश्यते ।

बृहत्संहितानुसारं[6] भागुरिर्बृहद्गर्गस्य शिष्य आसीत् । भागुरेर्मेरुपरिणामविषयकं मतं वायुपुराणेऽवलोक्यते[7] । भागुरेर्व्याकरणविषयकमतप्रदर्शकास्त्रयः श्लोका उपलभ्यन्ते । एकस्तु पूर्वमेवोक्तः द्वावधोलिखितौ—

---

१. जगदीश तर्कालङ्कार—शब्दशक्तिप्रकाशिका, पृ० ४४६, काशी-संस्करणम् ।

२. तदेव, पृ० ४४७ ।

३. तदेव, पृ० ४४७ ।

४. भाष्यव्याख्याप्रपञ्च, पृ० १२९, पुरुषोत्तमदेवीय परिभाषावृत्ति, राजशाही-संस्करणम् ।

५. वर्णिका भागुरी लोकायतस्य, वर्तिका भागुरी लोकायतस्य ( पतञ्जलिमहाभाष्यम्, ७।३। आ० १।४५), कैयटमते 'भागुरी' टीकाग्रन्थस्य नामाऽस्ति वर्णिकेति व्याख्यात्रीत्यर्थः, भागुरी टीकाविशेषः ।

६. बृहत्संहिता ४७।२, पृ० ५८१ ।

७. अष्टाश्रिमेनं सावर्णिश्चतुरस्रं तु भागुरिः ।
वार्ष्यायणिस्तु सामुद्रं शरावं चैव गालवः ।। ( वायुपुराणम्, ३४।६२)

"हन्तेः कर्मण्युपष्टम्भात् प्राप्तुमर्थे तु सप्तमी ।
चतुर्थीबाधिकामाहुश्चूर्णिभागुरिवाग्भटाः ॥
स्यान्मतं करोतीति कारणं वा यथोक्तकम् ।
ष्ठिवसिव्योर्ल्युट्परयोर्दीर्घत्वं वष्टि भागुरिः ।
करोतेः कर्तृभावे च सौनागाः प्रचक्षते[१] ॥"

भागुरेः श्लोकानां पद्यबद्धत्वादनुमीयते यत् कदाचिदस्य व्याकरणं पद्यबद्धं स्यात् । भाषावृत्त्यवलोकनेन[२] ज्ञायते यद् भागुरिमते "नप्ता" इति रूपमपि प्रयुज्यते स्म । पाणिनीयमते तु "नप्त्री" इति प्रयोगो भवति ।

**कालः**

भागुरिणाऽऽचार्येण सामवेदस्य संहिताशाखायाः ब्राह्मणग्रन्थस्य च प्रवचनं कृतमासीत् । कृष्णद्वैपायनेन, तच्छिष्यैः प्रशिष्यैश्च शाखानां प्रवचनं महाभारतयुद्धात् पूर्वमेव संवृत्तमासीत् । संक्षिप्तसारस्य **"अयाज्ञवल्क्यादेर्ब्राह्मणे"** इति सूत्रस्य (तद्धित, ४५४) टीकायां शाट्यायन-ऐतरेयेण सह भागुरब्राह्मणमपि स्मृतमस्ति । तदनुसारं पाणिनिमते भागुरिप्रोक्तं ब्राह्मणमैतरेयवत् पुराणप्रोक्तं सिद्ध्यति । पाणिनिना स्मृतानि पुराणप्रोक्तानि ब्राह्मणानि कृष्णद्वैपायनेन, तच्छिष्यैः प्रशिष्यैश्च प्रोक्तेभ्यो ब्राह्मणेभ्यः पूर्वकालिकानि सन्ति । अतो भागुरेराचार्यस्य कालो वैक्रमाब्दात् चतुःसहस्रवर्षेभ्यः पूर्वं स्वीकर्तव्यः ।

**कृतयः**

प्रपञ्चहृदय-चरणव्यूहटीकाद्यनेकग्रन्थावलोकनेन ज्ञायते यद् भागुरिणा सामवेदस्य कस्याश्चित् संहिताशाखायाः प्रवचनं कृतमासीत्[३] । संक्षिप्तसारस्य औत्था-

---

१. मल्लवादि कृत द्वादशारनयचक्र की सिंहसूरिगणिकृत टीका, बड़ौदा संस्करण, भाग १, पृ० ४१ ।

२. नप्तेति भागुरिः । ( पुरुषोत्तमदेव-भाषावृत्तिः, ४।१।१० )

३. द्रष्टव्य, श्री पं० भगवद्दत्त–वैदिक-वाङ्मय का इतिहास, भाग १, पृ० ३०८–३१०, द्वितीयसंस्करणम् ।

सनिकगोयीचन्द्रप्रणीतटीकाऽवलोकनेन ज्ञायते यदाचार्येण भागुरिणा कस्यचित् सामसंहिताब्राह्मणस्याऽपि प्रवचनं कृतमासीत्[१]। सोमेश्वरकवेः "साहित्यकल्पद्रुम" इत्यभिधेयग्रन्थस्य यथासंख्यालङ्कारप्रकरणे,[२] अभिनवगुप्तस्य "ध्वन्यालोक" इत्यभिधेयग्रन्थस्य "लोचना" टीकायाञ्च[३] भागुरिमतावलोकनेन ज्ञायते यद् भागुरिणा "अलङ्कारशास्त्र"मपि प्रोक्तम्। भागुरिणाचार्येण कोष[४]

१. द्रष्टव्य, अयाज्ञवल्क्यादेर्ब्राह्मणे (तद्धित-सूत्र, ४।५४, संक्षिप्तसार) सूत्र की टीका (औत्थासनिक गोयीचन्द्रकृत) का उदाहरण—शाट्यायनिनः, भागुरिणः, ऐतरेयिणः।

२. भागुरिस्तु प्रथमं निर्दिष्टानां प्रश्नपूर्वकाणामर्थान्तरविषये निर्देशोऽप्यनुनिर्दिष्टश्चेत् सोऽपि यथासंख्यालङ्कार इति। मद्रास राजकीय हस्तलेख पुस्तकालय का सूचीपत्र, भाग १, खण्ड १ A, पृ० २८९५, ग्रन्थांक, २१२६)

३. तथा च भागुरिरपि—किं रसानामपि स्थायिसंचारिताऽस्तीत्याक्षिप्य अभ्युपगमेनैवोत्तरमवोचद् वाढमस्तीति। (अभिनवगुप्त—ध्वन्यालोक, लोचन टीका, तृतीय उद्योत, पृ० ३८५)

४. द्रष्टव्य—अमरटीकासर्वस्व, भाग १, पृष्ठ १११, १२५, १९३ इत्यादि। अमरक्षीरटीका, पृष्ठ ५, ९, १२ इत्यादि। हैम अभिधानचिन्तामणि स्वोपज्ञ टीका। तथा भागुरिरपि ह्रस्वान्तं मन्यते। यथाह च—भार्या भेकस्य वर्षाभ्वी शृङ्गी स्यान्मद्गुरस्य च। शिली गण्डूपदस्याऽपि कच्छपस्य डुलिः स्मृता॥ (सायण—माधवीया धातुवृत्ति, भू-धातु, पृ० ३०) यह श्लोक अमरटीकासर्वस्व भाग १, पृष्ठ १९१ में भी उद्धृत है। शिवतातिः, शंतातिः, अरिष्टतातिः, अमी शब्दाश्छान्दसा अपि कदाचिद् भाषायां प्रयुज्यन्ते इति त्रिकाण्डे भागुरिनिबन्धनाद्वाऽव्युत्पन्नसंज्ञाशब्दत्वाद्वा सर्वथा भाषायां साधु। (पुरुषोत्तमदेव-भाषावृत्ति, ४।४।१४३)

भाषावृत्तिटीका—त्रिकाण्डे कोशविशेषे भागुरेरेवाऽऽचार्यस्य यदेषां निबन्धनं तस्माच्च। (सृष्टिधर-भाषावृत्तिटीका, ४।४।१४३) एभिर्नवभिः सूत्रैर्निष्पन्नाश्छान्दसा अपि शब्दा भाषायां साधवो भवन्ति······त्रिकाण्डे भागुरिनिबन्धनात्। (पं० गुरुपदहालदारकृत व्याकरणदर्शन का इतिहास, पृष्ठ ४९९ में उद्धृत।)

सांख्यदर्शन-भाष्य[1]—दैवतग्रन्थ[2]-मनुस्मृतिभाष्य[3]-राजनीतिशास्त्र[4]प्रभृतयो ग्रन्था अपि प्रणीताः, इति विविधप्राचीनग्रन्थेभ्योऽवगम्यते ।

## (८) आचार्यः पौष्करसादिः

आचार्यपौष्करसादेर्नाम पाणिनीयाऽष्टाध्याय्यां नोपलभ्यते; किन्तु महाभाष्ये[5] मैत्रायणीयप्रातिशाख्ये[6] तैत्तिरीयप्रातिशाख्ये[7] च प्राप्यते । अतः पौष्करसादेराचार्यस्य व्याकरणप्रवक्तृत्वं विस्पष्टम् ।

पुष्करसतोऽपत्यं पुमान् पौस्करसादिरित्यत्र श्रूयमाणतद्धितप्रत्ययानुसारमस्य पितुर्नाम "पुष्करसत्" आसीत् । जयादित्यादीनां वैयाकरणानामपीदमेव मतम्[8] । यज्ञेश्वरभट्टेन स्वगणरत्नावल्यां पौष्करसादिशब्दस्य निर्वचनं कृतमस्ति-पुष्करे तीर्थविशेषे सीदतीति पुष्करसात्, तस्यापत्यं पौष्करसादिः[9] । आपस्तम्बधर्मसूत्रेऽपि

---

१. द्रष्टव्य—स्वामी दयानन्द सरस्वती—सत्यार्थप्रकाश, प्रथम संस्करण, पृ० ७८, सन् १८७५ तथा संस्कारविधि, वेदारम्भसंस्कार, द्वितीय संस्करण और दोनों ग्रन्थों का रामलालकपूर ट्रस्ट संस्करण, पृष्ठ क्रमशः १०४,१४४ ।

२. बृहद्देवता, ३।१०॥ ५।४०॥ ६।९६, १०७ ।

३. द्रष्टव्य—शाश्वतवाणी, समाजशास्त्र विशेषांक, पृष्ठ ९१, सन् १९६२ ।

४. द्रष्टव्य—पं० युधिष्ठिर मीमांसक, संस्कृत-व्याकरणशास्त्र का इतिहास, भाग १, पृ० १०१, सं० २०३० ।

५. चयो द्वितीयाः शरि पौष्करसादेः । ( पतञ्जलि-व्याकरणमहाभाष्यम्, ८।४। आ० १।सू० ४८ )

६. मैत्रायणीयप्रातिशाख्यम्, ५।३९,४०॥ २।१।१६॥ २।५।६॥

७. तैत्तिरीयप्रातिशाख्यम्, ५।३७,३८॥ १३।१६॥१४।२॥१७।६॥

८. पुष्करसच्छब्दाद् बाह्वादित्वादिञ्, अनुशतिकादीनां च ( अष्टा० ७।३।२० ) इत्युभयपदवृद्धिः । ( जयादित्य-काशिका, २।४।६३ ) बालमनोरमा, भाग २, पृ० २८७ ।

९. यज्ञेश्वरभट्ट—गणरत्नावली, ४।१।९६ ।

द्विधा "पुष्करसादे"राचार्यस्य वर्णनमुपलभ्यते[१]। आपस्तम्बधर्मसूत्रव्याख्याया हरदत्तः पुष्करसादिं पौष्करसादेराचार्यस्यैव निर्देशं मत्वा, आदिवृद्धयभावं छान्दसं स्वीकरोति[२]। अस्य कालः महाभारतयुद्धकालं परितः—अर्थाद्, वैक्रमाब्दात् ३१०० वर्षेभ्यः पूर्वमस्ति। तैत्तिरीयप्रातिशाख्यस्य माहिषेयभाष्यानुसारेण, पौष्करसादिनाऽऽचार्येण कृष्णयजुर्वेदस्यैकस्याः पौष्करशाखायाः प्रवचनं कृतमासीदिति ज्ञायते[३]।

## (९) आचार्यः चारायणः

आचार्येण चारायणेन कस्यचिद् व्याकरणशास्त्रस्य प्रवचनं विहितमासीदिति स्पष्टतया निर्देशकं वचनं क्वचिदपि नोपलब्धम्। "लौगाक्षिगृह्यसूत्र"ग्रन्थस्य टीकायां चारायणस्य ( अस्याऽपरं नाम चारायणिरस्ति ) सूत्रं तस्य व्याख्या च देवपालेन समुद्धृतम्[४]। महाभाष्ये[५] च पाणिनिरौढिनामधेयाभ्यां वैयाकरणाभ्यां सह चारायणस्य स्मरणात् चारायणस्याऽऽचार्यस्याऽपि व्याकरणशास्त्रप्रवक्तृत्वं स्पष्टमेव।

---

१. शुद्धा भिक्षा भोक्तव्यैककुणिकौ काण्वकुत्सौ तथा पुष्करसादिः। ( आपस्तम्बधर्मसूत्रम्, १।१९।७ )
यथा कथा च परपरिग्रहणमभिमन्यते स्तेनो ह भवतीति कौत्सहारीतौ तथा पुष्करसादी। (तदेव, १।२८।१ )

२. पौष्करसादिरेव पुष्करसादिः, वृद्धयभावश्छान्दसः। ( हरदत्त-आपस्तम्ब-धर्मसूत्र-टीका, १।१९।७ )

३. शैत्यायनादीनां कोहलीपुत्र-भारद्वाज-स्थविर-कौण्डिन्य-पौष्करसादीनां शाखिनाम्.... । ( तैत्तिरीयप्रातिशाख्यस्य माहिषेयभाष्यम्, ५।४० )

४. तथा च चारायणिसूत्रम्—"पुरुकृते च्छछ्रयोः" इति। पुरुशब्दः कृतशब्दश्च लुप्यते, यथासंख्यं छेछ्रेपरतः। पुच्छदनं पुरुच्छम्, कृतस्य छ्रदनं विनाशनं कृच्छमिति। ( देवपाल-लौगाक्षिगृह्यसूत्र ५।१ टीका )

५. कम्बलचारायणीयाः, ओदनपाणिनीयाः, घृतरौढीयाः। ( पतञ्जलि—महाभाष्य, १।१।आ० ९।सू० ७३ )

चारायणपदमपत्यप्रत्ययान्तमस्ति। तदनुसारमस्य पिता "चर" नामा आसीदित्यनुमीयते। पाणिनिना नडादिगणेऽस्य निर्देशं कृत्वा ततः फक्प्रत्ययेन चारायणपदं निष्पादितम्। चारायणस्य कालो वैक्रमाब्दात् ३१०० वर्षेभ्यः पूर्वमस्ति। चारायणनामा प्राचीनो वैयाकरणः कृष्णयजुर्वेदस्य चारायणीयशाखायाः, चारायणीयशिक्षायाश्च प्रवक्ता आसीत्। नाटकलक्षणरत्नकोशस्य प्रणेत्रा सागरनन्दिना चारायणस्य कस्माच्चित् साहित्यविषयग्रन्थादेकमुद्धरणमुद्धृतम्[1]। एतेन प्रतीयते यद् वैयाकरणचारायणेन कस्यचित् साहित्यविषयकग्रन्थस्यापि प्रणयनं विहितमासीत्।

## (१०) आचार्यः काशकृत्स्नः

पाणिनीये शब्दानुशासने वैयाकरणरूपेण काशकृत्स्नस्य नाम नाऽस्ति; किन्तु वैयाकरणनिकाये प्राचीनवैयाकरणरूपेणाऽऽचार्यस्य काशकृत्स्नस्योल्लेखो वर्तते। महाभाष्यस्य प्रथमाऽऽह्निकस्यान्ते काशकृत्स्नशब्दानुशासनस्योल्लेखो विहितः[2]। बोपदेवेन कविकल्पद्रुमग्रन्थारम्भे प्रसिद्धेष्वष्टसु शाब्दिकेषु काशकृत्स्नस्योल्लेखो विहितः[3]। क्षीरस्वामिना काशकृत्स्नीयमतस्य निर्देशो विहितः[4]। काशकृत्स्नव्याकरणस्याऽनेकानि सूत्राणि प्राचीनवैयाकरणवाङ्मये उपलभ्यन्ते[5]।

---

१. आह चारायणः—"प्रकरणनाटकयोर्विष्कम्भः" इति। (नाटकलक्षणरत्नकोशः, पृ० १६)

२. पाणिनिना प्रोक्तं पाणिनीयम्, आपिशलम्, काशकृत्स्नम् इति।
(पतञ्जलि—महाभाष्यम्, १।१। आ० १)

३. इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादिशाब्दिकाः॥ (बोपदेव-कविकल्पद्रुम)

४. काशकृत्स्ना अस्य निष्ठायामनिट्त्वमाहुः—आश्वस्तः विश्वस्तः। (क्षीरस्वामी—क्षीरतरंगिणी, पृ० १८५)

५. कैयट—महाभाष्यप्रदीपः २।१।५०॥ ५।१।२१॥ भर्तृहरि—वाक्यपदीय स्वोपज्ञटीका, काण्ड १, पृ० ४० तथा उस पर वृषभदेव की टीका, पृ० ४१।

सम्प्रति तु काशकृत्स्नस्य धातुपाठोऽपि कन्नडटीकया सह प्रकाशितः। कन्नडटीकायां काशकृत्स्नव्याकरणस्य प्रायः पञ्चत्रिंशदुत्तरैकशतमितानि सूत्राण्युपलब्धानि।

काशिकायां (५।१।५८) एकमुदाहरणमस्ति–त्रिकं काशकृत्स्नम् इति। जैनशाकटायनस्य अमोघावृत्तौ (३।२।१६१) उदाहरणमिदं त्रिकं काशकृत्स्नीयम् इत्येवंरूपेणोपलभ्यते। अत्रोदाहरणद्वयस्य तुलनया स्पष्टं प्रतीयते यदत्रैकस्यैव ग्रन्थस्य सङ्केतोऽस्ति; परन्तु काशकृत्स्न-काशकृत्स्नीय-प्रभृतिपदद्वये श्रूयमाण-तद्धितप्रत्ययेन ज्ञायते यदेकं व्याकरणं काशकृत्स्निप्रोक्तमपरञ्च काशकृत्स्नप्रोक्त-मिति। न्यासकारो जिनेन्द्रबुद्धिः काशिकायाः **"तेन प्रोक्तम्"**[१] इति सूत्रस्थ-"काशकृत्स्नम्" इत्युदाहरणव्याख्यायां लिखति—**आपिशलं काशकृत्स्नमिति-आपिशलिकाशकृत्स्निशब्दाभ्याम् "इञश्च"** (४।२।११२) इत्यण्। अर्थात्, आपिशलकाशकृत्स्नेति पदद्वये अपत्यार्थकाभ्यामिञ्प्रत्ययान्ताभ्यामापिशलि-काशकृत्स्निशब्दाभ्यां प्रोक्तमित्येतस्मिन्नर्थे **"इञश्च"**[२] इति सूत्रेण अण्प्रत्ययो भवति। तथा च "काशकृत्स्नीय"पदे अपत्यार्थकादण्प्रत्ययान्तात् काशकृत्स्न-शब्दात् प्रोक्तेऽर्थे **'वृद्धाच्छः'**[३] इति सूत्रेण छप्रत्यये तस्य "ईय" आदेशो भवति। काशकृत्स्नि-काशकृत्स्नेत्याख्ये नामनी अपत्यप्रत्ययभेदे सत्यप्येकस्यैवाऽऽचार्यस्य नामनीति निर्विवादमेव। काशकृत्स्न आचार्यो भृगुवंशीयो भार्गव आसीदिति बौधायनश्रौतसूत्रादवगम्यते[४]। काशकृत्स्न आचार्यस्य पितुर्नाम कशकृत्स्न आसीत्। वर्धमानेन गणरत्नमहोदधौ कशकृत्स्नशब्दस्य व्युत्पत्तिरेवं प्रदर्शिता—

"कशाभिः कृन्तन्ति 'कृते क्स्ने ङ्याट्त्वे च ह्रस्वश्च बहुलम्' इत्यनेन ह्रस्वत्वे कशकृत्स्नः॥"

---

१. पाणिनि–अष्टाध्यायी, ४।३।१०१।

२. तदेव, ४।२।११२।

३. तदेव, ४।२।११४।

४. भृगूणामेवादितो व्याख्यास्यामः…पैङ्गलायनाः, वैहीनरयः, काशकृत्स्नाः, पाणिनिर्वाल्मीकिः…आपिशलिः। (बौधायनश्रौतसूत्रम्, प्रवराध्यायः–३)

"तत्त्वरत्नाकर" इत्यभिधेये ग्रन्थे भट्टपाराशरेण काशकृत्स्नो भगवतो बादरायणस्य शिष्यः प्रोक्तः[१]। बादरायणः श्रीकृष्णद्वैपायनस्यैव नामेति भारतीयानामैतिहासिकानां मतमस्ति[२]। काशकृत्स्नस्य कालो वैक्रमाब्दादेकशतोत्तरत्रिसहस्रमितवर्षेभ्यः पूर्वमस्ति ।

**कृतयः**

काशकृत्स्नव्याकरणे त्रय अध्याया आसन्; तस्य नाम च "कलाप" इत्यासीत्। काशकृत्स्नेन चतुरध्यायिमीमांसाशास्त्रस्य, धातुपाठस्य, उणादिपाठस्य च रचना विहिता। भट्टभास्करेण रुद्राध्यायभाष्येऽस्य यजुःसम्बन्धिनो मतस्य चर्चा कृताऽस्ति। बोधायनगृह्यसूत्रे काशकृत्स्नमतेनानुमीयते यत् तेन कस्यचिद् यज्ञसम्बन्धिनो ग्रन्थस्याऽपि रचना कृताऽऽसीत्[४]। वेदान्तसूत्रे काशकृत्स्नमताऽवलोकनेन ज्ञायते यत् काशकृत्स्नाऽऽचार्येण वेदान्तसूत्रस्य अध्यात्मशास्त्रस्य वा प्रणयनं विहितमासीत्[५]।

## (११) आचार्यः शन्तनुः

आचार्येण शन्तनुना कस्यचित् सर्वाङ्गपूर्णस्य व्याकरणशास्त्रस्य प्रवचनं विहितमासीत्। सम्प्रत्युपलभ्यमानं शान्तनवं फिट्सूत्रमप्यस्यैव शास्त्रस्यैको भागः।

१. ग्यारहवीं अखिल भारतीय ओरियण्टल कान्फ्रेंस हैदराबाद १८४१ के लेखों का संक्षेप, पृ० ८५-८६।
२. श्री पं० भगवद्दत—वैदिक वाङ्मय का इतिहास, ब्राह्मण और आरण्यक, भाग, पृ० ८९।
३. अष्टौ अनुवाका अष्टौ यजूंषि इति काशकृत्स्नः। (भट्टभास्कर–रुद्राध्यायभाष्यम् पृ० २६)
४. आधारं प्रकृतिं प्राह दर्विहोमस्य बादरिः। आग्निहोत्रिकं तथात्रेयः काशकृत्स्नस्त्वपूर्वताम् ॥ (बौधायनगृह्यसूत्रम्)
५. अवस्थितेरिति काशकृत्स्नः। (वेदान्तसूत्रम्, १।४।२२)

पाणिनीयसम्प्रदाये फिट्सूत्राणां प्रवक्ता आचार्यः शन्तनुः स्वीक्रियते, अत एवैतानि शान्तनवसूत्राण्युच्यन्ते । हरदत्तेनोक्तम्—

"स पुनः[1] शन्तनुप्रणीतः फिष् इत्यादिकम्......।"

नागेशभट्टेनाऽपि बृहच्छब्देन्दुशेखरे लघुशब्देन्दुशेखरे च फिट्सूत्रव्याख्यानान्ते हरदत्तमतमेवाऽनुसृतम् । तथा हि—

"शन्तनुराचार्यः प्रणेतेति द्वारादीनां चेति सूत्रे हरदत्तः ।"

**कालः**

फिट्सूत्रकारः शन्तनुः भाष्यकारात् पतञ्जलेराचार्यात् पूर्ववर्ती आसीदिति महाभाष्यादवगम्यते । तथा हि—

"प्रत्ययस्वरस्यावकाशो[2] यत्रानुदात्ता प्रकृतिः—समत्वं सिमत्वम् ॥"

अत्र भाष्यकारेण समसिमेर्व्याख्ययोः प्रातिपदिकयोः सर्वानुदात्तत्वविधानं प्रदर्शितम् । सर्वानुदात्तत्वविधानमिदम् "**त्वसमसिमेत्यनुच्चानि**" इति फिट्-सूत्रेणैव सम्भाव्यते । पाणिनीयशास्त्रे एतयोः सर्वानुदात्तत्वविधानं नाऽस्ति ।

फिट्सूत्रकारः शन्तनुः कात्यायनात् पूर्ववर्ती आसीदिति कात्यायनस्य वार्तिकैर-वगम्यते । तथा हि[3]—

"प्रकृतिप्रत्यययोः स्वरस्य सावकाशत्वादसिद्धिः ।"

वार्तिकस्याऽस्य व्याख्यायां वार्तिककारसंकेतितं प्रत्ययस्वरसावकाशत्वं दर्शयितुं भाष्यकारेण लिखितम्—

"प्रत्ययस्वरस्याऽवकाशो[4] यत्राऽनुदात्ता प्रकृतिः—समत्वम्, सिमत्वम् ।"

---

१. हरदत्त—पदमञ्जरी भाग २, पृ० ८०४ ।

२. पतञ्जलि—व्याकरणमहाभाष्यम्, ६।१।१५८ ।

३. तदेव, ६।१।१५८ तथा पं० युधिष्ठिर मीमांसक—संस्कृत-व्याकरणशास्त्र का इतिहास, भाग २, पृ० ३१६, सं० २०३० ।

४. पतञ्जलि—व्याकरणमहाभाष्यम्, ६।१।१५८ ।

अत्र सम-सिमशब्दौ सर्वानुदात्तौ मत्वैव वार्तिककारेण प्रत्ययस्वरः सावकाश उक्तः। सम-सिमशब्दयोरिदं सर्वाऽनुदात्तत्वं "त्वसमसिमेत्यनुच्चानि" इति फिट्-सूत्रेणैव सम्भाव्यते। अतः स्पष्टं यदुक्तवार्तिकस्य प्रवचनकाले वार्तिककारस्य हृदये "त्वसमसिमेत्यनुच्चानि" इति सूत्रमवश्यमेव विद्यमानमासीत्। अत एवेदं सर्वथा स्पष्टमेव यदेतानि फिट्सूत्राणि वार्तिककारकात्यायनादपि पूर्ववर्तीनि सन्ति।

नागेशेन महाभाष्यस्य प्रदीपोद्योतटीकायां[1] स्वीकृतं यत् फिट्सूत्राणि पाणिनेरर्वाचीनानि; किन्तु नेदं समीचीनम्। विषयेऽस्मिन् चन्द्रगोमिनाऽऽचार्येणोक्तम्---"एष[2] प्रत्याहारः पूर्वव्याकरणेष्वपि स्थित एव। अयं तु विशेषः—ऐओञ् यदासीत् तद् ऐओच् इति कृतम्। तथा हि--लघावन्ते द्वयोश्च बह्वषो गुरुः (फिट्० २।९), तृणधान्यानां च द्व्यषाम् (फिट्०२।४) इति पठ्यते।"

अर्थात् प्रत्याहारः पूर्वव्याकरणेषु विद्यमान आसीत्। केवलमयमेव विशेषो यत् पूर्वं "ऐओञ्" इति सूत्रमासीत्, तद् "ऐऔच्" इति विहितम्। अत एव "लघावन्ते", "तृणधान्यानां" इत्यादिसूत्रद्वये अचः स्थाने अषो निर्देश उपलभ्यते। अतः फिट्सूत्रकारः शन्तनुः पाणिनेः पूर्ववर्ती आसीत्।

आपिशलव्याकरणेऽपि पाणिनिवद् "ऐऔच्" सूत्रस्य "अच्" प्रत्याहारस्य च निर्देश आसीत्। अतोऽष्प्रत्याहारनिर्देशकेन फिट्सूत्रेण आपिशलेः पूर्वमेव भाव्यम्।

प्रमाणैरेतैः सिद्ध्यति यद् राजर्षिः शन्तनुरेव फिट्सूत्रप्रवक्ता आसीत्, तस्य कालश्च वैक्रमाब्दादेकशतोत्तरत्रिसहस्रवर्षेभ्यः पूर्वं स्वीकर्तुं शक्यते।

## (१२) आचार्यो वैयाघ्रपद्यः

आचार्यस्य वैयाघ्रपद्यस्य नाम पाणिनीयव्याकरणे नोपलभ्यते। काशिकायामुक्तम्—

---

१. यद्वा फिट्सूत्राणि पाणिन्यपेक्षया आधुनिककर्तृकाणीति। (नागेश-भाष्य-प्रदीपोद्योत, ६।१।१५८)

२. चन्द्रगोमि—चान्द्र व्याकरण, प्रत्याहारसूत्रों की व्याख्या के अन्त में।

"गुणं त्विगन्ते[1] नपुंसके व्याघ्रपदां वरिष्ठः।"

अनेनोद्धरणेन वैयाघ्रपद्यस्य व्याकरणप्रवक्तृत्वं विस्पष्टमेव। वैयाघ्रपद्यशब्दस्य गोत्रप्रत्ययान्तत्वादस्य पितुर्नाम व्याघ्रपादासीदिति स्पष्टं प्रतीयते। महाभारते समुपलब्धवर्णनानुसारेण व्याघ्रपादयं महर्षेर्वशिष्ठस्य पुत्रोऽस्ति[2]।

**कालः**

पाणिनिना व्याघ्रपात्पदं गर्गादिगणे[3] पठितम्। तेन यञ् प्रत्ययो भूत्वा वैयाघ्रपद्यपदं निष्पद्यते। वैयाघ्रपद्य इति नाम शतपथब्राह्मणे[4], जैमिनिब्राह्मणे, जैमिनीयोपनिद्ब्राह्मणे[5], शांखायनारण्यके[6] चोपलभ्यते। यद्ययमेव वैयाघ्रपद्यो व्याकरणप्रवक्ता भवेत्तर्हि सोऽवश्यमेव पाणिनेः प्राचीनो भविष्यति। यद्ययं वैयाघ्रपद्यः साक्षाद्रूपेण वशिष्ठस्य पौत्रो भवेत्, तर्हि खल्वयं वशिष्ठपौत्रस्य पराशरस्य समकालिको भविष्यति। तदनुसारमस्य वैयाघ्रपद्यस्य कालो वैक्रमाब्दात् चतुःसहस्रमितवर्षेभ्यः पूर्वं स्वीकर्तुं शक्यते।

**कृतिः**

**व्याकरणम्**–वैयाघ्रपद्येनाऽऽचार्येण व्याकरणशास्त्रस्य प्रवचनं विहितमासीत्।

---

१. काशिका, ७।१।९४।
व्याघ्रपादपत्यानां मध्ये वरिष्ठो वैयाघ्रपद्य आचार्यः।
(हरदत्त—पदमञ्जरी, भाग २, पृ० ७३९)

२. व्याघ्रयोन्यां ततो जाता वशिष्ठस्य महात्मनः।
एकोनविंशतिः पुत्राः ख्याता व्याघ्रपदादयः॥ (महाभारतम्, अनुशासनपर्व, ५३।३०)

३. गर्गादिभ्यो यञ्। (पाणिनि—अष्टाध्यायी, ४।१।१०५)

४. शतपथब्राह्मणम्, १०।६।१।७,८।

५. जैमिनीयोपनिषद्ब्राह्मणम्, ३।७।३।२॥ ४।९।१।१।

६. शांखायनारण्यकम्, ९।७।

वैयाघ्रपद्यप्रोक्ते व्याकरणे दश अध्याया आसन्निति काशिकोक्तोदाहरणेन ज्ञायते[१]। पं० गुरुपदहालदार महोदयेन व्याकरणस्य नाम वैयाघ्रपदमुक्तम्, अस्य प्रवक्तुर्नाम च व्याघ्रपादिति स्वीकृतम्[२]; परन्तु नेदं समीचीनमिति, पूर्वोद्धृतैरुदाहरणैर्विस्पष्टम्। यदि तत्र व्याघ्रपाद्प्रोक्तं व्याकरणमभिप्रेतमभविष्यत्, तर्हि "दशकं व्याघ्रपदीयम्" इति प्रयोगोऽभविष्यत्। महाभाष्ये (६।२।२६) समुपलब्धे "आपिशलपाणिनीयव्याडीयगौतमीयाः" इत्युदाहरणे "व्याडीय"पदस्य "व्याघ्रपदीय" इति पाठान्तरमस्तिः। यदि पाठोऽयं प्राचीनो भवेत्, तर्हि आचार्येण व्याघ्रपाद्महोदयेनाऽपि कस्यचिद् व्याकरणशास्त्रस्य प्रवचनं विहितमासीत्।

## (१३) आचार्यो माध्यन्दिनिः

माध्यन्दिनेराचार्यस्योल्लेखः पाणिनीयतन्त्रे नाऽस्ति; किन्तु काशिकायामस्योल्लेखो दृश्यते। तथा हि—

"सम्बोधने[३] तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्।
माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः॥"

अर्थात्—माध्यन्दिनिराचार्यः उशनस्शब्दस्य सम्बोधने हे उशनः, हे उशनन्, ! हे उशन ! इति त्रीणि रूपाणि वाञ्छति तथा श्रेष्ठो वैयाकरणो वैयाघ्रपद्यः क्लीबे इगन्तशब्देषु गुणमिच्छति यथा वारिशब्दस्य क्लीबे सम्बोधने हे वारे ! इति।

कातन्त्रवृत्तिपञ्जिकायाः रचयित्रा श्रीत्रिलोचनदासेन कारिकेयं व्याघ्रभूतेराचार्यस्य नाम्ना समुद्धृताऽस्ति[४]। सुपद्यमकरन्दकारेणेदं व्याघ्रभूतेर्वचनं स्वीकृ-

---

१. दशकाः वैयाघ्रपदीयाः ॥ (काशिका, ४।२।६५) दशकं वैयाघ्रपदीयम्। (तदेव, ५।१।५८)

२. पं० गुरुपदहालदार—व्याकरण दर्शन का इतिहास, पृ० ४४४।

३. काशिका, ७।१।९४।

४. कातन्त्रचतुष्टयम्, १००।

तम्[1], न्यासकारजिनेन्द्रबुद्धि-पदमञ्जरीकारहरदत्ताभ्याञ्चैतदागमवचनं लिखितम्[2]।

विमलसरस्वतीकृतरूपमालाया नपुंसकलिङ्गप्रकरणे प्रक्रियाकौमुदीभूमिकायाञ्च निम्नाङ्कितं पद्यमङ्कितमस्ति—

"इकः षष्ठेऽपि सम्बुद्धौ गुणो माध्यन्दिनेर्मते ॥"

माध्यन्दिनिपदमपत्यप्रत्ययान्तमस्ति । तदनुसारमस्य पितुर्नाम मध्यन्दिन आसीत्[3] । पाणिनिनाहि माध्यन्दिनेः पितुर्नाम मध्यन्दिन इति **"उत्सादिभ्यो[4]-ऽञ्"** इति सूत्रस्योत्सादिगणे निर्दिष्टमस्ति । अत्र बाह्वादिगणम् (४।१।९६) आकृतिगणं मत्वा ऋष्यणं बाधयित्वा "इञ्"प्रत्ययो भवति । अतो मध्यन्दिनस्य पुत्रो माध्यन्दिनिः पाणिनेः प्राचीनोऽस्तीति निर्विवादम् । माध्यन्दिनेराचार्यस्य कालो वैक्रमाब्दात् त्रिसहस्रमितवर्षेभ्यः पूर्वं स्वीक्रियते ।

## (१४) आचार्यो रौढिः

आचार्यस्य रौढेर्निर्देशः पाणिनीयसूत्रेषु गणपाठेषु च नाऽस्ति; किन्तु काशिकाकारेण पाणिनेः प्राग्भूतेष्वाचार्येषु आपिशलि-काशकृत्स्न-पाणिनिपरम्परायां रौढेरुल्लेखः कृतोऽस्ति[5] । अतः काशिकायां श्रुतेषु आपिशलि-काशकृत्स्न-पाणिनि-प्रभृतिषु वैयाकरणेषु स्मृतत्वाद् रौढिराचार्योऽपि वैयाकरणः सम्भवति । रौढिरपत्यप्रत्ययान्तोऽस्ति, तदनुसारेणाऽस्य पितुर्नाम "रूढ" इति भवितुमर्हति । पतञ्-

---

१. सुपद्मसुबन्द, २४ ॥

२. अनन्तरोक्तमर्थमागमवचनेन द्रढयति । ( जिनेन्द्रबुद्धि—न्या.स, ७।१।९४ । तदाप्तागमेन द्रढयति । तथा चोक्तम्......। (हरदत्त—पदमञ्जरी, भाग २, पृ० ७३९)

३. मध्यन्दिनस्याऽपत्यं माध्यन्दिनिराचार्यः । ( तदेव, भाग २, पृ० ७३९ )

४. पाणिनि-अष्टाध्यायी, ४।१।८६ ॥

५. आपिशलपाणिनीयाः, पाणिनीयरौढीयाः, रौढीयकाशकृत्स्नाः । ( वामन-काशिका, ६।२।३६ )

लिना स्वकीये महा[1]भाष्ये "घृतरौढीयाः" इत्युदाहरणं प्रदत्तम्। जयादित्येन काशिकायाम्, अस्य भाव एवं स्पष्टीकृतः—

"घृतप्रधानो रौढिः घृतरौढिः तस्य छात्राः घृतरौढीयाः[2] ।।"

अनेन ज्ञायते यदाऽऽचार्योऽयमत्यन्तं सम्पन्न आसीत्। अनेन स्वकीयान्तेवासिनां कृते घृतस्य व्यवस्था विशेषरूपेण विहिताऽऽसीत्। अस्यैव भावस्य पोषकमुदाहरणं काशिकायामप्युपलभ्यते। तथा हि—**घृतरौढीयाः**[3]। अस्याऽभिप्रायोऽस्ति यद् ये छात्राः रौढिप्रोक्ते शास्त्रेऽश्रद्दधानाः केवलं घृतभक्षणायै। तस्य शास्त्रमधीयते; तेषां पूर्वं "पदान्तोदात्तघृतरौढीय"पदेन निन्दा विधीयते।

रौढिपदं पातञ्जलमहाभाष्ये उपलभ्यते। यथा हि—

"सिद्धन्तु[4] रौढ्यादिषूपसंख्यानात्। सिद्धमेतत्, कथम्! रौढ्यादिषूपसंख्यानात्। रौढ्यादिषूपसंख्यानं कर्तव्यम्। के पुनो रौढ्यादयः? ये क्रौड्यादयः।।"

एतद् वचनं व्याचक्षाणेन कैयटेनोक्तम्—क्रौड्यादिस्थाने वार्तिकपठितं रौढ्यादिपदं पूर्वाचार्याणां मतानुसारि वर्तते। अस्याऽयमाभिप्रायोऽस्ति यत् पूर्वाचार्याः पाणिनेराचार्यस्य "**क्रौड्यादिभ्यश्च**[5]" इति सूत्रस्य स्थाने "रौढ्यादिभ्यश्च" इति पठन्ति स्म। अनेन स्पष्टं यद् रौढिराचार्यः पाणिनेः पौर्वकालिकोऽस्ति। रौढेराचार्यस्य कालो वैक्रमाब्दात् त्रिसहस्रवर्षेभ्यः पूर्वं स्वीक्रियते।

## (१५) आचार्यः शौनकिः

रौढिवदेव शौनकेः सम्बन्धेऽप्यधिकं ज्ञानं नाऽस्ति। पाणिनेरष्टाध्याय्यामस्य

---

१. पतञ्जलि—व्याकरणमहाभाष्यम्, १।१। आ० ९। सू० ७३।

२. जयादित्य—काशिकावृत्ति, १।१।७३।

३. वामन—काशिकावृत्ति, ६।२।६९।

४. पतञ्जलि—व्याकरणभाष्यम्, ४।१।६९।

५. पाणिनि—अष्टाध्यायी, ४।१।८०।

चर्चा नाऽस्ति; किन्तु चरकसंहितायाष्टीकाकर्त्रा जज्झटेन चिकित्सास्थानस्य व्याख्यायामाचार्यंशौनकेरेकं मतमुद्धृतमस्ति[1]। अर्थात् कृञ् धातोः कर्तर्यर्थे ल्युट् प्रत्यये सति शौनकिराचार्यो दीर्घत्वस्य शासनं करोति। भट्टिकाव्यस्य जयमङ्गला-टीकायामुद्धृतवचनस्योत्तरार्द्धे लभ्यते यद् धाञ्-कृञ्-तनु-नहधातुपरेषु सत्सु अवाप्योरुपसर्गयोरकारस्य लोपो भवति। विकल्पेनेति शौनकेर्मतमस्ति[2]। शौनके-र्व्याकरणसम्बन्धिमतं वाजसनेयप्रातिशाख्यादावुपलभ्यते। शौनकिपदस्याऽपत्य-प्रत्ययान्तत्वात् शौनकिपिता शौनको भवितुमर्हति। शौनकेः पाठान्तरं शौनकोऽपि प्राप्यते, तन्मते शौनकिशौनकयोरैक्यमस्ति। चरकस्य सूत्रस्थाने (२५।१६) शौनकस्य पाठान्तरं शौनकिरुपलभ्यते। अद्भुतसागरे शौनकस्य मते उल्कानां पञ्चविधत्वमुपदिष्टमस्ति[3]। शौनकेराचार्यस्य कालो वैक्रमाब्दात् त्रिसहस्रवर्षेभ्यः पूर्वमस्ति।

## (१६) आचार्यो गौतमः

गौतमस्य नाम पाणिनेरष्टाध्याय्यां नोपलभ्यते; किन्तु महाभाष्ये पतञ्जलिना आपिशालि-पाणिनि-व्याडिभिः सहैव गौतमस्याऽपि नाम निर्दिष्टमस्ति[4]। अतस्त्रि-भिर्वैयाकरणैः सहाऽस्य नामनिर्देशादयमपि वैयाकरण एव कल्प्यते। अस्य पुष्टिस्तु तैत्तिरीयप्रातिशाख्य[5]-मैत्रायणीयप्रातिशाख्याभ्यां[6] भवति। गौतमगृह्यसूत्रस्य गौतमशिक्षायास्तथा गौतमधर्मशास्त्रस्याऽपि गौतमोऽयं प्रणेता स्वीक्रियते, अतोऽयं निःसंशयं पाणिनेः पूर्ववर्तीति निश्चीयते।

॥ इति संस्कृतव्याकरणशास्त्रैतिह्यविमर्शेऽष्टाध्याय्यनुल्लिखितपाणिनि-पूर्ववर्तिवैयाकरणवर्णनम् ॥

---

१. कारणशब्दस्तु व्युत्पादितः—करोतेरपि कर्तृत्वे दीर्घत्वं शास्ति शौनकिः। (चरकसंहिता, सूत्रस्थानम्, २।२७ जज्झटटीका)

२. धाञ्कृञोस्तनिनह्योश्च बहुलत्वेन शौनकिः। (भट्टिकाव्यस्य जयमङ्गला-टीका, ३।४७)

३. उल्का ''' एवं पंचविधा ह्येताः शौनकेन प्रदर्शिताः। (अद्भुतसागरः, पृ० ३२५)

४. आपिशलपाणिनीयव्याडीयगौतमीयाः। (पतञ्जलि—व्याकरणमहाभाष्यम्, ६।२।३६)

५. प्रथमपूर्वो हकारश्चतुर्थं तस्य संस्थानं प्लाक्षिकौण्डिन्यगौतमपौष्करसादीनाम्। (तैत्तिरीयप्रातिशाख्यम्, ५।३८)

६. मैत्रायणीयप्रातिशाख्यम् ५।४०।

अथ चतुर्थोऽध्यायः

# अष्टाध्याय्युल्लिखितपाणिनिपूर्ववर्ति-वैयाकरणवर्णनम्

## (१) आचार्य आपिशलिः

आपिशलेराचार्यस्योल्लेखः पाणिनिना स्वकीयाष्टाध्याय्यां विहितः[१]। महाभाष्ये आपिशलेराचार्यस्य मतं प्रमाणरूपेणोद्धृतमस्ति। काशिका[२]-न्यास-[३]-महाभाष्य-प्रदीप[४]-तन्त्रप्रदीप[५]प्रभृतिषु ग्रन्थेषु प्राचीनग्रन्थकारैर्वैयाकरणैरापिशलिव्याकरणस्याऽनेकानि सूत्राण्युद्धृतानि। पाणिनिशिक्षायामप्यापिशलेरुल्लेखो विद्यते[६]।

एवमष्टाध्यायी-महाभाष्य-भाष्यप्रदीप-काशिका-न्यासादिग्रन्थेषु आपिशलेराचार्यस्य बहुचर्चितं व्यक्तित्वं दर्शं तस्य महती महत्ता प्रतीयते। आपिशलिशब्दोऽयं तद्धितप्रत्ययान्तः। काशिकायां[७] वामनेन साधितं यदापिशलेराचार्यस्य पिता आपिशल-नामा एवाऽऽसीत्, आपिशलिशब्दस्य तस्यापत्यमित्यर्थे तद्धित-( इञ् ) प्रत्ययान्तत्वात्। गणरत्नमहोदधिकारेण वर्धमानेनोक्तम्—

---

१. वा सुप्यापिशलेः। ( पाणिनि—अष्टाध्यायी, ६।१।९२ )

२. एवं च कृत्वाऽऽपिशलेराचार्यस्य विधिरुपपन्नो भवति—धेनुरनञिकमुत्पादयति।
( पतञ्जलि—व्याकरणमहाभाष्यम्, ४।२।४५ )

३. काशिकावृत्ति, ७।३।८६।

४. जिनेन्द्रबुद्धि—न्यास ४।२।४५।

५. कैयट—महाभाष्यप्रदीप, ५।१।२१।

६. मैत्रेयरक्षित—तन्त्रप्रदीप, ७।३।८६।

७. पाणिनीयशिक्षा, वृद्धपाठ प्र० ८, सू० २५।

"आपिशलि–पिंशतीत्यौणादिककलप्रत्यये पिशलः, न पिशलोऽपिशलः कुलप्रधानम्, तस्याऽपत्यम्[1]" ॥

**कालः**

पाणिनीयाष्टाध्यायामापिशलेराचार्यस्य साक्षादुल्लेखादयं पाणिनेः प्राचीन इति निश्चीयते। पदमञ्जरीकारस्य हरदत्तस्य लेखेन आपिशलिः पाणिनेः किञ्चित् पूर्व-वर्तीति प्रतीयते।[2] पाणिनिवैंक्रमसंवत्सरादेकोनत्रिंशच्छतवर्षप्राचीन-बौधायनश्रौत-सूत्रस्य प्रवराध्याये भृगुवंश्यस्याऽऽपिशलगोत्रस्योल्लेख उपलभ्यते। पं० गुरुपदहाल-दारमहोदयेनोक्तं यत्, आपिशलिर्याज्ञवल्क्यस्य श्वशुर आसीत्। याज्ञवल्क्येन शत-पथब्राह्मणस्य प्रवचनं वैक्रमाब्दादेकत्रिंशच्छत–( ३१०० ) वर्षपूर्वं विहितः। अत एवाऽऽपिशलेराचार्यस्य कालो वैक्रमाब्दात् त्रिसहस्रवर्षपूर्वमिति स्वीकर्तुं शक्यते।

**कृतयः**

पाल्यकीर्तेः शाकटायनव्याकरणस्य अमोघावृत्तौ ( ३।२।१६१ ) **"अष्टका आपिशलपाणिनीयाः"** इत्युदाहरणेन प्रतीयते यदापिशलव्याकरणस्य पाणिनीय-व्याकरणवदष्टावध्याया आसन्। महाभाष्यात् ( ४।१।१४ ) प्रतीयते यत् कात्या-यनपतञ्जलिसमये आपिशलव्याकरणस्य महान् प्रचार आसीत्। तस्मिन् काले

---

१. अपिशलयस्याऽपत्यमापिशलिराचार्यः, अत इञ्। (वामन–काशिका, ६।२।३६ )

२. वर्धमान—गणरत्नमहोदधि, पृ० ३७।

कथं पुनरिदमाचार्येण पाणिनिनाऽवगतमेते साधव इति ? आपिशलेन पूर्वं-व्याकरणेन। आपिशलिना तर्हि केनाऽवगतम् ? ततः पूर्वेण व्याकरणेन।

पाणिनिरपि स्वकाले शब्दान् प्रत्यक्षयन्नापिशलादिना पूर्वस्मिन्नपि काले सत्ता-मनुसन्धत्ते, एवमापिशलिः। ( हरदत्त—पदमञ्जरी, प्रथम भाग, पृ० ८ )

कन्या अपि आपिशलं व्याकरणमधीयते स्म ।[१] कातन्त्रवृत्तेर्दुर्गरचितटीकायामापिशलेर्निम्नाङ्कितः श्लोक उद्धृतोऽस्ति—

"**तथा चापिशलीयः श्लोकः—**

आगमोऽनुपघातेन विकारश्चोपमर्दनात् ।
आदेशस्तु प्रसङ्गेन लोपः सर्वापकर्षणात् ॥[२]

तथा चाऽनन्तदेव[३]-कविराज[४]-सृष्टिधराचार्य[५]-जगदीशतर्कालङ्कार[६]-उज्ज्वलदत्त[७] प्रभृतिभिर्विद्वद्भिरापिशलेराचार्यस्य मतान्युद्धृतानि ।

---

१. आपिशलमधीते ब्राह्मणी आपिशाला । ( पतंजलि--महाभाष्यम्, ४।१। आ० १ सू० १४ )

२. कातन्त्रवृत्ति, पृ० ४७९ ॥

३. यथाऽऽपिशलिनोक्तम्—ऋवर्णऌवर्णयोर्दीर्घा ( न ) भवन्तीति । ( यजुः प्रातिशाख्यम्, काशी, पृ० ४६६, शतपथसायणभाष्यम्, भाग १, पृ० ३१८ )

४. एकवर्णकार्यं विकारः, अनेकवर्णकार्यमादेश इत्यापिशलीयं मतम् । ( कविराज—कातन्त्रटीका, २।३।३३ )

५. तथा चापिशलिः—

दन्त्योष्ठत्वाद् वकारस्य वहव्यधवृधां न भष् ।
उदूठौ भवतो यत्र यो वः प्रत्ययसन्धिजः ॥
अन्तस्थं तं विजानीयाच्छेषो वर्गीय उच्यते ।

( भाषावृत्ति की टीका, पृ० १७ )

६. आपिशलिस्तु—न्यङ्क्वोर्नैचभावं शास्ति न्याङ्कनं चर्म । ( उणादिवृत्ति, पृ० ११ तथा वाक्यपदीयस्य वृषभदेवटीका, भाग १, पृ० ५५ )

७. स्वधापितृतृप्तिरित्यापिशलिः । ( उणादिवृत्ति, पृ० १९१ )

पाणिनीयव्याकरणतः प्राचीनव्याकरणेषु केवलमापिशलव्याकरणमेवैवमासीद् यस्य सर्वाधिकानि सूत्राण्युपलभ्यन्ते । व्याकरणमिदं पाणिनिव्याकरणवदेव सर्वाङ्गपूर्णं सुव्यवस्थितं चासीत् । आपिशलिनाऽऽचार्येण धातुपाठ[1]-गण पाठ[2]-उणादिसूत्र शिक्षा[3]कोशाऽक्षरतन्त्र-सामप्रातिशाख्य प्रभृतयो ग्रन्थाः प्रणीताः ।

## (२) आचार्यः काश्यपः

पाणिनेरष्टाध्याय्यां काश्यपाचार्यस्य मतं वारद्वयं समागतमस्ति ।[4] वाजसनेयप्रातिशाख्ये शाकटायनेन सह काश्यपस्योल्लेख उपलभ्यते ।[5] अतोऽष्टाध्याय्याम्प्राति-

---

१. अस्ति सकारमातिष्ठते । आगमौ गुणवृद्धी आतिष्ठते । ( पतञ्जलि—महाभाष्यम् १।३ आ० २ । सू० २२ ।। तथा द्र०— -काशिका, १।३।२२ ।)
सकारमात्रमस्ति धातुमापिशलिराचार्यः प्रतिजानीते । तथा हि न तस्य पाणिनेरिव "असभुवि" इति गणपाठः किं तर्हि ? "स भुवि" इति स पठति । आगमौ गुणवृद्धी आतिष्ठत इति । स त्वागमौ गुणवृद्धो आतिष्ठते । एवं हि स प्रतिजानीते इत्यर्थः । (जिनेन्द्रबुद्धि-काशिकावृत्तिन्यास, ३।३।२२, पृ० ४२६)

२. इह त्यदादीन्यापिशलेः किमादीन्यस्मत्पर्यन्तानि, ततः पूर्वाधरेति । (भर्तृहरि-महाभाष्यदीपिका, पृ० २८७ )
त्यदादीनि पठित्वा गणैः कैश्चित् पूर्वादीनि पठितानि । ( कैयट—महा० प्रदीप १।१ आ० ४ । सू० २४ )

३. स एवमापिशलेः पञ्चदशभेदाख्या वर्णधर्मा भवन्ति । पाणिनीयशिक्षा, वृद्धपाठ, सू० ८।२५ )
"शेषाः स्थानकरणाः" इत्यापिशलिशिक्षावचनात् । ( तैतिरीयप्रातिशाख्यम्, २।४६ । पृ० ९० )
शिक्षा आपिशलीयादिका । ( काव्यमीमांसा, पृ० ३ )
तथेत्यापिशलीयशिक्षादर्शनम् । ( वाक्यपदीयस्य वृषभदेवटीका, भाग १, पृ० १०५ )

४. तृषिमृषिकृषेः काश्यपस्य । ( पाणिनि—अष्टाध्यायी, १।२।२५ )
नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् । ( तदेव, ८।४।६७ )

५. लोपं काश्यपशाकटायनौ । वाजसनेयप्रातिशाख्यम्, ४।५ )

शाख्ये चोल्लिखितौ काश्यपावेकव्यक्तिरेव । काश्यपशब्दो गोत्रप्रत्ययान्तः, तदनुसारेणाऽस्यमूलपुरुषस्य नाम कश्यप आसीत् । अयं मरीचिपुत्रः कश्यपः ।

**कालः**

पाणिनीयाऽष्टाध्याय्यां काश्यपाचार्यस्य नामस्मरणेनाऽस्य पाणिनेः पूर्ववर्तित्वम्प्रतीयते । पाणिनीयाऽष्टाध्याय्याः "काश्यपकौशिकाभ्यां[1] णिनिः" इति सूत्रे कात्यायनमतानुसारेण कल्पप्रवक्तृरूपेण काश्यपस्य नामोल्लेखं कुर्वता पाणिनिना किमपि विशेषणं न प्रयुक्तम्, अतो वैयाकरणकल्पकारयोरभेदो ज्ञायते । अतएव काश्यपाचार्यस्य कालो वैक्रमाब्दात् त्रिसहस्रवर्षपूर्वमिति निश्चीयते ।

**कृतयः**

काश्यपव्याकरणस्य किमपि सूत्रमद्यावधि नोपलभ्यते । काश्यपस्य मतोल्लेखोऽपि पाणिनीयाष्टाध्याय्यां द्वयोरेव स्थानयोरुपलभ्यते । शुक्लयजुः प्रातिशाख्ये[2] "निपातः काश्यपः स्मृतः" इत्युक्तम् ।

काश्यपाचार्येण कल्प[3]-छन्दः शास्त्र[4]-आयुर्वेदसंहिता[5]-शिल्पशास्त्र[6]-अलङ्कारशास्त्र[7]-पुराण[8]-काश्यपीयसूत्र[9] प्रभृतयो ग्रन्थाः प्रणीताः ।

---

१. पाणिनि–अष्टाध्यायी, ४।३।१०३ ।

२. शुक्लयजुः प्रातिशाख्यम्, अ० ८ । सू० ५१ ।

३. काश्यपकौशिकाभ्यामृषिभ्यां णिनिः । ( पाणिनि–अष्टाध्यायी, ४।३।१०३ )
काश्यपकौशिकग्रहणं कल्पे नियमार्थम् । ( पतञ्जलि–महाभाष्यम्, ४।२।२६ )

४. सिंहोन्नता काश्यपस्य । ( पिङ्गल-छन्दः शास्त्रम्, ७।९ )

५. द्र०—पं० युधिष्ठिर मीमांसक–संस्कृत व्याकरण शास्त्र का इतिहास, भाग १, पृ० १४७ सं० २०३० ।

६. काश्यपप्रोक्तं शिल्पशास्त्रम् आनन्दाश्रमपूनातः प्रकाशितम् ।

७. पूर्वेषां काश्यपवररुचिप्रभृतीनामाचार्याणां लक्षणशास्त्राणि संहृत्य पर्यालोच्च । ( काव्यादर्श, हृदयङ्गमा टीका )

८. कल्पं चेति किम् ? काश्यपीया पुराणसंहिता । ( चान्द्रवृत्ति, ३।३।७१)
आत्रेयः सुमतिर्धीमान् काश्यपोऽह्यकृतव्रणः । ( वायुपुराणम्, ६१।५६ )

९. तथा काश्यपीयम्—असामान्यप्रत्यक्षाद् विशेषस्मृतेश्च संशय इति । ( उद्योतकर—न्यायवार्तिकम्, १।२।२३, पृ० ९९ )

## (३) आचार्यो गार्ग्यः

पाणिनिना अष्टाध्याय्यां त्रिषु स्थानेषु गार्ग्याचार्यस्योल्लेखो विहितः ।[१] गार्ग्याचार्यस्याऽनेकानि मतानि ऋक्प्रातिशाख्ये[२] वाजसनेयप्रातिशाख्ये[३] च समुपलभ्यन्ते । अत एव सूक्ष्मतया पर्यालोचनेन गार्ग्याचार्यस्य व्याकरणम् सर्वाङ्गपूर्णं प्रतीयते । गोत्रप्रत्ययान्तोऽयं गार्ग्यशब्दः । गर्गस्य गोत्रापत्यमिति विग्रहादस्य पितुर्नाम "गर्ग" आसीदिति ज्ञायते । गर्गो भारद्वाजपुत्र आसीत् । यास्काचार्येण निरुक्ते कस्यचन नैरुक्तगार्ग्यस्योल्लेखो विहितः ।[४] चरकसंहितायाः सूत्रस्थाने(१।१०) गार्ग्यस्योल्लेखो दृश्यते । बृहद्देवताग्रन्थे यास्करथीतराभ्यां सह गार्ग्यस्यनाम उपलभ्यते ।[५]

प्रातिशाख्येषूद्धृतानि मतानि वैयाकरणगार्ग्याचार्यस्येति तन्मतावलोकनेन ज्ञायते । यद्यपि नैरुक्तवैयाकरणगार्ग्ययोरैक्ये निश्चायकं किमपि प्रमाणं नोपलभ्यते, तथाप्युभयोरैक्यं स्वीकर्तुं शक्यते । शतपथब्राह्मणे ( १४।५।१।१ ) एको दृप्तबालाकिगार्ग्य उद्धृतोऽस्ति । हरिवंशपुराणानुसारं शैशिरायणगार्ग्यस्त्रिगर्तानां पुरोहित आसीत् । प्रश्नोपनिषदि (४।१) सौर्यायिणेर्गार्ग्यस्योल्लेख उपलभ्यते । तेषां विभिन्नत्वं तद्विशेषणैरेवाऽवगम्यते ।

**कालः**

अष्टाध्याय्यां गार्ग्यस्य नामोल्लेखात् तस्य पाणिनेः प्राचीनतरत्वं सम्भाव्यते ।

---

१. अङ्गार्ग्यगालवयोः । ( पाणिनि-अष्टाध्यायी, ७।३।९९ )
ओतो गार्ग्यस्य । ( तदेव, ८।३।२० )
नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् । ( तदेव, ८।४।६७ )

२. व्याडिशाकल्यगार्ग्याः । ( ऋक्प्रातिशाख्यम्, १३।६१ )

३. ख्यातेः खयौ कशौ गार्ग्यः सक्ख्योक्ख्यमुक्ख्यवर्जम् । ( वाजसनेयप्रातिशाख्यम् )

४. न सर्वाणीति गार्ग्यो वैयाकरणानां चैके । ( यास्क-निरुक्तम्, १।१२ )

५. चतुर्भ्य इति तत्राहुर्यास्कगार्ग्यरथीतराः ।
आशिषोऽथार्थवैरूप्याद् वाचः कर्मण एव च ॥ ( बृहद्देवता, १।२६ )

गार्ग्याचार्यस्य मतम् निरुक्ते समुद्धृतम्। यदि नैरुक्तवैयाकरणगार्ग्ययोरैक्यं स्वीक्रियेत तर्हि यास्कादपि प्राचीनोऽयं गार्ग्य इति सम्भाव्यते। यास्काचार्यस्य कालो महाभारतयुद्धसमीपकालः। अतो गार्ग्याचार्यो वैक्रमाब्दाच्छताधिकत्रिसहस्रवर्षप्राक्तनो भवितुमर्हति। परन्तु सुश्रुतटीकाकारस्य डल्हणस्य मतानुसारेण[१] गार्ग्योऽयं धन्वन्तरेः शिष्यः। यदि वैद्यगार्ग्यवैयाकरणगार्ग्ययोर्वैषम्यं नाऽस्ति तर्हि गार्ग्यस्य कालो वैक्रमाब्दात् पञ्चशताधिकपञ्चसहस्रपर्षमिति स्वीकर्त्तुं शक्यते।

**कृतयः**

गार्ग्यव्याकरणस्य किमपि सूत्रम् प्राचीनग्रन्थेषु नोपलभ्यते। अष्टाध्यायिप्रातिशाख्ययोरुद्धृतगार्ग्यमतावलोकनेन गार्ग्याचार्यस्य व्याकरणं सर्वाङ्गपूर्णमासीदिति ज्ञायते। सामवेदपदकार एव व्याकरणप्रवक्ता आसीदिति स्वीकारे गार्ग्यव्याकरणस्य किञ्चिद् भिन्नत्वमपि स्वीकर्त्तुं शक्यते।

व्याकरणातिरिक्तम्, गार्ग्याचार्येण निरुक्त[२]–सामवेदपदपाठ[३]–शालाक्यतन्त्र[४]

---

१. प्रभृतिग्रहणान्निमिकाङ्कायनगार्ग्य गालवाः। (सुश्रुतसंहिता डल्हणटीका, १।३)

२. तत्र नामानि सर्वाण्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च, न सर्वाणीति गार्ग्यो वैयाकरणानां चैके। (यास्क—निरुक्तम् १।१२॥ तथा द्रष्टव्यम्, निरुक्तम्, १।३॥१३।३१॥)

चतुर्भ्यं इति तत्राहुर्यास्कगार्ग्यरथीतराः। (बृहद्देवता, १।२६)

३. बह्वृचानां मेहना इत्येकं पदम् छन्दोगानां त्रीण्येतानि पदानि भ इह नास्ति। तदुभयम्पश्यता भाष्यकारेणोभयोःशाकल्यगार्ग्ययोरभिप्रायावत्रानुविहितौ॥ (दुर्गवृत्ति, ४।४)

मेहना एकमिति शाकल्यः त्रीणीति गार्ग्यः॥ (स्कन्दटीका, ४।३)

पुनरुक्तानि लुप्यन्ते पदानीत्याह शाकलः। अलोप इति गार्ग्यस्य काण्वस्याऽर्थवशादिति॥ (वाजसनेयप्रातिशाख्य, उव्वटभाष्य, ४।१७७)

४. प्रभृतिग्रहणान्निमिकाङ्कायनगार्ग्यगालवाः॥ (सुश्रुतसंहिता, डल्हणटीका, १।३)

गार्ग्यः शाण्डिल्यकौण्डिन्यौ वार्क्षिर्दैवल गालवौ॥ (चरकसंहिता, सूत्रस्थानम् १।१०)

भूवर्णन[१]-तक्षशास्त्र[२]-लोकायतशास्त्र[३]-देवर्षिचरित[४]-सामतन्त्र[५]प्रमृतयो ग्रन्थाः प्रणीताः ।

## (४) आचार्यो गालवः

पाणिनिना अष्टाध्याय्यां चतुर्षु स्थानेषु गालवाचार्यस्य मतं निर्दिष्टम् )[६] पुरुषोत्तमदेवेन भाषावृत्तौ गालवव्याकरणस्यैकं मतमुद्धृतमस्ति ।[७] यदि गालवशब्दो ऽन्यबैयाकरणनामवत् तद्धितप्रत्ययान्तो भवेत्तर्हि गालवस्य पितुर्नाम गलवः गलुर्वा सम्भवति । महाभारतस्य शान्तिपर्वाणि[८] पाञ्चालबाभ्रव्यगालवः क्रमपाठस्य शिक्षा

---

१. वार्ष्यायणिस्तु सामुद्रं शरावं चैव गालवः ।
ऊर्ध्ववेणोकृतो गार्ग्यः क्रोष्टुकिः परिमण्डलम् ॥ ( वायुपुराणम्, ३४।६३ )

२. वेदार्थावगमनस्य बहुविद्यान्तराश्रयत्वात् गार्ग्याऽगस्त्यादिभिरङ्गुलिसंख्योक्तं रथपरिमाणश्लोकमुदाहरन्ति—अथापि ॥
( आपस्तम्ब—शुल्वसूत्रम्. करविन्दाधिपटीका, पृ०९६, मैसूरसंस्करणम् ।

३. लोकायतं न्यायशास्त्रं ब्रह्मगार्ग्यप्रणीतम् । ( गणपति शास्त्री-कौटिल्यार्थशास्त्र-टीका, भाग १, पृ० २७ )

४. देवर्षिचरितं गार्ग्यः । ( महाभारतम्, शान्तिपर्व, २१०।२१, चित्रशाला प्रेस पूना । )

५. सामतन्त्रं तु गार्ग्येणेत्येवं वयमुपदिष्टाः प्रामाणिकैरिति सत्यव्रतः ॥
( अक्षरतन्त्रभूमिका, पृ० २ )

६. इको ह्रस्वोऽङ्यो गालवस्य ( पाणिनी—अष्टाध्यायी, ६।३।६१ )
तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य ॥ ( तदेव, ७।१।७४ )
अङ्गार्ग्यगालवयोः ॥ ( तदेव, ७।३।९९ )
नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ॥ ( तदेव, ८।४।६७ )

७. इकां यण्भिर्व्यवधानम् व्याडिगालवयोरिति वक्तव्यम् । दधियत्र, दध्यत्र ।
मधुवत्र, मध्वत्र ॥ ( पुरुषोत्तमदेव-भाषावृत्ति, ६।१।७३ )

८. पाञ्चालेन क्रमः प्राप्तस्तस्माद् भूतात् सनातनात् ।
बाभ्रव्यगोत्रः स बभूव प्रथमं क्रमपारगः ॥
नारायणाद् वरं लब्ध्वा प्राप्य योगमुत्तमम् । क्रमं प्रणीय शिक्षां च प्रणयित्वा सगालवः ॥ ( महाभारतम्, शान्तिपर्व, ३४२।१०३, १०४ )

याश्च प्रवक्ता: प्रोक्तः। शिक्षायाः सम्बन्धो व्याकरणेन साकं वर्तते। प्रसिद्धैर्वैयाकरणैरापिशलि-पाणिनि-चन्द्रगोमिभिरपि शिक्षा ग्रन्थाः प्रणीताः। तदनुसारं यदि शिक्षायाः प्रणेता पाञ्चालबाभ्रव्यो गालव एव व्याकरणप्रवक्ता स्यात्तर्हि गालवस्य बाभ्रव्यगोत्र, तस्य देशश्च पाञ्चालः सम्भवति। सुश्रुतटीकाकर्त्रा डल्हणेन गालवो धन्वन्तरिशिष्यः प्रोक्तोऽस्ति [1]।

निरुक्ते,[2] बृहद्देवतायां,[3] ऐतरेयारण्यके,[4] वायुपुराणे,[5] चरकसंहितारम्भे[6] च गालवस्य मतोल्लेखो वर्तते।

**कालः**

अष्टाध्यायां गालवस्योल्लेखात् पाणिनेः प्राचीनो गालवाचार्य इत्यनुमीयते। महाभारते समुल्लिखितः पाञ्चालदेशीयो बाभ्रव्यगालव एव शब्दानुशासनप्रवक्ता

---

१. प्रभृतिग्रहणान्निमिकाङ्कायनगार्ग्यमालवाः। (सुश्रुतसंहिता। डल्हणटीका। १।३

२. शितिमांसतो भेदस्त इति गालवः। (यास्क-निरुक्तम् ४।१। ख० ३। पृ० ३४९)

३. बृहद्देवता, १।२४, ५।३९, ६।४३, ७।३८॥

४. नेदमेकस्मिन्नहनि समापयेदिति जातूकर्ण्यः, समापयेदिति गालवः॥ (ऐतरेयारण्यकम्, ५।३।३)

५. शरावं चैव गालवः। (वायुपुराणम्, ३४।६३)

६. गार्ग्यः शाण्डिल्यकौण्डिन्यौर्दैवलगालौ॥ (चरकसंहिता, सूत्रस्थानम्, १।१०)

इतिचेत्तर्हि सः शौनकात् महाभारताच्च प्राचीनः सेत्स्यति । बृहद्देवताग्रन्थे[1] गालवस्य पुराणकवित्वेनोल्लेखो दृश्यते । पूर्वमेवाऽस्माभिर्वर्णितम् यद् धन्वन्तरिशिष्यो गालव एव सम्भवतः शब्दानुशासनप्रवक्तेति । अत एव गालवाचार्यस्य कालो वैक्रम संवत्सरात् पञ्चशताधिकपञ्चसहस्रवर्षपूर्वमेव भवितुमर्हति ।

**कृतयः**

गालवाचार्येण शब्दानुशासनम्प्रणीतमासीदिति पुरुषोत्तमदेवप्रणीताद् भाषावृत्तिग्रन्थादवगम्यते । तदनुसारेण दधियत्र, मधुवत्रप्रभृतयः प्रयोगा अपि साधवो भवन्ति । "भूवादयो[2] धातवः" इति सूत्रे पाणिनिना वकारव्यवधानं प्रदर्शितम् । परन्तु केषाञ्चिन्मते "भूवादय" इत्यत्र "वा गतिगन्धनयोः" इति धातोर्ग्रहणम् । महाभाष्यानुसारेण "भूवादयः" इत्यत्र वकारप्रयोगो मङ्गलार्थः ।[3]

एतदतिरिक्तं गालवाचार्यः शौनकशिष्यः शाखाभेदप्रवर्तकश्चासीत् ।[4] गाल-

---

१. नवभ्य इति नैरुक्ताः पुराणाः कवयश्च ये ।
मधूकः श्वेतकेतुश्च गालवश्चैव मन्यते ॥ ( बृहद्देवता, १।२० )

२. पाणिनि—अष्टाध्यायी, १।३।१ ॥

३. भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते । ( पतञ्जलिव्याकरणमहाभाष्यम्, १।३। आ. १. सून )

४. मुद्गलो गालवो गार्ग्यः शाकल्यः शैशिरीस्तथा । पञ्च शौनकशिष्यास्ते शाखाभेदप्रवर्तकाः ॥ ( भगवदत्त-वैदिक वाङ्मय का इतिहास, द्वितीय संस्करणम्, प्रथमभागः, पृ० १८७ )

वेन ब्राह्मणग्रन्थ[1]-क्रमपाठ[2]-शिक्षा[3]-निरुक्त[4]-दैवतग्रन्थ[5]-शालाक्यतन्त्र[6]-कामसूत्र[7]-भूवर्णन[8]-प्रभृतयो गन्था अपि प्रणोताः।

## (५) आचार्यः चाक्रवर्मणः

आचार्यस्य चाक्रवर्मणस्य नाम पाणिनीयाष्टाध्याय्यां[9] उणादिसूत्रेषु[10] चोप-

---

१. द्रष्टव्य, पं० भगवदत्त-वैदिक वाङ्मय का इतिहास, भाग २, पृ० ३० ॥

२. पाञ्चालेन क्रमः प्राप्तस्तस्माद् भूतात् सनातनात्।
बाभ्रव्यगोत्रः स वभूव प्रथमं क्रमपारगः॥ (महाभारतम्, शान्तिपर्व, ३४२।१०३)
इति प्र बाभ्रव्य उवाच क्रमं क्रमप्रवक्ता प्रथमं शशंस च। (ऋक्प्रातिशाख्यम्, ११।६५)
इसकी व्याख्यामें उव्वटने लिखा है—बाभ्रव्यो बभ्रुपुत्रो भगवान् पाञ्चाल इति ॥

३. नारायणाद् वरं लब्ध्वा प्राप्य योगमुत्तमम्।
क्रमं प्रणीय शिक्षा च प्रणयित्वा स मालवः॥ महाभारतम्, शान्तिपर्व, ३४२।१०४)

४. शितिमांसतो मेदस्त इति गालवः। (यास्क-निरुक्तम्, ४।१। ख० ३) तथा द्रष्टव्यम्, पं० भगवदत्त-वैदिक वाङ्मय का इतिहास, भाग १, खण्ड २, पृ० १७९-१८० ॥

५. द्र०-बृहदेवता, १।२४ ॥ ५।३९ ॥ ६।४३।७।३८ ॥
नवभ्य इति नैरुक्ताः पुराणाः कवयश्च ये। मधुकः श्वेतकेतुश्च गालवश्चैव मन्यते ॥ (बृहद्देवता, १।२४)

६. प्रभृतिग्रहणाग्निमिकाङ्कायनगार्ग्यगालवाः। (सुश्रुत संहिता। डल्हणटोका, १।३)

७. सप्तभिरधिकरणैर्बाभ्रव्यः पाञ्चालः संचिक्षेप। (वात्स्यायन-कामसूत्रम्, १।१।१०)

८. शरावं चैव गालवः। (वायुपुराणम् ३४।६३)

९. ई चाक्रवर्मणस्य ॥ (पाणिनि-अष्टाध्यायी, ६।१।१३०)

१०. कपश्चाक्रवर्मणस्य ॥ (पञ्चपादि उणादिसूत्रम् ३।१४४ ॥ दश० उ० ७।११)

लभ्यते । भट्टोजिदीक्षितेन शब्दकौस्तुभेऽस्यैकं मतमुद्धृतमस्ति ।[1] श्रीपतिदत्तेन कातन्त्रपरिशिष्टे "हेतौ वा" इति सूत्रवृत्तौ चाक्रवर्मणस्योल्लेखो विहितः । एतेनाऽस्य व्याकरणशास्त्रप्रवक्तृत्वं विस्पष्टम् ।

चाक्रवर्मणशब्दोऽयमत्यप्रत्ययान्तः । अतोऽस्य पितुर्नाम चक्रवर्मा[2] आसीदित्यनुभीयते । वायुपुराणानुसारेणाऽयमाचार्यः कश्यपस्य पौत्रः स्मर्यते ।[3]

**कालः**

पाणिनीयाऽष्टाध्याय्यामुल्लेखात् चाक्रवर्म्मणाचार्यः पाणिनेः प्राचीनतमः इति सुनिश्चितमेव । पाणिनेराचार्यस्य कालः वैक्रमाब्दान्नवशताधिकद्विसहस्रवर्षपूर्वम्, अतश्चाक्रवर्म्मणाऽऽचार्यो वैक्रमाब्दात् त्रिसहस्रवर्षं प्राचीन इति स्वीकर्तुं शक्यते ।

**व्याकरणम्**

चाक्रवर्म्मणव्याकरणस्य किमपि सूत्रं नोपलभ्यते । भट्टोजिदीक्षितेन शब्दकौस्तुभे[1] माधप्रयुक्ते "द्वयेषाम्" पदे चाक्रवर्म्मणव्याकरणानुसारं द्वयपदस्य

---

१. यत्तु कश्चिदाह-चाक्रवर्मणव्याकरणे.......। ( भट्टोजिदीक्षित-शब्दकौस्तुभ, १।१।२७)

२. न म पूर्वोऽपत्येऽवर्म्मणः—अवर्म्मण इतिकिम् ? चक्रवर्म्मणो पत्यम् चाक्रवर्म्मणः। (काशिका, ६।४।१७०)

३. द्र०-पं० गुरुपद हालदार-व्याकरणदर्शनेर इतिहास, पृ० ५१९ ।।

१. यत्तु कश्चिदाह—चाक्रवर्म्मणव्याकरणे द्वयपदस्याऽपि सर्वनामपदाभ्युपगमात् तद्रीत्याऽयं प्रयोग इति तदपि न। मुनित्रयमतेनेदानीं साध्वसाधुविभागः। तस्यैवेदानीं तनशिष्टैर्वेदाङ्गतया परिगृहीतत्वात्। दृश्यन्ते हि नियतकालाः स्मृतयः । यथा कलौ पाराशरी स्मृतिरिति ।।
( भट्टोजिदीक्षित—शब्दकौस्तुभम्, १।१।२७ )

सर्वनामसंज्ञाया उल्लेखो विहितः । तथा च तेन "नियतकालाः स्मृतयः" इति नियमानुसारेण तेषामसाधुत्वं प्रतिपादितम् । एवम् चाक्रम्मणाऽऽचार्यस्य व्याकरणानुसारेण द्वयपदस्य सर्वनामसंज्ञा भवति, यस्य "द्वय" पदस्य पाणिनीयमते सर्वनाम संज्ञा न भवति ।

## (६) आचार्यो भारद्वाजः

भारद्वाजशब्दोऽयं गोत्रप्रत्ययान्तः । सम्भवतोऽयमिन्द्रशिष्यस्य दीर्घजीविनो भरद्वाजस्य पुत्र आसीदिति प्रतोयते । भारद्वाजोऽयं द्रोणभारद्वाजः, यो महाभारते द्रोणाचार्य नाम्ना आसीत्, अस्य पिता च दीर्घजीवी, अनूचानतमो वैयाकरणभरद्वाजो बार्हस्पत्य आसीदित्यनुमीयते ।

न्यायमञ्जर्यां भारद्वाजः "चतुर्वेदा[१]ध्यायी" नाम्ना स्मृतो वर्तते । प्रश्नोपनिषदि[२] सुकेशाभारद्वाजस्योल्लेखो दृश्यते, अयं च हिरण्यनाभकौसल्यस्य समकालिकोऽस्ति । बृहदारण्यकोपनिषदि[३] गर्दभीविपीतभारद्वाजस्य निर्देशो दृश्यते, यो याज्ञवल्क्यस्य समकालिकोऽस्ति । काश्यपसंहितायाः सूत्रस्थाने[४] कृष्णभारद्वाजस्योल्लेख उपलभ्यते । द्रोणभारद्वाजो द्रोणाचार्य नाम्ना प्रसिद्ध आसीदिति पूर्वमेवोक्तम् ।

---

१. चतुर्वेदाध्यायी भारद्वाजः ।। (न्यायमञ्जरी, पृ० २१९, लाजरस प्रेस, काशी ।)

२. अथ हैनं सुकेशा भारद्वाजः पप्रच्छ ।। (प्रश्नोपनिषद्, ६।१)

३. यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे गर्दभीविपीतो भारद्वाजः ।। (बृहदारण्यकोपनिषद्, ४।१।५)

४. चत्वारो रोगाः आगन्तुकवातपित्तकफजा इति कृष्णो भारद्वाजः ।। (काश्यपसंहिता, सूत्रस्थानम्, २७।३ । चौखम्बा संस्कृत सीरिज-संस्करणम्, काशी, सन् १९५३)

अष्टाध्याय्यां पाणिनिना एकास्मिन्नेव स्थाने भारद्वाजाचार्यस्य मतमुद्धृतम् ।[१] भारद्वाजाचार्यस्य व्याकरणविषयकम्मतम् तैत्तिरीयप्रातिशाख्ये[२] मैत्रायणीयप्रातिशाख्ये[३] चोपलभ्यते । पाणिनीयाष्टाध्याय्यामुल्लेखात् भारद्वाजाचार्यस्य कालो वैक्रमाब्दात् त्रिसहस्रवर्षपूर्वमिति स्वीकर्तु शक्यते ।

भारद्वाजव्याकरणस्य स्वरूपपरिमाणविषये किमपि वृत्तमद्यावधि नोपलभ्यते, पाणिनीयाऽष्टाध्याय्यादिषु भारद्वाजाचार्यस्य व्याकरणविषयकमतावलोकनेन ज्ञायते यद् भारद्वाजाचार्येण कश्चन व्याकरणशास्त्रग्रन्थः प्रणीत आसीत् ।

व्याकरणमहाभाष्ये महर्षिणा पतञ्जलिनाऽनेकेषु स्थलेषु भारद्वाजीयवार्तिकानामुल्लेखो विहितः ।[४] येषां विषयेऽनुमीयते यदष्टाध्यायीमाश्रित्य भारद्वाजाचार्येणैतेषां वार्तिकानां प्रणयनं विहितमासीत् ।

भारद्वाजाचार्येणाऽऽयुर्वेदस्य कायचिकित्सा विषयमाश्रित्यैकः संहिताग्रन्थः प्रणीत आसीदिति, आयुर्वेदटीकाग्रन्थेषु समुपलब्धभारद्वाजीयमतावलोकनेन ज्ञायते । भारद्वाजस्याऽर्थशास्त्रविषयकान्यनेकानि मतानि कौटिल्यार्थशास्त्रे[५] उद्धृतानि । अतो द्रोणभारद्वाजाचार्येणाऽर्थशास्त्रमपि प्रणीतमासीदिति ज्ञायते ।

---

१. ऋतो भारद्वाजस्य ।। ( पाणिनि—अष्टाध्यायी, ७।२।६३ )

२. अनुस्वारेऽष्विति भारद्वाजः ।। ( तैत्तिरीय प्रातिशाख्यम्, १७।३, पृ० २१८, एशियाटिक सोसाइटी आफ बंगाल संस्करणम्, सन् १८७२ )

३. चतुर्वेदाध्यायी भारद्वाज इति ।। ( मैत्रायणीयप्रातिशाख्यम्, २।५।६ )

४. दाधाघ्वदाप्—भारद्वाजीयाः पठन्ति—घुसंज्ञायां प्रकृतिग्रहणं शिद्विकृतार्थम् ।। ( पतञ्जलि—व्याकरणमहाभाष्यम्, १।१। आ० ५ । सू० २० ) तथा द्रष्टव्यम् तदेव, १।१ आ० ८ । सू० ५६ । १।२ आ० १ । सू० २२। १।३ आ० ४ । सू० ६७ । इत्यादिस्थलेषु ।।

५. सहाऽध्यायिनोऽमात्यान् कुर्वीत् दृष्टशौचसामर्थ्यत्वादिति भारद्वाजः । (चाणक्य—कौटिलियमर्थशास्त्रम्, १।८। पृ० १९, पण्डित पुस्तकालय काशी) तथा द्रष्टव्यम्—तदेव, १।१५।। १।१७। ५।६। ८।३ ।।

## (७) आचार्यः शाकटायनः

पाणिनिना अष्टाध्याय्यां त्रिधा शाकटायनस्योल्लेखो विहितः।[१] वाजसनेय प्रातिशाख्ये[२] ऋक्प्रातिशाख्ये[३] च शाकटायनाचार्यस्योल्लेखो विहितः। निरुक्ते[४] यास्काऽऽचार्येणाऽपि शाकटायनाचार्यस्मरणं विहितम्। पतञ्जलिनाऽपि शाकटायनो वैयाकरणरूपेण स्मृतः[५]। महर्षि पतञ्जलिमतानुसारेण शाकटायनोऽयं शकटस्य पुत्रः। तथा हि—

"व्याकरणे[६] शकटस्य न तोकम्॥"

अत्र तोकशब्दः पुत्रार्थकः, शकटस्य पुत्र इत्यर्थः। शाकटाय नोहि काण्ववंशीयोऽभिमतः। अनेन व्याकरणेऽपूर्वम् शाकटायनव्याकरणं प्रणीतम्। महाभाष्ये शाकटायनस्य पितुर्नाम "शकट" इत्युक्तमस्ति, परन्तु वैयाकरणमतानुसारं शकट-

---

१. लङः शाकटायनस्य। (पाणिनि—अष्टाध्यायी, ३।४।१११)
व्योर्लघुप्रयत्नतरः शाकटायनस्य॥ (तदेव, ८।३।१८)
त्रिप्रभृतिषु शाकटायनस्य॥ (तदेव, ८।४।५०)

२. वाजसनेयप्रातिशाख्यम्, ३।९, १२, ८७॥ इत्यादि॥

३. प्रथमं शाकटायनमः॥ (ऋक्प्रातिशाख्यम् १।१६, मेसर्स ब्राज वी० दास एण्ड कं०, १९०३ संस्करणम्)

४. सन्ध्येष्वकारोर्ध्वमिकार उत्तरं युजोरुकार इति शाकटायनः॥
(तदेव, १३।३९। पृ०३१०)
तत्र नामान्याख्यातजानीति शाकटायनो .... ....॥ (यास्क-निरुक्तम्, १।४। सं० १। पृ० ७४। मनसुखरायमोरसंस्करणम्, सन् १९५२)
न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनो...। (तदेव, १।१। सं० ४, पृ० ३२)

५. वैयाकरणानां च शाकटायन आह—धातुजं नामेति। (पतञ्जलि-व्याकरण-महाभाष्यम्, ३।३ आ० १ सू० १)

६. तदेव, ३।३। आ० १।सू० १॥

स्तस्य पितामहस्य नाम समुचितम् । पाणिनिना शकटशब्दो नडादिगणे पठितः[१] । गोत्राधिकारे विहिताः प्रत्यया अनन्तरापत्येऽपि भवन्ति, पौत्रप्रभृतिषु अपत्येष्वपि प्रयोगो भवति । वर्धमानेन "कट" शब्दस्याऽर्थः" "शकटमिव भारक्षमः" कृतोऽस्ति[२] । अनन्तदेवेन शुक्लयजुः प्रातिशाख्यस्य भाष्ये शाकटायनः काण्वशिष्यत्वेन स्वीकृतः[३] । संस्काररत्नमालायां गोत्रप्रवर-प्रकरणे शाकटायनद्वयस्योल्लेखो दृश्यते-एको वाध्रचवंश्यः[४], द्वितीयश्च काण्ववंश्यः[५] । परन्तु शुक्लयजुः प्रातिशाख्येऽष्टाध्याय्याञ्च स्मृतः शाकटायनः काण्ववंशीय एव । मत्स्यपुराणानुसारमेकं शाकटायन-गोत्रमाङ्गिरसमपि[६] । अनन्तदेवेन शाकटायनः कण्वस्य शिष्यः प्रोक्तः, किन्तु शैशिरशिक्षानुसारमयं शैशिरेः प्रोक्तोऽस्ति—

"शैशिरस्य तु शिष्यस्य शाकटायन एव च[७] ॥"

काशिकायां सर्वे वैयाकरणाः शाकटायनतो हीनाः प्रोक्ताः सन्ति । यथा, अनुशाकटायनं वैयाकरणाः[८] । उपशाकटायनं वैयाकरणाः[९] । महाभाष्यात्

---

१. नडादिभ्यः फक् ॥ ( पाणिनि-अष्टाध्यायी, ४।१।९९ )

२. वर्धमान-गणरत्नमहोदधि, पृ० १४९ ॥

३. असौ पदस्य वकारो न लुप्यते असस्थाने स्वरे परे शाकटायनस्याऽऽचार्यस्य मतेन । काण्वशिष्यः सः, पुराणे दर्शनात् । तेन शिष्याऽऽचार्ययोरेकमतत्वात् काण्वमतेनाऽप्ययमेव । यद्वा शाकटायन इति काण्वाऽऽचार्यस्यैव नामान्तर-मुदाहरणम् । ( अनन्तदेव-शुक्लयजुप्रातिशाख्यभाष्यम्, ४।१२९ )

४. संस्काररत्नमाला, पृ० ४३०॥

५. तदेव, पृ० ४३७ ॥

६. मत्स्यपुराणम्, १९६।४४॥

७. मद्रास राजकीय हस्तलेख संग्रह सूचीपत्र, जिल्द ४, भाग १ सी०सन् १९२८ पृ० ५४९, ९९॥

८. काशिका, १।४।८६॥

९. तदेव, १।४।८८॥

( ३।३।१ ) ज्ञायते यद् वैयाकरणेषु शाकटायन एव सर्वान् शब्दान् धातुजान् मन्यते[1] । अतः शाकटायनः स्वकालिकेषु वैयाकरणेषु श्रेष्ठ आसीत् ।

**कालः**

वैक्रमाब्दात् त्रिसहस्रवर्षपुरातनेन यास्काचार्येण निरुक्ते शाकटायनस्य स्मरणं विहितम् । शाकटायनः काण्वशिष्य इति स्वीकारे तस्य कालो वैक्रमाब्दात् शताधिकत्रिसहस्रवर्षपूर्वं ( ३१०० वि०पू० ) सम्भवति ।

**कृतयः**

सम्प्रति शाकटायनव्याकरणम् नोपलभ्यते, परन्तु विभिन्नेषु ग्रन्थेषूद्धृतव्याकरणविषयकशाकटायनीयमतावलोकनेन ज्ञायते यत् शाकटायनेन व्याकरणशास्त्रं प्रणीतमासीत् । शाकटायनव्याकरणे वैदिकानां लौकिकानां च पदानामन्वाख्यानं कृतमासीत् । निरुक्ते ''एतेः[2] कारितं च यकारादि चान्तकरणमस्तेः शुद्धञ्च सकारादिञ्च'' इत्यस्य व्याख्यानेन प्रतीयते यत् शाकटायनेन कृता सत्यशब्दस्य निरुक्तिरित्थं वर्तते—

''इण् गतौ[3] धातोः कारितं ण्यन्तं रूपं कृत्वा ततो यकारमन्तमादाय यकारान्तं कृत्वा सत्यशब्दस्यान्तमर्द्धं सञ्चस्कार, ततो यम् इति भवति । अस्तेः शुद्धञ्च । अस् भुवि इत्येतस्य शुद्धमेव रूपं कृत्वा तकारान्तमित्यर्थः । ततः सकारादिशब्दरूपं गृहीत्वा ''सत्'' इत्येतत् सत्यम्––इत्येतस्य शब्दस्याऽऽदिमकरोदाद्यर्थं सञ्चस्कार, ततसदिति भवति । अत्र योऽयमस्तेस्तकारः स यकारमधिरोहति । एवमेतदेकमभिधानं द्वयोर्धात्वोः सञ्चस्कार सत्यमिति भवति ॥''

इतः पूर्वं दुर्गाचार्येण स्वटीकायामुक्तम्—

---

१. तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च । ( यास्क-निरुक्तम्, १।४।१खं० )

२. तदेव, १।४। खं० २। पृ० ८२ । मनुसुखरायमोर संस्करणम्, सन् १९५२॥

३. तदेव, १।४। खं०२ की दुर्गाचार्यटीका, पृ० ८५-८६, उपर्युक्तं संस्करणम् ॥

"शाकटायनाचार्योऽनेकैश्च धातुभिरेकमभिधानमनुविहितवान्, एकेन चैकम् इति[१]" ॥

न्यासकारेण श्रीजिनेन्द्रबुद्धिपादेन काशिकावृत्तौ न्यासटीकायां लिखितम्—"तदेवं निरुक्तकारशाकटायनदर्शनेन त्रयी शब्दानां प्रवृत्तिः, जातिशब्दाः, गुणशब्दाः, क्रियाशब्दा[२] इति।"

एवं प्रतीयते यत् शाकटायनो यदृच्छाशब्दं न मत्वा जातिगुणक्रियाभेदेन शब्दानां त्रैविध्यमेव स्वीकरोति। शाकटायनस्त्रयोविंशतिमितानुपसर्गान् स्वीकरोति। यद्यप्यन्ये आचार्याः विंशतिमितानुपसर्गानेव स्वीकुर्वन्ति, परन्तु शाकटायनमते अच्छश्रद्-अन्तर्-इत्येते त्रय उपसर्गा अपि वर्तन्ते। तथा ह्युक्तं शौनकेन—

"अच्छश्रन्दरित्येतानाचार्यः[३] शाकटायनः।
उपसर्गान् क्रियायोगान् मेने ते तु त्रयोऽधिकाः॥"

बृहद्देवताग्रन्थे शाकटायनस्य देवताविषयकमतोल्लेखाज्ज्ञायते यत् शाकटायनेन ऋग्वेदस्य कस्याश्चिदपि शाखायाः कश्चन दैवतग्रन्थः प्रणीत आसीत्।

यास्काचार्यप्रणीते निरुक्ते शाकटायनमतोल्लेखाज्ज्ञायते यत् शाकटायनेन निरुक्तमपि प्रणीतमासीत्।

केशवेन स्वकीये नानार्थार्णवसंक्षेपे शाकटायनस्य कोषविषयकानि मतान्युद्धृतानि, येन ज्ञायते यत् शाकटायनेन कश्चन कोषग्रन्थोऽपि प्रणीत आसीत्।

एवम् ऋक्तन्त्रम्, लघुऋक्तन्त्रम्, सामतन्त्रम्, पञ्चपादि-उणादिसूत्रमित्येते ग्रन्था अपि शाकटायनप्रणीतेति केषाञ्चिद् विदुषाम्मतम्, परन्तु परस्परवैमत्यात् पुष्टप्रमाणाभावाच्चैतन्न स्वीकर्तुं शक्यते।

---

१. यास्काचार्यप्रणीतनिरुक्तस्य दुर्गाचार्यटीका, १।४।२। पृ० ८५, मनसुखरायमोर-संस्करणम् सन् १९५२॥

२. जिनेन्द्रबुद्धि-काशिकावृत्तेर्न्यासटीका। ३।३।१॥

३. शौनक–बृहद्देवता, २।९५॥

४. श्वश्रूः श्वशुरयोरिति पितृस्वसारस्त्वस्यार्थं व्याचष्टे शाकटायनः॥
(केशव–नानार्थार्णवसंक्षेप, भाग, पृ० १९)

## (८) आचार्यः शाकल्यः

शाकल्यशब्दोऽयं तद्धितप्रत्ययान्तः। तदनुसारं शाकल्यस्य पितुर्नाम शकल आसीत्। यद्यपि संस्कृतवाङ्मये शाकल्य-स्थविरशाकल्य-विदग्धशाकल्य—वेदमित्र (देवमित्र) शाकल्य—इत्येतानि नामान्युपलभ्यन्ते। अष्टाध्याचां पाणिनिना चतुर्धा[१] शाकल्याचार्यस्य मतोल्लेखो विहितः। शौनकेन ऋक्[२]प्रातिशाख्ये, कात्यायनेन वाजसनेयप्रातिशाख्ये[३] शाकल्याचार्यस्य मतोल्लेखो विहितः। महाभाष्ये[४] पतञ्जलिना शाकल्याचार्यमतम् "शाकल" नाम्नोल्लिखितम्।

पाणिनीयसूत्रपाठे स्मृतः शाकल्यः, ऋग्वेदस्य पदकारः वेदमित्रशाकल्यश्चैक एव; यतो हि ऋक्पदपाठे व्यवहृता अनेके नियमाः पाणिनिना शाकल्यनाम्ना समुद्धृताः।

पाणिनिना कार्तकौजपादिगणे (६।२।३७) "शाकलशुनकाः" इति पदं पठितम्। काशिकाकारमतानुसारेणाऽत्र शाकल्यशिष्याणां शुनकपुत्रैः सह छन्द्वसमासोऽस्ति। अनेनोदाहरणेन ज्ञायते यत् शाकल्यशिष्याणां शुनकपुत्रैः सह परस्परं घनिष्ठसम्बन्ध आसीत्।

**कालः**

पाणिनिना "शौनकादिभ्य[५]श्छन्दसि" इति सूत्रे ब्रह्मज्ञानविधिर्गृहपतिः शौनक

---

१. सम्बुद्धौ शाकल्यस्येतावनार्षे ।। (पाणिनि-अष्टाध्यायी, १।१।१६)
इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ।। (तदेव, ६।१।१२७)
लोपः शाकल्यस्य ।। (तदेव, ८।३।१९)
सर्वत्र शाकल्यस्य ।। (तदेव, ८।४।५१)

२. ऋक्प्रातिशाख्यम्, ३।१३, २२।४।१३।।

३. वाजसनेयप्रातिशाख्यम्, ३।१०।।

४. सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः ।।
(पतञ्जलि-व्याकरणमहाभाष्यम्, ६, अ०।१।६।५ आ०।सू०१२७)

५. पाणिनि—अष्टाध्यायी, ४।३।१०६।।

उद्धृतः। शौनकेन ऋक्प्रातिशाख्ये[१] शाकल्यस्य, तद्व्याकरणस्य च मतान्युद्धृतानि। शौनकेन महाराजस्याऽधिसीमकृष्णस्य शासनकाले नैमिषीयारण्ये विहिते द्वादशाहसत्रे ऋक्प्रातिशाख्यस्य प्रवचनं विहितम्। अतः शौनकस्य कालः प्रायो वैक्रमाब्दादेकोनत्रिंशच्छतवर्षपूर्वमिति सुनिश्चितः। तदनुसारं शाकल्यस्ततः प्राचीन इति प्रतीयते। महाभारते अनुशासन[२]पर्वणि यः सूत्रकारशाकल्यः स्मृतोऽस्ति, सः वैयाकरणशाकल्य इत्यनुमीयते। शाकल्येन शाकलचरणस्य तत्पदपाठस्य च प्रवचनं विहितमासीत्। अतः शाकल्याचार्यस्य कालो वैक्रमाब्दादेकशताधिकत्रिंशच्छतवर्षं पूर्वमिति स्वीकर्तुं शक्यते।

**कृतयः**

पाणिनीयाष्टाध्याय्यां प्रातिशाख्येषु चोद्धृतमतानुशीलनेन ज्ञायते यत् शाकल्यव्याकरणे लौकिकानां वैदिकानाञ्चोभयविधशब्दानामन्वाख्यानमासीत्।

---

१. इकारयोश्च प्रश्लेषे क्षैप्राभिनिहितेषु च।
उदात्तपूर्वरूपे शाकल्यस्यैवमाचरत्॥
(ऋक्प्रातिशाख्यम्, ३।१३।पृ० १०२, मेसर्स ब्राज० बी दास एण्ड कं० संस्करणम्, सन् १९०३)
नियमं कारणादेके प्रचयस्वरधर्मवत्।
प्रचयस्वर आचारः शाकल्यस्यान्यरेतयोः॥ तदेव, ३।२३।
"न शाकल्यस्य"॥ (तदेव, ४।३।पृ० ११२)

२. शाकल्यः संशितात्मा वै नववर्षशतान्यपि।
आराधयामास भवं मनोयज्ञेन केशव॥
तं चाह भगवान् तुष्टो ग्रन्थकारो भविष्यति।
वत्साक्षया च ते कीर्तिस्त्रैलोक्ये वै भविष्यति॥
अक्षयं च कुलं तेऽस्तु महर्षिभिरलं कृतम्।
भविष्यति द्विजश्रेष्ठः सूत्रकर्ता सुतस्तव॥
(महाभारतम्, अनुशासनपर्व, १४।१००-१०२)

पाणिनिना "इको[१] सवर्णे शाकल्यस्य ह्रस्वश्च-कुमारी अत्र" इत्यादिशाकल्यमतमुद्धृतम् । अत्र संहितायां प्रकृतिभावो ह्रस्वत्वभावश्च विधीयेते । पदपाठे संहिता न भवति । अतः पाणिनिना समुद्धृतम् मतमिदं शाकल्यस्य व्याकरणादेव समुद्धृतम्, न तु शाकल्यप्रणीतऋक्पदपाठात्—इति सिद्ध्यति ।

वायुपुराणानुसारेण[२] शाकल्यः शाकलचरणस्य पञ्चानां शाखानां प्रवक्ता आसीत् । ऋक्प्रातिशाख्ये ( ४।४ ) शौनकेन "विपाट्छुतुद्री[३] पयसा जवेते" इत्यदौ श्रूयमाणस्य छकारादेशस्य विधानम् शाकल्य[४]पितुर्नाम्ना विहितम् । अनेन ज्ञायते यत् शाकल्येन ऋग्वेदस्य प्राचीनायाः संहितायाः प्रवचनं विहितमासीत् ।

शाकल्याचार्येण पदपाठः प्रणीत इति यास्काचार्यप्रणीतान्निरुक्ता[५]ज्ज्ञायते । वायुपुराणे देवमित्रशाकल्यः पदवित्तम उक्तः, अनेन ज्ञायते यत् शाकलचरणप्रवर्तकेन शाकल्येनैव पदपाठः प्रणीतः । ऋग्वेद पदपाठे व्यवहृताः केचन नियमाः पाणिनिना[६] **"सम्बुद्धौ शाकल्यस्येतावनार्षे,"** "उञः", "ऊँ" इत्येषु सूत्रेषूद्धृताः । अतो वैयाकरणशाकल्यः शाकलचरणस्य पदपाठस्य च प्रवक्ता शाकल्य

१. पाणिनि—अष्टाध्यायी, ६।१।१२७ ।

२. देवमित्रस्तु शाकल्यः महात्मा द्विजसत्तमः ।
चकार संहिताः पञ्च बुद्धिमान् पदवित्तमः ॥ ( वायुपुराणम्, ६०।६३ )

३. ऋग्वेदः, ३ मण्डलम् । ३ अ० । ३ सू० । मन्त्रम् १ । वैदिकसंशोधनमंडल संस्करणम्, सन् १९३६ ।

४. सर्वैः प्रथमैरुपधीयमानैः शकारः शाकल्यपितुश्छकारमापद्यते ।
( ऋक्प्रातिशाख्यम्, ४।४ । पृ० ११० । मेसर्स ब्राज बी० दास एण्ड कं० संस्करणम्, १९०३ )

५. वेति च य इति च चकार शाकल्यः उदात्तं त्वेवमाख्यातमभविष्यत् ।
( यास्क—निरुक्तम्, नैगमकाण्डम्, ६।५ खं० ५ । पृ० ६८९, मनसुखरायमोर संस्करणम्, १९५२ )

६. पाणिनि—अष्टाध्यायी, १।१।१६, १७, १८ ।

एक एवेत्यत्र नाऽस्ति मनागपि सन्देहलेशः। व्याकरणमहाभाष्ये[१] शाकल्यकृत-पदसंहिताया उल्लेख उपलभ्यते।

## (९) आचार्यः सेनकः

पाणिनिना सेनकाचार्यस्योल्लेखोऽष्टाध्याय्या[२]मेकस्मिन्नेव सूत्रे विहितः। अन्यत्र तस्योल्लेखो नाऽस्ति। अस्य कालो वैक्रमाब्दात् पञ्चाशदधिकैकोनत्रिंशच्छतवर्षं-पूर्वमिति श्री पं० युधिष्ठिरमीमांसकमहोदयानाम्मतम्। एतदतिरिक्तम्, सेनकाचार्य सम्बन्धे न किञ्चिज्ज्ञायते।

## (१०) आचार्यः स्फोटायनः

स्फोटायनाचार्यस्य नाम पाणिनिनाऽष्टाध्याय्या[३]मेकस्मिन्नेव स्थाने समुद्धृतम्। पदमञ्जरीकारेण हरदत्तेन काशिकायां ६।१।१२३ सूत्रस्य पदमञ्जर्यामुक्तम्—

"स्फोटो[४]ऽयनं परायणं यस्य सः स्फोटायनः, स्फोटप्रतिपादनपरो वैयाकरणा-चार्यः। ये त्वौकारं पठन्ति ते नडादिषु अश्वादिषु वा स्फोटशब्दस्य पाठं मन्यन्ते।"

एतदनुसारमाचार्योऽयं वैयाकरणानां स्फोटतत्त्वस्य ज्ञाता आसीत्, अत एवाऽयं व्याकरणशास्त्रे "स्फोटायन" नाम्ना प्रसिद्धः। अस्य वास्तविकं नाम न ज्ञायते।

"स्फौटायन" इति नामपक्षेऽस्य पूर्वजस्य नाम स्फोट आसीत्। स्फोटस्य स्फौटायनस्य वोल्लेखः कस्मिंश्चिदपि ग्रन्थे नोपलभ्यते।

---

१. शाकल्येन सुकृतां संहितामनुनिशम्य देवः प्रावर्षत्।
( पतञ्जलि—व्याकरणमहाभाष्यम्, १।४। आ० ४। सू० ८३ )

२. गिरेश्च सेनकस्य ॥ ( पाणिनि—अष्टाध्यायी, ५।४।११ )

३. अवङ् स्फोटायनस्य ( तदेव, ६।१।१२३ )

४. हरदत्त—पदमञ्जरी, भाग २, पृष्ठम् ४८४।

हेमचन्द्राचार्येण "अभिधानचिन्तामणि"[1] कोशे उक्तम्—

"स्फोटायने तु कक्षीवान्"

एवम् केशवेनाऽपि नानार्थार्णवसंक्षेपे[2] उक्तम्—

"स्फोटायनस्तु कक्षीवान्"

अनेन कक्षीवतो नाम स्फोटायन आसीदिति प्रतीयते। हेमचन्द्र केशवोद्धरणावलोकनेन ज्ञायते यद् अस्याऽऽचार्यस्य नाम "स्फोटायन" इत्येव समीचीनम्।

भरद्वाजाचार्यप्रणीत "यन्त्रसर्वस्व" ग्रन्थान्तर्गतवैमानिकप्रकरणानुसारं स्फोटायनो विमानशास्त्रविशेषज्ञोऽप्यासीदिति प्रतीयते। भरद्वाजाचार्यस्य "चित्रिण्येवेति स्फोटायनः" इति सूत्रस्य बोधानन्दयतिना कृते व्याख्याने उक्तम्—

**"तदुक्तम् शक्तिसर्वस्वे—वैमानिकगतिवैचित्र्यादिद्वात्रिंशत् क्रियायोगे एकैव चित्रिणी शक्त्यलमिति शास्त्रे निर्णीतं भवतीत्यनुभवतः शास्त्राच्च मन्यते स्फोटायनाचार्यः ॥[3]"**

अनेन ज्ञायते यत् स्फोटायनाचार्यो महान् वैमानिक आचार्य आसीत्।

**कालः**

पाणिनीयाऽष्टाध्याय्यां निर्देशात् स्फोटायनाचार्योऽयं वैक्रमाब्दात् पञ्चाशदुत्तरैकोनत्रिंशच्छतवर्षप्राचीन इति श्रीपण्डित युधिष्ठिर मीमांसकानाम्मतम्[4]।

वस्तुतस्तु स्फोटपदार्थो द्विधा भिद्यते—अर्थविज्ञाने स्फुटत्यर्थो यस्मादिति व्युत्पत्त्याऽर्थप्रत्यायकः शक्तिविशेषः। स्फुटत्यग्रे प्रस्फुटति गतिरस्मादिति स्फोटः,

---

१. हेमचन्द्र—अभिधानचिन्तामणि कोश पृष्ठ ३४० ॥

२. केशव—नानार्थार्णवसंक्षेप, पृष्ठ ८३। श्लोक १३६ ॥

३. बृहद् विमानशास्त्र, स्वामी ब्रह्ममुनि सम्पादित, पृष्ठ ७४ ॥

४. श्री पं० युधिष्ठिर मीमांसक—संस्कृत व्याकरणशास्त्र का इतिहास, भाग १, पृष्ठ १७५, सं० २०३०।

प्रस्फोटः, विस्फोटः ( एक्सप्लोजन ) गतिविज्ञाने शक्तिविशेषः। एवं ज्ञायते यद्-एक स्फोटोऽर्थविज्ञाने, द्वितीयश्च स्फोटो गतिविज्ञाने प्रयुज्यते। स्फोटायनाचार्यो गतिविज्ञाननिष्ठस्फोटस्याऽप्याविष्कर्ता आसीत्। अतो भरद्वाजाचार्येण स्वकीये "यन्त्रसर्वस्व" ग्रन्थे वैमाविकाऽऽचार्यरूपेण तस्य नाम गृहीतम्। अमेरिकादेशे चन्द्रमसि "अपोलो" यानप्रेषणं गतिविज्ञाननिष्ठस्फोटसहकारिणैव जातम्।

एवम् स्फोटायनाचार्यो वैयाकरणफोटतत्त्वस्वाऽऽविष्कर्ता आसीत् तथा विमानस्य स्फोटादुत्पन्नस्यायऽनस्य—गतेर्विज्ञानस्याऽऽविष्कर्ताऽप्यासीत्। अत एव स्फोटायनोऽयं वैयाकरणस्फोटवैमानिकगतिविज्ञाननिष्ठस्फोटेत्युभयविध-तत्त्वस्याऽऽविष्कर्ता-इति सिध्यति।

॥ इति संस्कृतव्याकरणशास्त्रैतिह्यविमर्शेऽष्टाध्याय्युल्लिखितपाणिनि-पूर्ववर्तिवैयाकरणवर्णनं नाम चतुर्थोध्यायः॥

## अथ पञ्चमोऽध्यायः

# पाणिनिसमकालीनवैयाकरणवर्णनम्

### १. निरुक्तकारो यास्काचार्यः

यास्कः[१] पाणिनेर्निकटतमः पूर्ववर्ती आसीत् । अस्य व्याकरणेन सह साक्षात् सम्बन्धो नासीत्, प्रत्युत अस्य कार्यं निरुक्तेन सह सम्बद्धं वर्तते । निरुक्तं निघण्टुश्च वैदिकशब्दानां सङ्कलनस्य व्युत्पत्तिगतमर्थं प्रकाशयति । यास्को हि शब्दान्तर्गतानां धातूनां रूपस्य गवेषणं स्वकीयं कर्तव्यं मनुते तथा तदाधारेण शब्दानामर्थं निर्दिशति । यास्कस्य निर्माणे प्रातिशाख्यानां योगदानमेतावदेव महत्तरं विद्यते यावत् पाणिनेर्निर्माणे यास्कस्य ।

यास्कपाणिनिभ्यां प्रयुक्तानां पारिभाषिकशब्दानामुपरि ध्याने दीयमाने पाणिनौ यास्कस्य स्पष्टः प्रभावो दृश्यते । निघण्टोश्च सर्वे शब्दा अपवादमन्तरा वेदाद् गृहीताः सन्ति । अस्यादावध्यायत्रये पर्यायवाचिनः शब्दाः सन्ति । चतुर्थाध्याये वेदेषु समागतानां कठिनशब्दानामस्ति संग्रहः । पञ्चमे च देवतानां नाम्नस्तत्प्रकृतिप्रभृतीनां वर्णनं विद्यते ।

यास्कः संज्ञाशब्दानामुत्पत्तिं धातुजां मन्यते । यास्कानन्तरं पाणिनेः पूर्वमनेके वैयाकरणा अभूवन्, परं तेषां नाद्यत्वे व्याकरणानि समुपलभ्यन्ते । अनादिकालतः प्रवहमाणा व्याकरणस्य धारा निरन्तरमुत्तरोत्तरं वर्द्धत एव । यास्को हि निश्चितरूपेण पाणिनेः पूर्वमासीत् । महाभारतस्य शान्तिपर्वणि यास्कस्यतन्नि-

---

१. यास्को माभृषिरव्यग्रोऽनेकयज्ञेषु गीतवान् ।
शिपिविष्ट इति ह्यस्माद् गुह्यानामधरो ह्ययम् ॥
स्तुत्वा मां शिपिविष्टेति यास्क ऋषिरुदारधीः ।
( महाभारतम्, शान्तिपर्व, ३४२।७०, ७१ )

रुक्तस्य चोल्लेखो विद्यते, परं न पाणिनेः । अतो यास्कात् पाणिनेः पूर्वत्वं नास्ति कश्चन सन्देहः । अस्य कालो वैक्रमाब्दात् त्रिसहस्रवर्षपूर्वमस्ति । श्रीमीमांसकमतानुसारेणाऽयं पाणिनिसमकालीनः ।

## २. वार्तिककार आचार्यः कात्यायनः

"उक्तानुक्तद्विरुक्तानां[1] चिन्ता यत्र प्रवर्तते । तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा **मनीषिण**" इति लक्षणलक्षितस्य वार्तिकस्य कारकत्वेन स्मृतोऽयं 'कात्यायन' नामको दाक्षिणत्यो महान् वैयाकरणो मुनित्रितये प्राधान्यम्भजमानः सूर्य इव व्याकरणाकाशे दृश्यते । भर्तृहरि-कुमारिल-क्षीरस्वामी-हेलाराज सायण-नागेश-पतञ्जलिप्रभृतिभिर्वाक्यकारपदेनाऽप्ययं व्यवह्रियते । अनेन पाणिनीयाष्टाध्यायि सूत्राण्याधारी कृत्याऽनेकानि वार्तिकानि लिखितानि । महाभाष्ये यान्यनपेक्षितानि वार्तिकानि, तानि प्रायशो खण्डितानि महाभाष्यकारेण ।

अस्य पर्यायतया नामानि-कात्यः, कात्यायनः पुनर्वसुः, मेधाजित्, वररुचिः इत्यादीनि संस्कृतव्याकरणशास्त्रेतिहासे उट्टङ्कितानि तत्प्रणेतृभिः श्रीपं०युधिष्ठिर-मीमांसकमहोदयैः । तत्र कात्येति नाम गोत्रप्रत्ययान्तम् । कात्यायन इतिनाम युवप्रत्ययान्तम् । पुनर्वसु इति नाक्षत्रं नाम । वररुचीति नाम सर्वथा बहुषु स्थलेषु विशेषतो महाराजसमुद्र गुप्तस्य कृष्णचरिते स्वर्गारोहणकाव्यस्य कर्तृत्वेन स्मृतो वर्तते । अयमेव पाणिनीयसूत्रवार्तिककारः कात्यायनः । कथासरित् सागरे, ( १।२।६६-७० ) बृहत् कथामञ्जर्याञ्च कात्यायनस्य" श्रुतधर" इति नामाऽप्युपलभ्यते । "कात्यायन" इति नाम्ना बहवः पुरुषाः संस्कृतवाङ्मये ऐतिहासिकदृष्ट्या कौशिककात्यायन-आङ्गिरसकात्यायन-भार्गवकात्यायन—याज्ञवल्क्यपुत्र-कात्यायनेत्यादयः प्रसिद्धाः सन्ति ।

काशिकाकारेण "पुराणप्रोक्तेषु[2] ब्राह्मणकल्पेषु" इति सूत्रमादाय यथाख्यानं शतपथब्राह्मणमचिरकालकृतं लिखितम् । परन्तु वार्तिककारेण याज्ञवल्क्या-

---

१. पराशर उपपुराणम् ॥
२. पाणिनी-अष्टाध्यायी, ४।३।१०५।।

दिभ्यः[1] प्रतिषेधस्तुल्यकालत्वात्'' इति वार्तिकमाध्यमेन याज्ञवल्क्यपुत्रस्य कात्यायनस्य पुत्रो वररुचिकात्यायन एवाऽष्टाध्याय्याः, वार्तिककार इति श्री पं० युधिष्ठिर मीमांसकानाम्मतम् ।

महाभाष्ये पस्पशाह्निके **यथा लौकिकवैदिकेषु'** इति वार्तिके यथा लोके वेदे चेति प्रयोक्तव्ये लौकिकवैदिक इति प्रयोगात्—**"प्रियतद्धिता:**[2] दाक्षिणात्याः यथा लोके वेदे चेति प्रयोक्तव्ये **यथा लौकिकवैदिकेषु** इति प्रयुञ्जते" इति कथने दाक्षिणात्योऽयं ब्राह्मण इति सिद्धयति । कथासरित्सागरानुसारं कात्यायनः कौशाम्बी निवासी आसीत् ।

महामुनिना पतञ्जलिना **"प्रोवाच भगवांस्तु कात्य"**[3] इति वचनेन वार्तिककारस्य प्रामाणिकता सुस्पष्टीकृता । न्यासकारेण जिनेन्द्रबुद्धिपादेनाऽपि—

**"एतच्च कात्या[4]यनप्रभृतीनाम्प्रमाणभूतानां वचनाद्विज्ञायते"**

**"कात्यायनवच[5]नप्रामाण्यायाद् धातुर्व्वं वेदितव्यम्'**

इति वाक्याभ्यां वार्तिककारस्य सर्वथा प्रामाण्यमुररीकृतम् ।

**कालः**

वार्तिककारः कात्यायनो यदि याज्ञवल्क्यपौत्रः स्वीक्रियेत तर्हि सः पाणिन्यपेक्षया किञ्चिदुत्तरवर्ती भविष्यति । यदि सः पाणिनेः साक्षात् शिष्य आसीत्, तर्हि सः पाणिनेः समकालिकः ! अतो वार्तिककारस्य कात्यायनस्य कालः विक्रमसंवत्सरात् प्रायशः २९००-३००० ( एकोनत्रिंशत्-त्रिंशत्तम ) शतकवर्षपूर्वमेव भवितुमर्हतीति श्रीपं० युधिष्ठिरमीमांसकानाम्मतम् ।

---

१. पतञ्जलि-व्याकरणमहाभाष्यम्, ४।२।६६॥

२. तदेव, १।१। आ० १ ॥

३. तदेव, ३।२।३ ॥

४. जिनेन्द्रबुद्धि—न्यास, ६।३।५०, २ भाग, पृ० ४५३-४५४॥

५. तदेव, ३।१।३५, १ भाग, पृ० ५२७॥

**कृतयः**

भगवता कात्यायनेन "यथोत्तरं मुनीनां प्रामाण्यम्" इति वैयाकरणप्रसिद्ध-वाक्यानुसारं पाणिन्यपेक्षया प्रामाण्यमधिगतम्। एतस्य मुख्यं कृत्यम्—अष्टाध्याया: सूत्राण्याधारीकृत्य वार्तिकपाठात्मकग्रन्थस्वरूपम्। कात्यायनीयवार्तिक-पाठः पाणिनीयव्याकरणस्य महत्त्वपूर्णमङ्गं वर्तते। पतञ्जलिनाऽप्येतदीयवार्तिकान्याधारीकृत्य स्वकीयम्महाभाष्यं प्रणीतम्। सम्पूर्णः खलुवार्तिकपाठः सम्प्रति नोपलभ्यते, अतः संख्या तेषां न निश्चेतुं शक्यन्ते। कात्यायनस्य प्रथमवार्तिकविषये विद्वत्सु वैमत्यमवलोक्यते। केचन **"सिद्धे शब्दार्थसम्बन्धे,** इति वार्तिकं कात्यायनस्य प्रथमवार्तिकं मन्यन्ते। महाभाष्ये उक्तम्—

**"मांगलिक[1] आचार्यो महत शास्त्रौघस्य मंगलार्थम् सिद्धशब्दमादितः प्रयुक्ते"**

अत्र "आदि" पदं न मुख्यार्थवाचकम्, अतः **"रक्षोहागमलध्वसन्देहाः प्रयोजनम्"** इत्येव प्रथमं वार्तिकमिति श्री पं० युधिष्ठिरमीमांसकानाम्मतम्। तत्र प्रमाणानि—

१ सायणाचार्येण स्वऋग्भाष्योपोद्धाते उक्तम्—

**"तस्यैतस्य[2] व्याकरणस्य प्रयोजनविशेषो वररुचिना वार्तिके दर्शितः —रक्षोहागमलध्वसन्देहाः प्रयोजनमिति। एतानि रक्षादीनि प्रयोजनानि प्रयोजनान्तराणि च महाभाष्ये पतञ्जलिना स्पष्टीकृतानि"॥**

२. व्याकरणाध्ययनप्रयोजनान्यन्वाख्यायता पतञ्जलिनोक्तम्—

**"एवम्[3] विप्रतिपन्नबुद्धिभ्योऽध्येतृभ्यः सुहृद् भूत्वा आचार्य इदं शास्त्रमन्वाचष्टे। इमानि प्रयोजनान्यध्येयं व्याकरणमिति।"**

---

१. पतञ्जलि-महाभाष्यम्, १।१।आ० १

२. सायणऋग्भाष्यम्, उपोदघातः॥

३. पतञ्जलि—व्याकरणमहाभाष्यम्, १।१। आ० १ ॥

अत्र "आचार्य" पदं कात्यायनवाचकम्, "इदं शास्त्र" मिति प्रयोजनान्वाख्यातं शास्त्रमेव । "रक्षोहागम" इति व्याकरणाध्ययनप्रयोजननिर्देशकं वाक्यम् वार्तिककारस्य न स्वीक्रियेत चेत्, तर्हि "आचार्य" पदम् भाष्यकारेणात्मने प्रयुक्तमिति शङ्का समुदेति ।

३. रक्षोहागमप्रभृतीति पञ्च प्रयोजनानि व्याख्याय महाभाष्यकारेण "**इमानि च भूयः**" इति वाक्येन त्रयोदश प्रयोजनानि व्याख्यातानि ।

अतः "**रक्षोहागमलघ्वसन्देहाः प्रयोजनम्**" इति वार्तिकमेव प्रथमं वार्तिकम् कात्यायनस्येति स्वीकर्तव्यम् ।

वार्तिककारस्य कात्यायनस्य द्वितीया खलु कृतिः "स्वर्गारोहणकाव्यम्" यच्च वाररुचकाव्यपदेनोल्लिख्यते । वररुचिरिति कात्यायनस्याऽपरं नाम । महाराजसमुद्रगुप्तेन कृष्णचरिताख्ये मुनिकविवर्णने उक्तम्—

"यः स्वर्गारोहणं कृत्वा स्वर्गमानीतवान् भुवि ।
काव्येनारुचिरेणैव ख्यातो वररुचिः कविः ॥"

"न केवलं व्याकरणं पुपोष दाक्षीसुतस्येरितवार्तिकैर्यः ।
काव्येऽपि भूयोऽनुचकार तं वै कात्यायनोऽसौ कविकर्मदक्षः ॥"

राजशेखरेणाऽप्युक्तम्—

"यथार्थता कथं नाम्नि मा भूद् वररुचेरिह ।
व्यधत्त कण्ठाभरणम् यः सदारोहणप्रियः ॥"

इति वचनेनाऽपि कात्यायनस्य पूर्वं काव्यकर्तृत्वं प्रसिद्धयति भ्राजा नाम श्लोका अपि वार्तिककारस्य रचनेति कैयट-हरदत्त-नागेशभट्टादिभिर्मन्यते । "**यस्तु प्रयुङ्क्ते कुशलो विशेषे**" इत्यादयो महाभाष्यस्थाः श्लोकाः भ्राजश्लोकसंग्रहस्था एव । अयम् कात्यायनोऽनेकशास्त्रवेत्तेति प्रतीयते । कात्यायनस्याऽपरा कृतिश्छन्दः शास्त्रमिति । कात्यायनस्मृतिरप्युपलभ्यते । मद्रासविश्वविद्यालयप्रकाशितः "अभयसारिका भाण" इति ग्रन्थोऽपि कात्यायनस्येति केचन मन्यन्ते, परन्तु सः वार्तिककारकात्यायनस्य नैवेति श्री पं० युधिष्ठिरमीमांसकानाम्मतम् ।

## (३) संग्रहकारो व्याडिः

आचार्यव्याडेर्नामनिर्देशः पाणिनेरष्टाध्याय्यां नोपलभ्यते, किन्तु शौनकेन ऋक्प्रातिशाख्ये व्याडेरनेकानि मतान्युद्धृतानि सन्ति ।[1] भाषावृत्तौ ( ६।१।७० ) पुरुषोत्तमदेवेन गालवेन साकं व्याडेरेकं मतमुद्धृतमस्ति[2] । महाभाष्ये प्रसिद्धवैयाकरणानामापिशलि–पाणिनि-गौतमानामन्तेवासिभिः सह व्याडेरप्यन्तेवासिनां निर्देशोऽस्ति[3] । ऋक्प्रातिशाख्ये शाकल्यगार्ग्याभ्यां साकमेव व्याडिरप्युल्लेखो विद्यते[4] ।एतेनेदं सिध्यति यद् व्याडिना किञ्चित् शब्दानुशासनं नूनं रचितम् । व्याडेर्द्वितीयं नाम दाक्षायणः। अयं दाक्षीपुत्रस्य पाणिनेरस्ति मातुलः । अनेन लक्षश्लोकात्मकः संग्रहनामको ग्रन्थो लिखित आसीदिति प्रसिद्धिः ।

श्रूयते यद्, अनेनैकस्य दशाध्यायीव्याकरणस्याऽपि रचना कृताऽस्ति, परमस्य परिचयः संग्रहकाररूपेणाऽधिकं विश्रुतं विद्यते। पाणिनेः पूर्ववर्तिनां वैयाकरणानामाचार्याणां परम्परायां व्याडेः स्थानमत्युन्नतमस्ति । एतस्याऽसाधाणविद्वत्तायाः परिचायकः सङ्ग्रहग्रन्थः साम्प्रतं नोपलभ्यते, किन्तु वाक्यपदीयटीकाकर्तुः पुण्यराजस्य साक्षितया, नागेशभट्टस्योद्धरणैश्च प्रतीयते यद् व्याडिकृतसंग्रहग्रन्थस्य परिमाणो लक्षश्लोकात्मक आसीत् ।

पाणिनीयव्याकरणे आचार्यो व्याडिः सङ्ग्रहनामकमेकं ग्रन्थं लिखितवान् आसीद्, यत्रैकलक्षश्लोका आसन् । तस्य सङ्ग्रहग्रन्थस्य लक्षणमेवमस्ति—

"विस्तरेणोपदिष्टा[5]नामर्थानां सूत्रभाष्ययोः ।
निबन्धो यः समासेन सङ्ग्रहं तं विदुर्बुधाः ।।"

---

१. शौनक—ऋक्प्रातिशाख्यम्, २।२३,२८ ।। ६।४३ ।। १३।३१,३७ ।।

२. इकां यण्भिर्व्यवधानं व्याडिगालवयोरिति वक्तव्यम् । ( पुरुषोत्तमदेव-भाषावृत्ति, ६।१।७० )

३. आपिशलपाणिनीयव्याडीयगौतमाः । ( पतञ्जलि-महाभाष्यम्, ६।२।३६ )

४. व्याडिशाकलपगार्ग्याः । शौनक-ऋक्प्रातिशाख्यम्, १३।३१ )

५. भरतमुनि–नाट्यशास्त्रम्, ६।९ ।।

महाभाष्यप्रदीपोद्योते लिखितमस्ति यत्—"**सङ्ग्रहो व्याडिकृतो लक्षसंख्याको ग्रन्थः ।**" अपि चोक्तम् "**दक्षिपुत्र[1]वचो व्याख्यापटुः ।**" इह हि पुरा पाणिनीयेऽस्मिन् व्याकरणे व्याड्युपचितो लक्षग्रन्थपरिमाणः संग्रहाभिधानो निबन्ध आसीत् । व्याडेर्नाम ऋक्प्रातिशाख्य–महाभाष्य–काशिका-भाषावृत्त्यादिषूपलभ्यते ।

व्याडिनामानोऽनेके आचार्याः समभूवन्—एकः संग्रहकारो व्याडिर्यस्योल्लेखः प्रातिशाख्ये, द्वितीयः कोशकारः, यस्योद्धरणं कोशेषूपलभ्यते । तृतीयो रसज्ञो व्याडिः, यस्योल्लेखश्चीनीयात्रिणा इत्सिङ्गेन कृतोऽस्ति । व्याडेः पितुर्नाम व्यड आसीत् । न्यासकारेण जितेन्द्रबुद्धिना. पाणिनिना च व्याडिशब्दस्य क्रौड्यादिगणे[2] पाठकरणाद् व्यडस्याऽपत्यं स्त्रीरिति विग्रहे व्याड्याशब्दो निष्पद्यते । अतो व्याडेर्भगिन्याः नाम व्याड्येति प्रतीयते । सायणाचार्यो व्याडिपदमाचष्टे—

"**अडो[3]वृश्चिकलाङ्गूलं, तेन च तैक्ष्ण्यं लक्ष्यते, विशिष्टोऽऽस्तैक्ष्ण्यमस्य व्यडः, तस्यापत्यं व्याडिः । अत इञ्, स्वागतादीनां चेति वृद्धिप्रतिषेधैजागमयोर्निषेधः ॥**"

व्याडिकृतलिङ्गानुशासनस्योल्लेखो वामन-हर्षवर्धन-हेमचन्द्रलिङ्गानुशासनेषूपलभ्यते । पुरुषोत्तमदेवेन व्याडेर्नामान्तरं "विन्ध्यस्थ" इति लिखितमतोऽयं विन्ध्यपर्वतनिवासीति प्रतीयते । समुद्रगुप्तेन कृष्णचरिते मुनिकविवर्णनप्रसङ्गे लिखितमस्ति यद् व्याडिः रसाचार्यः, श्रेष्ठमीमांसकः कविश्चासीत्—

"रसाचार्यः कविर्व्याडिः[4] शब्दब्रह्मैकवाङ्मुनिः ।
दाक्षिपुत्रवचो व्याख्या पटुर्मीमांसकाग्रणीः ॥
बालचरितं कृत्वा यो जिगाय भारतं व्यासं च ।
महाकाव्यविनिर्माणे तन्मार्गस्य प्रदीपमिव ॥"

---

१. समुद्रगुप्त—कृष्णचरित, मुनिकविवर्णन, श्लोक १६ ।

२. क्रौड्यादिभ्यश्च । ( पाणिनि–अष्टाध्यायी, ४।१।८० )

३. सायण—माधवीया धातुवृत्ति, पृ० ८२, चौखम्बासंस्करणम् ।

४. समुद्रगुप्त—कृष्णचरित, प्रस्तावना, १६, १७ ।

व्याडेः रसाचार्यत्वं पुराणसाहित्ये सुप्रसिद्धमस्ति। [1]पादरसाचार्यत्वेन तस्य नाम गरुडपुराणे निर्दिष्टमस्ति—

"आदाय तत्सकलमेव' ततोऽन्नभाण्डंजम्बीरजातरसयोजनया विपक्वम्।
घृष्टं ततो मृदुतनूकृत पिण्डमूलैः कुर्याद् यथेष्टमनुभोक्तिकमाशु विद्धम्॥

मृल्लिप्तमत्स्यपुटमध्यगतं तु कृत्वा
पश्चात् पचेत् तनु ततश्च वितानपत्र्या।
दुग्धे ततः पयसि तं विपचेत् सुधायां
पक्वं ततोऽपि पयसा शुचि चिक्कणेन॥
शुद्धं ततो विमलवस्त्रनिघर्षणेन
स्यान्मोक्तिकं विमलसद्गुणकान्तियुक्तम्।
व्याडिर्जगाद जगता हि महाप्रभाव—
सिद्धो विदग्धहिततत्परया कृपालुः॥"

व्याडेर्दाक्षिर्दाक्षाय[2]णश्चेति नामान्तरद्वयमप्यासीत्। व्याडिनाम्नाऽस्य पितुर्नाम व्यड इति, दाक्षायणनाम्नाऽस्य पितुर्नाम दक्ष इति प्रतीयते। दक्षः पाणिनेर्मातामहः, पाणिनेर्मातुर्दाक्ष्याश्च पिता आसीत्। अतो व्यडदक्षयोरेकत्वे, व्याडिदाक्षिदाक्षायणानामेकस्यैव पुरुषस्य नामान्तरे च स्वीकारे व्याडिः पाणिनेर्मातुलः सिध्यति।

**कालः**

व्याडेराचार्यस्य कालः भारतयुद्धात् पश्चात् २००-३०० मध्ये वर्तते। व्याडिना लिखितः संग्रहनामको ग्रन्थो नेदानीमुपलभ्यते। अतस्तत् स्वरूपं निश्चेतुं दुःशकम्। अथापि चान्द्रव्याकरणवृत्तौ पञ्चकः सङ्ग्रह इत्युदाहरणदर्शनेनाऽनुमीयते

---

१. गरुडपुराणम्, पूर्वार्द्धम्, ६९।३५-३७।

२. शोभना खलु दाक्षायणस्य संग्रहस्य कृतिः। (पतञ्जलि—महाभाष्यम्, २।३।३।६६)

यद् अष्टकं पाणिनीयमितिवत् सङ्ग्रहः पञ्चाध्यायात्मक आसीत्। पुण्यराजेनाऽपि चर्चितं वाक्यपदीयटीकायाम्, नागेशः सङ्ग्रहं लक्षश्लोकात्मकं मनुते। वाक्यपदीय इव संग्रहो दार्शनिक संग्रहोऽस्ति। संग्रहे १४ सहस्रपदार्थानां संग्रह आसीत्। संग्रहवचनानि भर्तृहरि-कैयट-नागेश-हरदत्तादयो महता समादरेण गृह्णन्ति। अतो व्याडिः पाणिनेः समकालीनस्तस्य कालश्च वैक्रमाब्दादेकोनत्रिंशच्छतवर्षपूर्वमस्ति।

॥ इति संस्कृतव्याकरणशास्त्रैतिह्यविमर्शे पाणिनिसमकालीनवैयाकरणवर्णनं नाम पञ्चमोऽध्यायः।

अथ षष्ठोऽध्यायः

# अष्टाध्यायिवृत्तिकारवर्णनम्

**विषयप्रवेशः**

तन्त्ववयववत् स्वात्मन्यनेकानर्थान् समावेशकानां, विस्तृतार्थंसूचकानां वा सूत्राणामभिप्रायं बोधयितुं व्याख्यानग्रन्थानामावश्यकता भवति। व्याख्यानग्रन्थ-स्वरूपं व्याचक्षाणेन भगवता पतञ्जलिनोक्तम्[1]।

"न केवलं चर्चापदानि व्याख्यानम्—वृद्धिः आत् ऐज् इति किं तर्हि? उदाहरणम्, प्रत्युदाहरणम्, वाक्याध्याहारश्चेत्येतत् समुदितं व्याख्यानं भवति।"

अर्थाद् व्याख्याने पदच्छेद-वाक्याध्याहार (सूत्रेऽदृष्ट-पूर्वप्रकरणस्थपदानुवृत्ति) युतान्युदाहरणानि प्रत्युदाहरणानि च भाव्यानि। वैयाकरणेषु व्याख्यानविषये एकः श्लोकः सुप्रसिद्धोऽस्ति। यथा—

"पदच्छेदः पदार्थोक्ति[2]र्विग्रहो वाक्योजना।
पूर्वपक्षसमाधानं व्याख्यानं पञ्चलक्षणम्॥"

अर्थात् पदच्छेदः, पदानामर्थः समस्तपदानां विग्रहः वाक्ययोजना, पूर्वपक्षः, समाधानञ्चैते पञ्च व्याख्यानस्याऽवयवाः भवन्ति।

नागेशकृतस्य "उद्योतस्य"छायाटीकायाः प्रारम्भे षड्विधव्याख्यानस्य निर्देशः प्राप्यते। एतस्याः षड्विधायाः व्याख्याः त्रयः प्रकाराश्छायाकारेण विष्णुधर्मोत्तर-पुराणात् समुद्धृताः।

एतैर्वचनैः स्पष्टम् यत् सूत्रग्रन्थानां प्रारम्भिकेषु व्याख्यानेषु पदच्छेद-पदार्थ-

---

१. पतञ्जलि—व्याकरणमहाभाष्यम्, १।१।आ० १॥

२. भाषावृत्ति की सृष्टिधर-विरचित विवृति में (भाषावृत्ति के प्रारम्भ में पृष्ठ १६ पर)।

समासविग्रहाऽनुवृत्ति-वाक्ययोजना ( सूत्रेऽदृष्टपूर्वप्रकरणस्थपदानुवृत्ति )– उदाहरण-प्रत्युदाहरण-पूर्वपक्ष-समाधानानां प्रायः समावेशो भवति स्म ।

पाणिनीयाष्टाध्याय्यामनेकैः प्राचीनैरर्वाचीनैश्चाऽऽचार्यैश्च वृत्तिग्रन्थाः प्रणीताः पातञ्जल[1] महाभाष्यावलोकनेन ज्ञायते यत् ततः पूर्वमष्टाध्याय्यामनेकाः वृत्तयः प्रणीता आसन् ।

श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयेन स्वीकीये ''संस्कृत व्याकरशास्त्र का इतिहास इत्यभिधेये ग्रन्थे अष्टाध्याय्यां महाभाष्यात् प्राचीनास्ववर्वाचीनासु च वृत्तिषु पाणिनि-श्वोभूति-व्याडि -कुणि-माथुर-वररुचि-देवनन्दी-दुर्विनीत-चुल्लिभट्टि-निलूर-चूर्णि-जयादित्यवामन-भागवृत्तिकार-भर्त्रीश्वर-भट्टजयन्त-श्रुतपाल-केशव-इन्दुमित्र-मैत्रेयरक्षित पुरुषोत्तमदेव-शरणदेव-अप्पननैनार्य-अन्नम्भट्ट-भट्टोजिदीक्षित-अप्पयदीक्षित-नीलकण्ठ-वाजपेयी-विश्वेश्वरसूरि-गोकुलचन्द्र-ओरम्भट्ट-महर्षिदयानन्दसरस्वती प्रणीतवृत्तीनामुल्लेखो विहितः । पाणिनेः, व्याडेश्च जीवनवृत्तं पूर्वमेव वर्णितम्, अत्र पाणिनेः व्याडेश्च वृत्तिविषयं निरूप्यान्येषां वृत्तिकाराणां परिचयः समुपस्थापयिष्यते ।

## (१) पाणिनिः

पाणिनिना स्वोपज्ञस्य 'अकालक' व्याकरणस्य स्वयमनेकधा प्रवचनं विहितमासीत् । यथा चोक्तम्महाभाष्ये—

''कथं त्वेतत्[2] सूत्रं पठितव्यम् । किमाकडारादेका संज्ञा, आहोस्वित् प्राक्कडारात् परं कार्यमिति । पुनः पुनरयं सन्देहः ? उभयथा ह्याचार्येण शिष्या सूत्रं प्रतिपादिताः—केचिदाकडारादेका संज्ञेति, केचित् प्राक्कडारात् परं कार्यमिति''

---

१. ''यत्तदस्य योगस्य मूर्धाभिषिक्तमुदाहरणं तदपि संगृहीतं भवति ? कि पुनस्तत् ? पट्व्या मृद्व्येति।'' ( पतञ्जलि—व्याकरणमहाभाष्यम्; १।१।५६) । इस पर कैयट लिखता है—मूर्धाभिषिक्तमिति—सर्ववृत्तिषूदाहृतत्वात् ।'' ( महाभाष्यप्रदीप, १।१।५६।।)

२. पतञ्जलि—व्याकरणमहाभाष्यम्, १।४।१ ।

काशिकायामुक्तम्—

शुङ्गाशब्दं[१] स्त्रीलिङ्गमन्ये पठन्ति, ततो ढकं प्रत्युदाहरन्ति शौङ्गेय इति । द्वयमपि चैतत् प्रमाणम्, उभयथा सूत्रप्रणयनात् ॥''

काशिकायां प्रदर्शिताभ्याम्–''पूर्वपाणिनीयाः,[२] अपरपाणिनीयाः'' इत्येताभ्यामुदाहरणाभ्यां प्रतीयते यत् पाणिनिना शिष्याणां द्वौ विभागौ प्रदर्शितौ ।

उपर्युक्तैर्वचनैः स्पष्टम् यत् सूत्रकारेण स्वप्रणीत-सूत्राणां स्वयमनेकधा प्रवचनं विहितमासीत् । सूत्रप्रवचनकाले सूत्रवृत्तितदुदाहरणप्रत्युदाहरण-प्रदर्शनमप्यावश्यकम्भवति स्म, एतदन्तरेण सूत्रमात्रप्रवचनासम्भवात् तस्य वैयर्थ्यत्वापत्तेश्च । अत एवेदमवश्यमेव स्वीकर्तव्यम् यत् पाणिनिना स्वाष्टाध्याय्युपरि कस्याश्चिद् वृत्तेः प्रणयनं विहितमासीत् । तत्राऽधोलिखितान्यपि प्रमाणानि सन्ति—

(१) भर्तृहरिणा 'इग्यणः[३] सम्प्रसारणम्' इति सूत्रविषये महाभाष्यदीपिकायामुक्तम्—

''उभयथा ह्याचार्येण शिष्याः प्रतिपादिताः—केचिद् वाक्यस्य, केचिद् वर्णस्य ।''

अर्थात् पाणिनिना शिष्येभ्यः ''इग्यणः[४] सम्प्रसारणम्'' इति सूत्रस्याऽर्थंद्वयमुपदिष्टम् । ''यणः स्थाने इक्'' इति याक्यस्य सम्प्रसारणसंज्ञा केभ्यश्चिदुपदिष्टा, अन्येभ्यश्च ''यणः स्थाने जायमानस्य इक् वर्णस्य सम्प्रसारण संज्ञोपदिष्टा ।

(२) पाणिनीयाष्टाध्याय्या; ''तद्धरति वहत्या''वहति भाराद्वंशादिभ्यः'' इति सूत्रं द्विविधं व्याचक्षाणेन जयादित्येनोक्तम्—

सूत्रार्थद्वयमपि चैतदाचार्येण शिष्याः प्रतिपादिताः । तदुभयमपि प्रमाणम् ।''

---

१. काशिका, ४।१।११४ ।

२. तदेव, ६।२।१०४ ।

३. पाणिनि, अष्टाध्यायी, १।१।४५ ।

४. पाणिनि—अष्टाध्यायी, १।१।४५ ।

५. तदेव, ५।१।५० ।

अर्थात् पाणिनिनाऽऽचार्येण सूत्रस्योभावप्यर्थौ पाठितौ, अतोऽर्थद्वयमपि-प्रमाणम् ।

(३) "मीनातिमिनोतिदीङां[1] ल्यपि च" इति सूत्रं व्याचक्षाणेन महाभाष्ये भगवता पतञ्जलिनोक्तम्—

"यर्त्तांह मीनातिमिनोति ल्यपि चेत्यत्र एज्ग्रहणमनुवर्तयति ।"

अत्र अनुवर्तयति" क्रियायाः कर्ता पाणिनिरेवाऽस्ति ।

एभिः प्रमाणैः स्पष्टं यत् पाणिनिना स्वशब्दानुशासनस्य वृत्तौरवश्यमेव प्रवचनं विहितमासीत् ।

## (२) श्वोभूतिः

आचार्येण श्वोभूतिना अष्टाध्याय्या एका वृत्तिर्विलिखिताऽऽसीदिति "श्रथुकः[2] किति" इति सूत्रस्य "केचिदत्र द्विवकारनिर्देशेन गकारप्रश्लेषं वर्णयन्ति" इति काशिकोक्तं व्याचक्षाणेन श्रीजिनेन्द्रबुद्धिपादेन स्वन्यासग्रन्थे उक्तम् —

"केचित् श्वभूतिव्याडिप्रभृतयः 'श्रथुकः किति' इत्यत्र द्विककारनिर्देशेन हेतुना चर्त्वभूतो गकारः प्रश्लिष्ट इत्येवमाचक्षते ।"

श्वोभूतेराचार्यस्य किञ्चिदपीतिवृत्तं न ज्ञायते । भगवता पतञ्जलिना स्वमहाभाष्ये श्वभूतेरुल्लेखो विहितः । तथा हि—

"स्तोष्याम्यहं पादिकमौदवाहिं[3] ततः श्वोभूते शातनीं पातनीं च ।
नेतारावागच्छन्तं धारणिं रावणिं च ततः पश्चात् स्नंस्यते ध्वंस्यते च ॥"

अत्र श्लोके श्वोभूतेराचार्यस्य सम्बोधनरूपेण निर्देशात् प्रतीयते यत् सः श्वोभूतिरस्य श्लोकस्य रचयितुः शिष्य आसीत् । मतमेतत् समर्थयता कैयटाचार्येणोक्तम्—

"श्वोभूतिर्नाम[4] शिष्यः ।"

---

१. तदेव, ६।१।५० ।

२. तदेव, ६।२।११ ।

३. पतञ्जलि व्याकरणमहाभाष्यम्, १।१।५६ ।

४. कैयट-महाभाष्यप्रदीप, १।१।५६ ।

केषाञ्चिद् विदुषाम्मतानुसारेण श्वोभूतिः पाणिनेः साक्षात् शिष्योऽस्ति। यदि तथ्यमिदं प्रमाणान्तरेण पुष्टं भवेत्तर्हि निश्चितरूपेण सः वैक्रमाब्दादेकोनत्रिंशच्छतवर्षप्राचीनो भविष्यति। केचन श्वोभूतिं पञ्चमेशवीयशतके समुत्पन्नं मन्यन्ते।

## (३) व्याडिः

न्यासकारेण श्रीजिनेन्द्रबुद्धिपादेन व्याडेरष्टाध्यायीवृत्तिविषये सङ्केतो विहितः। तथा हि—

"केचित् श्वभूतिव्याडिप्रभृतयः[1] 'श्रथुकः किति' इत्यत्र द्विककारनिर्देशेन हेतुना चर्त्वभूतो गकारः प्रश्लिष्ट इत्येवमाचक्षते।"

अतो यदि "श्र्युकः[2] किति" इति सूत्रस्योक्तं व्याख्यानं स्वसंग्रहग्रन्थे न कृतं स्यात्तर्हि निश्चितरूपेण व्याडिना पाणिनीयाष्टाध्याय्या वृत्तिर्लिखितेति सम्भाव्यते। व्याडेर्जीवनवृत्तकालादिकं पूर्वमेव वर्णितम्।

## (४) कुणिः

अनेकैः प्राचीनैर्ग्रन्थकारैः स्वग्रन्थेषु पाणिनीयाष्टाध्याय्याः कुणिप्रणीतवृत्तेरुल्लेखो विहितः। महाभाष्यदीपिकायां भर्तृहरिणोक्तम्—

"अत एषां व्यावृत्त्यर्थं[3] कुणिनापि तद्धितग्रहणं कर्तव्यम्।

अतो गणपाठ एव ज्यायान् अस्यापि वृत्तिकारस्येत्येतदनेन प्रतिपादयति।"

कैयटाचार्येण महाभाष्यप्रदीपटीकायामुक्तम्—

"कुणिना प्राग्ग्रहणमाचार्यनिर्देशार्थं[4] व्यवस्थितविभाषार्थं च व्याख्यातम्। ...... भाष्यकारस्तु कुणिदर्शनमशिश्रयत्।"

१. जिनेन्द्रबुद्धि—न्यास, ७।२।११।

२. पाणिनि—अष्टाध्यायी, ७।२।११।

३. भर्तृहरि—महाभाष्यदीपिका, १।१।३८।

४ कैयट—महाभाष्यप्रदीप, १।१।७५॥

हरदत्तेनाऽपि पदमञ्जर्यामुक्तम्—

"कुणिना तु प्राचां[1] ग्रहणमाचार्यनिर्देशार्थं व्याख्यातम्, भाष्यकारोऽपि तथैवाशिश्रयत् ।"

एतैरुद्धरणैः स्पष्टम् यदाचार्येण कुणिना अष्टाध्याय्या वृत्तिरवश्यमेव प्रणीताऽऽसीत् । वृत्तिकारस्याऽऽचार्यस्य कुणेरितिवृत्तं सर्वथाऽन्धकारावृतमस्ति । तस्य कालविषयेऽपि किञ्चिद् वक्तुं न शक्यते, किन्तु भर्तृहरिप्रभृतीनामाचार्याणामुद्धरणैरनुमीयते यत् कुणिराचार्यः पतञ्जलेर्व्याकरणमहाभाष्याकारात् प्राचीन इति ।

## (५) माथुरः ( माधुरः )

महाभाष्य[2]-भाषावृत्ति[3]-काशिका[4] ग्रन्थेषु माथुराचार्यप्रोक्तायाः अष्टाध्यायी वृत्तेरुल्लेखोऽस्ति । डॉ० कीलहार्न महोदयः "माधुरी वृत्तिः" इति पाठान्तरं मनुते । काशिकायामपि "तेन[5] प्रोक्तम्" इति सूत्रव्याख्याने "अन्येन कृता माथुरेण प्रोक्ता माथुरी वृत्तिः" इत्युदाहरणं प्रदत्तम्। पदमञ्जर्यां "माधुरी" ति पाठान्तरं स्वीक्रियते, किन्तु न्यासकारः "माधुरी" पाठमेव स्वीकरोति ।

माथुरशब्दस्तद्धितप्रत्ययान्तः । तदनुसारमस्य तात्पर्यं "मथुरानिवासी" "मधुरा अभिजनवान्" इति प्रतीयते । महाभाष्ये उल्लेखाज्ज्ञायते यन्माधुरोऽयं पतञ्जलेः प्राचीनोऽस्ति ।

व्याकरणमहाभाष्ये पतञ्जलिनोक्तम्—

"यत्तेन प्रोक्तं[6] न च तेन कृतम् माधुरी वृत्तिः ।"

---

१. हरदत्त–पदमंजरी, भाग २, पृ० १४५ ।

२. पतञ्जलि व्याकरणमहाभाष्यम्, ४।३।१०१ ।

३. पुरुषोत्तमदेव–भाषावृत्ति, १।२।५७ ।

४. काशिका, ४।३।१०१ ।

५. पाणिनि अष्टाध्यायी, ४।३।१०१ ।

६. पतञ्जलि–व्याकरणमहाभाष्यम्, ४।३।१०१ ।

पुरुषोत्तमदेवेन भाषावृत्तावुक्तम्—

"माधुर्यां तु[1] वृत्तावशिष्यग्रहणमापादमनुवर्तते।"

अर्थात् माधुरीवृत्तौ "तदशिष्यं[2] संज्ञाप्रमाणत्वात्" इति सूत्रस्य 'अशिष्य' पदस्यानुवृत्तिः प्रथमाध्यायद्वितीयपादान्तं यावद् वर्तते।

## (६) वररुचिः

वार्तिककारकात्यायनात् सर्वथा भिन्नेनाऽर्वाचीनेन वररुचिनाऽऽचार्येण अष्टाध्याय्या एका वृत्तिः प्रणीता। मद्रासराजकीयहस्तलेखपुस्तकालये विक्रमादित्यनवरत्नान्तर्गतनिर्दिष्टस्य वररुचेरष्टाध्यायीवृत्तेर्हस्तलेखो वर्तते। श्री आफ्रेख्ट-महोदयेनापि स्वबृहत्सूचीपत्रे वररुचिप्रणीताया अष्टाध्यायीवृत्तेरुल्लेखो विहितः।

वररुचिरयमपि कात्यायनगोत्रोत्पन्नः। "सदुक्तिकर्णामृतम्" इत्यभिधेयग्रन्थस्यैकेन श्लोकेन ज्ञायते यदस्याऽपरं नाम "श्रुतिधर" इत्यप्यासीत्।[3] वाररुचनिरुक्तसमुच्चयात् प्रतीयते यदयं कस्यचिद् राज्ञो धर्माधिकारी आसीत्।[4] अनेके विद्वांसः वररुचिममुं विक्रमादित्यस्य पुरोहितं मन्यन्ते। वररुचेरस्य भागिनेयः वासवदत्तालेखकः सुबन्धुरासीत्[5]।

भारतीयानुश्रुत्यनुसारं अष्टाध्यायीवृत्तिकार आचार्यो वररुचिर्वैक्रमाब्दप्रवर्तकस्य महाराजस्य विक्रमादित्यस्याऽन्तेवासी आसीत्।[6] वररुचेराचार्यस्य अष्टाध्यायीवृत्तिः २।४।३४ सूत्रं यावदुपलभ्यते।

---

१. पुरुषोत्तमदेव–भाषावृत्ति, १।२।५७।

२. पाणिनि–अष्टाध्यायी, १।२।५३।

३. ख्यातो यश्च श्रुतिधरतया विक्रमादित्यगोष्ठी–विद्याभर्तुः खलु वररुचेराससाद प्रतिष्ठाम्। ( सदुक्तिकर्णामृतम्, पृ० २९७ )

४. युष्मत्प्रसादादहं क्षपितसमस्तकल्मषः सर्वसम्पत् संगतो धर्मानुष्ठानयोऽयश्च संजातः। ( तदेव, पृ० ५१, द्वि० सं० )

५. भगवद्दत्त–भारत वर्ष का इतिहास, पृ० ९ ( द्वि० सं० )

६. भारत वर्ष का वृहद् इतिहास, भाग १, पृ० ६८ ( द्वि० सं० )

## (७) देवनन्दी

जैनेन्द्रव्याकरणस्य प्रणेत्रा देवनन्दिना पाणिनीयव्याकरणस्य "शब्दावतारन्यास" नाम्नी टीका लिखिता। देवनन्दिनोऽपरं नाम "पूज्यपाद" आसीत्। "शिमोगा" मण्डलस्य "नगर" तहसीलस्य ४३ तमे शिलालेखे लिखितम् यत्—

"न्यासं जैनेन्द्रसंज्ञं[१] सकलबुधनतं पाणिनीयस्य भूयो,
न्यासं शब्दावतारं मनुजततिहितं वैद्यशास्त्रं च कृत्वा।
यस्तत्त्वार्थस्य टीकां व्यरचयदिह भात्यसौ पूज्यपादः,
स्वामी भूपालवन्द्यः स्वपरहितवचः पूर्णदृग्बोधवृत्तः॥"

अर्थात्—पूज्यपादेन स्वव्याकरणे "जैनेन्द्रन्यास" नाम्नी पाणिनीयव्याकरणस्य "शब्दावतारन्यास" नाम्नी, तत्त्वार्थसूत्रस्य च टीका, वैद्यशास्त्रञ्च प्रणीतम्।

१२१७ वैक्रमाब्दीयेन वृत्तविलासेन "धर्मपरीक्षा" इत्यभिधेयकन्नडभाषा-काव्यप्रशस्तौ लिखितम् यत्[२]—

"भरदिं जैनेन्द्रभासुरं—एनल् औरेदम् पाणिनीयक्के टीकुम्।"

अत्र पाणिनीयव्याकरणोपरि कस्यचित् टीकाग्रन्थलेखनस्य वर्णनमस्ति।

प्रमाणाभ्यामेताभ्यां स्पष्टम् यदाचार्येण देवनन्दिना पाणिनीयव्याकरणस्य कश्चित् टीकाग्रन्थोऽवश्यमेव प्रणीत आसीत्। आचार्यदेवनन्दिना प्रणीतः "शब्दा-वतारन्यासः" सम्प्रति नोपलभ्यते।

देवनन्दिनः पितुर्नाम "माघवभट्टः मातुश्च नाम "श्रीदेवी" आसीत्। उभा-वेतौ वैदिकमतानुयायिनावास्ताम्। देवनन्दिनो जन्म कर्नाटकप्रदेशस्य "काले" इत्यभिधेये ग्रामे समजनि। माघवभट्टः स्वपत्न्याः कथनेन जैनमतमङ्गीकृतवान्।

देवनन्दी जैनमतस्य प्रामाणिकाऽऽचार्यत्वेन स्वीक्रियते। जैनलेखका इमं "पूज्य-पाद" नाम्ना, 'जिनेन्द्रबुद्धि नाम्ना च स्मरन्ति। गणरत्नमहोदधिप्रणेत्रा वर्धमानेन च सः "दिग्वस्त्र" नाम्ना स्मृतः[३]।

१. "जैन साहित्य और इतिहास" पृ० १०७, टि० १; द्वि० सं०पृष्ठम्,३३ टि० २।
२. जैन साहित्य और इतिहास, पृ० ९३, टि० २ (प्र० सं०)।
३. शालातुरीयशकटाङ्गजचन्द्रगोमिदिग्वस्त्रभर्तृहरिवामनभोजमुख्याः। दिग्वस्त्रो देव नन्दी। पृ० १, २।

देवनन्दिन आचार्यस्य कालोऽद्यावध्यनिश्चितोऽस्ति। तस्य कालविषयेऽधोलिखितानि निर्णायकप्रमाणानि प्रस्तूयन्ते—

१. जैनग्रन्थकारेण वर्धमानेन ११९७ वैक्रमाब्दे स्वकीयः "गणरत्नमहोदधि" इत्यभिधेयो ग्रन्थः प्रणीतः। तत्र आचार्यो देवनन्दी बहुधा "दिग्वस्त्र" नाम्ना स्मृतः।

२. राष्ट्रकूटस्य जगत्तुङ्गस्य राज्ञः समकालिको वामनः स्वकीये "लिङ्गानुशासने" आचार्यदेवनन्दिप्रणीतं लिङ्गानुशासनं बहुधा समुद्धृतं करोति।[1] जगत्तुङ्गस्य राज्यकालः ८५१ वैक्रमाब्दात् ८७१ वैक्रमाब्दं यावदासीत्।[2]

३. कर्नाटककविचरित्रकर्त्रा गङ्गवंशीयो राजा दुर्विनीतः पूज्यपादशिष्यत्वेन निरूपितः। मर्करा ( कुर्ग ) तो दुर्विनीतपितुर्महाराजस्याऽविनीतस्य ३८८ शकाब्दस्यैकं ताम्रपत्रमवाप्तम्। तदनुसारं अविनीतः सं० ५२३ वैक्रमाब्दे राज्यं करोति स्म। "हिस्ट्री आँफ कनाडी लिटरेचर" कर्नाटककविचरित्र" इत्युभयग्रन्थानुसारं महाराजस्य दुर्विनीतस्य राज्यकालः ५३९ वैक्रमाब्दं यावदासीत्[3]।

सं० ९९० वैक्रमाब्दे निर्मिते "दर्शनसार" इत्यभिधेये प्राकृतग्रन्थे उक्तम्—

"सिरिपुज्जपादसीसो[4] द्राविडसंघस्य कारगो दुट्ठो।
णामेण वज्जणंदी पाहुडवेदी महासत्तो॥
पञ्चसए छब्बीसे विक्कमरायस्स मरणपत्तस्स।
दक्खिणमहुरा-जादो दाविणसंघो महामोहो॥"

अर्थात् पूज्यपादशिष्यो वज्रनन्दी विक्रमादित्यस्य मृत्योः ५२६ तमे वर्षे दक्षिणमथुरायां मदुरायां वा द्रविडसंघः स्थापितः।

---

१. व्याडिप्रणीतमथ वाररुचं सचान्द्रं जैनेन्द्रलक्षणगतं विविधं तथान्यत्।
श्लो० ३१।

२. जैन साहित्य और इतिहास, पृ० ११६ ( प्र० सं० )।

३. तदेव, पृ० ११६ ( प्र० सं० )।

४. जैन साहित्य और इतिहास, टि०, प्र० सं० पृ० ४३।

तृतीयचतुर्थप्रमाणाभ्यामिदं स्पष्टीभवति यदाचार्यस्य देवनन्दिनः कालो वैक्रमाब्दषष्ठशतकस्य पूर्वार्द्धमस्ति ।

आचार्येण देवनन्दिना जैनेन्द्रव्याकरण—धातुपाठ-गणपाठ-लिङ्गानुशासन-परिभाषापाठेत्याख्या अन्ये व्याकरणग्रन्था अपि प्रणीताः ।

## (८) दुर्विनीतः

महाराजस्य पृथिवीकोंकणस्य दानपात्रे लिखितमस्ति यत्—

"श्रीमत्कोंकणमहाराजाधि[1]राजस्याविनीतनाम्नः पुत्रेण शब्दावतारकारेण देवभारतीनिबद्धबृहत्कथेन किरातार्जुनीयपञ्चदशसर्गटीकारेण दुर्विनीतनामधेयेन ........ .....।"

अर्थात् महाराजेन दुर्विनीतेन "शब्दावतार", "देवभारतीयबृहत्कथा", किरातार्जुनीयपञ्चदशसर्गटीका चेत्येतत् ग्रन्थत्रयम्प्रणीतम् ।

अनेन प्रतीयते यत् महाराजेन दुर्विनीतेन "शब्दावतार" इत्यभिधेयो ग्रन्थः प्रणीत आसीत् । अनेकेषां विदुषाम्मतमस्ति यत् 'शब्दावतार' ग्रन्थोऽयं पाणिनीयव्याकरणस्य टीका वर्तते ।

उपरि वर्णितम्मया यदाचार्यपूज्यपादेनाऽपि पाणिनीयव्याकरणोपरि 'शब्दावतार' नामक एको ग्रन्थः प्रणीतः । महाराजदुर्विनीतप्रणीतस्य ग्रन्थस्य नामाऽपि उपर्युक्ते दानपात्रे 'शब्दावतार' इति लिखितमस्ति ।

महाराजस्य दुर्विनीतस्य राज्यकालः सं० ५३९-५६९ वै० यावदासीत् अयं पूज्यपादस्य शिष्य आसीत्, पूज्यपादस्य समयश्च वैक्रमषष्ठशतकस्य पूर्वार्द्धमस्ति, अतो दुर्विनीतस्य कालः वैक्रमषष्ठशतकं स्वीकर्तुम् शक्यते ।

## (९) चुल्लिभट्टिः

चुल्लिभट्टिप्रणीताया अष्टाध्यायीवृत्तेरुल्लेखो जिनेन्द्रबुद्धिप्रणीते न्यासे, तस्य "तन्त्रप्रदीप" इत्यभिधेयायां टीकायाञ्चोपलभ्यते ।

---

१. श्री पं० कृष्णमाचार्यविरचित "हिस्ट्री आफ क्लासिकल संस्कृत लिटरेचर" पृ० १४० में उद्धृत ।

काशिकावृत्तेः प्रथमश्लोकस्य व्याख्याने न्यासकारेणोक्तम्—

"वृत्तिः पाणिनीयसूत्राणां[1] विवरणं चुल्लिभट्टिनिर्लूरादिविरचितम् ।"

तन्त्रप्रदीपटीकायां (८।३७) मैत्रेयरक्षितेनोक्तम्—

"सव्येष्ठा इति सारथिवचनोऽयम् । अत्र चुल्लिभट्टिवृत्तावपि तत्पुरुषे कृति बहुलमित्यलुग्[2] दृश्यते ।"

हरिनामामृतसूत्रवृत्तौ (१४७०) लिखितमस्ति यत्—

"हृदयङ्गमा वागिति चुल्लिभट्टिः ।"

काशिकाकारात् पूर्ववृत्तित्वमतिरिच्य चुल्लिभट्टेः कालविषये न किञ्चिज्ज्ञायते ।

## (१०) निलूँरः

न्यासस्याऽधोलिखिते पाठे निर्लूरप्रणीतवृत्तेरुल्लेख उपलभ्यते—

"वृत्तिः पाणिनीयसूत्राणां[3] विवरणं चुल्लिभट्टिनिलूँरादिविरचितम् ।"

काशिकाव्याख्यात्रा विद्यासागरमुनिनाऽप्यस्या वृत्तेरुल्लेखो विहितः[4] । श्रीपतिदत्तेन 'कातन्त्रपरिशिष्टे' निलूँरवृत्तेरधोलिखितः पाठः समुद्धृतः—

"निलूँरवृत्तौ चोक्तम्[5]-भाषायमपि यङ्लुगस्तीति ।"

पुरुषोत्तमदेवेन स्वकीये "ज्ञापकसमुच्चय" ग्रन्थे लिखितम्—

१. न्यास भाग १, पृ० ९ ।

२. न्यास की भूमिका, पृ० ८ ।

३. न्यास, भाग १, पृ० ९ ।

४. वृत्ताविति सूत्रार्थप्रधानो ग्रन्थो भट्टनलपूरप्रभृतिभिर्विरचितः……। 'मद्रास राजकीय हस्तलेख पुस्तकालय' की सूचीपत्र भाग ३ खण्ड १ A पृ० ३५०७, ग्रन्थाङ्क २४९३ । हस्तलेख के पाठ में 'नलपूर' निश्चय ही 'निलूँर' का भ्रष्ट पाठ है ।

५. न्यास की भूमिका, पृ० ९ । मुद्रित पाठ "यङो लुगस्तीति" । सन्धिप्रकरण सूत्र ३३ ।

"तेन बोभवीति इति[1] सिद्धयतीति नैर्लूरी वृत्तिः ।"

निर्लूराचार्यस्य कालवृत्तिविषये न किमपि सम्प्रति ज्ञायते । न्यासकारविद्यासागरमुनेर्वचनानुसारमियं वृत्तिः काशिकातः प्राचीना, अतः निर्लूराचार्यस्य काशिकाकारात् प्राक्तनत्वं स्पष्टमेव ।

## (११) चूर्णिः

न्याससम्पादकेन श्री श्रीशचन्द्र भट्टाचार्यमहोदयेन श्रीपतिदत्तप्रणीत 'कातन्त्र[2] परिशिष्ट' ग्रन्थस्य, श्रीजगदीशभट्टाचार्यकृत 'शब्दशक्ति[3]प्रकाशिका ग्रन्थस्य च प्रमाणान्याश्रित्य "चूर्णि" नामकस्य कस्यचिदाचार्यस्य पाणिनीयसूत्रवृत्तिः सम्भाविता । परन्त्वियं वृत्तिः सम्प्रति नोपलभ्यते । इत्सिगस्य भारतयात्राविवरणानुसारेण, भर्तृहरिप्रभृतीनामाचार्याणाञ्च मतानुसारेण चूर्णिकारः पतञ्जलिरेव । इत्सिङ्गवर्णने च चूर्ण्युपरि व्याख्यापरकस्य भर्तृहरिशास्त्रस्याऽप्युल्लेखोऽस्ति । श्रीशचन्द्रभट्टाचार्येण "चूर्णि" विषये अष्टाध्यायाः पतञ्जलिकृतायाः[4] साक्षाद्वृत्तेः सत्ता सम्भाविता, परन्त्वस्मिन् विषये सम्प्रति किमपि पुष्टं प्रमाणं नोपलभ्यते ।

## (१२-१३) काशिकावृत्तिकारः आचार्यो जयादित्यः, आचार्यो वामनश्च—

जयादित्यवामनविरचिता सम्मिलिता वृत्तिः काशिकानाम्ना प्रसिद्धास्ति । साम्प्रतं समुपलभ्यमानपाणिनीयव्याकरणग्रन्थेषु महाभाष्यवाक्यपदीयानन्तरमियं काशिकावृत्तिरेव सर्वप्राचीना महत्त्वपूर्णा चाऽस्ति । अत्र बहूनां सूत्राणां वृत्तय, उदाहरणानि च पूर्ववृत्तिभ्यः संगृहीतानि सन्ति । अतः पाणिनीयव्याकरणे काशिकायाः महन्महत्त्वं वरीवर्ति । काशयति प्रकाशयति सूत्रार्थमिति व्युत्पत्त्या निष्पन्नः

---

१. पुरुषोत्तमदेव—ज्ञापकसमुच्चय, राजशाही बंगाल मुद्रित, पृ० ८७ ॥
२. 'मतमेतच्चूर्णिरप्यनुह्लाति' (कातन्त्रपरिशिष्टणत्वप्रकरण) न्यासभूमिका, पृष्ठ ८।
३. संयोगावयवव्यञ्जनस्य सजातीयस्यैकस्य वाऽनेकस्योच्चारणाभेद इति चूर्णिः ।' शब्दशक्तिप्रकाशिका, न्यासभूमिका, पृष्ठ ९ । )
४. न्यास कीं भूमिका, पृ० ९ ।

काशिकाशब्दः। बालशास्त्रिसम्पादितायां काशिकायामाद्यानां चतुर्णामध्यायानामन्ते जयादित्यस्य, शेषाणाञ्च चतुर्णामध्यायानामन्ते वामनस्य च नामाङ्कितमस्ति। हरिदीक्षितेन प्रौढमनोरमायाः शब्दरत्नव्याख्यायां प्रथम-द्वितीय-पञ्चम-षष्ठा अध्याया जयादित्यकृताः, शेषाश्च वामनेन विरचिताः स्वीकृताः। प्राचीनैराचार्यैस्तु काशिकाया उद्धरणानामाधारेणाऽऽदितः पञ्चाऽध्यायाः जयादित्यविरचिताः, अन्तिमास्त्रयोऽध्याया वामनकृताः सन्तीति मन्यन्ते। वास्तुतः काशिकालेखनशैलीपर्यवेक्षणेनेदमेव निश्चीयते यदाद्याः पञ्चाध्याया जयादित्यकृता अन्त्याश्च त्रयो वामनकृताः सन्ति। जयादित्यापेक्षया वामनस्य लेखोऽतिप्रौढः परिष्कृतश्चाऽस्ति। चीनीयात्रिणा इत्सिङ्गेन स्वभारतयात्रावर्णने जयादित्यमात्रमेव काशिकायाः रचयिता लिखितोऽस्ति, न तेन वामनस्य निर्देशः कृतोऽस्ति। संस्कृते वाङ्मयेऽनेके ग्रन्थाः द्वाभ्यां लिखिताः, किन्तु तदुद्धरणकर्तार एकस्यैव नाम यदा कदाचिल्लिखन्ति।

अनेकेषां विदुषां मतमस्ति यन्माघकविरचितशिशुपालवधमहाकाव्यस्य—

अनुत्सूत्रपदन्यासा[1] सद्वृत्तिः सन्निबन्धना।
शब्दविद्येव नो भाति राजनीतिरपस्पशा॥"

इति श्लोके सद्वृत्तिपदेन काशिकायाः सङ्केतः, न्यासपदेन च जिनेन्द्रबुद्धिविरचितस्य न्यासस्य सङ्केतोऽस्ति। काशिकावृत्तिरचना काश्यामेवाऽभवत्। तथा चोक्तं हरदत्तेन पदमञ्जर्यां काशिकाव्याख्यायाम्—

"काशिका[2] देशतोऽभिधानं काशीषु भवा"

उणादिवृत्तौ[3] उज्ज्वलदत्तोऽप्यमुमर्थं समर्थयते। काशिकापूर्ववर्तिनीषु वृत्तिषु गणपाठो नाऽऽसीत्, परं काशिकायां यथास्थानं गणपाठः सन्निवेशितः। वामनजयादित्याभ्यां प्राचीनवृत्त्यनुसारिणैव काशिकायां सूत्राणां व्याख्या कृताऽस्ति, यथा सूत्रार्थज्ञाने पर्याप्तं साहाय्यमुपलभ्यते। काशिकाया उदाहरणप्रत्युदाहरणे

---

१. माघ–शिशुपालवधमहाकाव्यम्, २।११२।

२. हरदत्त-पदमञ्जरी, भाग १, पृ० ४।

३. उज्ज्वलदत्त–उणादिवृत्ति, पृ० १७३।

चः प्रायः प्राचीनवृत्त्यनुसारं स्तः, याभ्यां प्राचीनानामैतिहासिकतथ्यानां ज्ञानमुपजायते ।

पाणिनीयव्याकरणस्य व्याख्यायुगः प्रधानतया पञ्चमशतकात् चतुर्दशशतकपर्यन्तं व्याप्तोऽस्ति । इतः पूर्वं पाणिनेरष्टाध्याय्याः कात्यायनद्वारा वार्तिकानां, पतञ्जलिद्वारा महाभाष्यस्य च प्रणयनं जातमासीत्, तदनन्तरमेव व्याख्याग्रन्थनिर्माणं कृत्वा तदध्ययनाध्यापनप्रयासस्य सुलभीकरणमजायत ।

अष्टाध्याय्यपेक्षया पातञ्जलं महाभाष्यमतिगभीरं दुरूहतरञ्चानुभूय व्याख्यातारस्तद्व्याख्याकरणे प्रवृत्ताः । काशिकाकारेण स्वोपजीव्यग्रन्थान् निर्दिश्य तन्निर्माणकारणं प्रदर्शितम्—

"वृत्तौ भाष्ये तथा धातुनामपारायणादिषु ।
विप्रकीर्णस्य तन्त्रस्य क्रियते सारसंग्रहः ॥"

काशिकायामनेकेषां सूत्राणां वारद्वयं व्याख्यां विधाय द्विप्रकारिकां शब्दसिद्धिं प्रदर्श्य तत्राचार्यमेव प्रमाणं मनुते—"सूत्रार्थद्वयमेव चैतदाचार्येण शिष्याः प्रतिपादिताः । तदुभयमपि ग्राह्यम् ।" तथा चाऽयं निष्कर्षो यद् भगवता पाणिनिनैव स्वयं सूत्राणां प्रवचनं विधाय तत्तात्पर्यादिभिः शिष्याः समवबोधिताः । काशिकाया उदाहरण-प्रत्युदाहरणैः प्राचीनमैतिहासिकं महत्त्वं प्रस्फुटीभवति । वामनेन काशिकाया अन्ते तद्वैशिष्ट्यं सम्यक् प्रतिपादितम्, यस्य निर्देशो न्यासकारेणैवं कृतोऽस्ति—

"इष्ट्युपसंख्यानवती शुद्धगणा विवृतगूढसूत्रार्था ।
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं 'काशिका' नाम ॥"

काशिकाया गूढार्थं सुबोधं विधातुं द्वाभ्यां विद्वद्भ्यां तत्र पाण्डित्यपूर्णे द्वे व्याख्ये लिखिते स्तः । तत्र जिनेन्द्रबुद्धिना काशिकाविवरणपञ्जिका "न्यास" टीका लिखिता । हरदत्तस्य व्याख्या नाम "पदमञ्जरी" वर्तते । हरदत्तेन पदमञ्जर्यां प्रदीपस्य विशिष्टसामग्र्या उपयोगो विहितः ।

पण्डितबालशास्त्रिसम्पादितायां काशिकावृत्तौ प्रथमचतुर्णामध्यायानां पुष्पिकासु जयादित्यस्य नाम मुद्रितमस्ति, अन्येषाञ्च चतुर्णामध्यायानां पुष्पिकासु वामनस्य

नाममुद्रितमस्ति । श्रीहरिदीक्षितः "प्रौढमनोरमायाः" शब्दरत्नव्याख्यायां प्रथम-द्वितीयपञ्चमषष्ठाध्यायान् जयादित्यकृतान्, अवशिष्टांश्चाध्यायान् वामनकृतान् स्वीकरोति[1] प्राचीनैर्ग्रन्थकारैर्जयादित्यवामननाम्ना काशिकाया यान्युद्धरणानि दत्तानि तेन ज्ञायते यत् प्रथमे पञ्चाध्यायाः जयादित्यकृताः, अन्तिमाश्च त्रयोऽध्यायाः वामनकृताः ।

जयादित्यस्य नाम्ना काशिकाया उद्धरणान्यधोलिखितेषु ग्रन्थेषूपलभ्यन्ते—

अध्यायः १-भाषावृत्तिः, पृ० १८,२६।पदमञ्जरी भागः १, २५२, भाषावृत्त्यर्थविवृतेरारम्भे ।

अध्यायः २–भाषावृत्तिः पृ० ९ पदमञ्जरी भागः २, पृ० ६५२ ।

अध्यायः ३–पदमञ्जरी भागः २, पृष्ठम् ९९२ । अमरटीकासर्वस्वम् भागः ४, पृष्ठम् १०, परिभाषावृत्तिः, सीरदेवकृता, पृष्ठम् ८१ ।

अध्यायः ४–अमरटीकासर्वस्वम्, भागः १, पृष्ठम् १३८ । भाषावृत्तिः पृष्ठे २४३, २५४ ।

अध्यायः ५–भाषावृत्तिः, २९९, ३१०, ३२४, ३२८, ३३५, ३४२: ३५२, २६२, ३६९ पृष्ठानि । पदमञ्जरी भागः २, पृ० ३८६, ८९१ । अष्टाङ्गहृदयस्य सर्वाङ्गसुन्दरा टीका, पृष्ठम् ३ ।

वामनस्य नाम्ना काशिकाया उद्धरणान्यधोलिखितेषु ग्रन्थेषूपलभ्यन्ते—

अध्यायः ६–भाषाबृत्तिः, ४१८, ४२०, ४८२ पृष्ठानि । पदमञ्जरी भाः २, पृ० ४२, ६३२ ।

अध्यायः ७–सीरदेवकृता परिभाषावृत्तिः पृ० ८, २४ । पदमञ्जरी २ भागः, पृष्ठम् ६२४ ।

अध्यायः ८–भाषावृत्तिः पृ० ५४३,५५९ । पदमञ्जरी भागः १, पृ० ६२४ । काशिकायाः सूक्ष्मदृष्ट्या पर्यवेक्षणेनाऽप्ययमेव निष्कर्षो लभ्यते यत् प्रथमद्वितीय-तृतीयचतुर्थपञ्चमाध्यायाः जयादित्यप्रणीताः षष्ठसप्तमाष्टमाध्यायाश्च वामनप्रणीताः । जयादित्यापेक्षया वामनाचार्यस्य भाषाऽतिप्रौढाऽस्ति ।

---

१. प्रथमद्वितीयपञ्चमषष्ठाजयादित्यकृतवृत्तयः, इतरे वामनकृतवृत्तय इत्यभियुक्ताः । भागः १ ( प्रौढमनोरमा ), पृ० ५०४ ।

इत्सिङ्गस्य लेखानुसारं जयादित्यस्य मृत्युः सम्भवतः सं० ७१८ वैक्रमाब्दे जाता[1]। यदीत्सिङ्गलेखस्तस्य भारतयात्रायाः स्वीकृतः कालः समीचीनो भवेत्तर्हीयं जयादित्यस्य चरमा कालसीमा भविष्यति काशिकायां (१।३।२३) भारवेरेकः पद्यांश उद्धृतोऽस्ति।[2] महाराजेन दुर्विनीतेन किरातस्य पञ्चदशस्य टीका लिखिताऽऽसीत्[3]। दुर्विनीतस्य राज्यकालः सं० ५३९ वैक्रमाब्दात् सं० ५६९ वैक्रमाब्दं यावदस्ति। भारवेः कालः सं० ५३९ वैक्रमाब्दात् पूर्वमस्तीति सुनिश्चितम्। अतः सं० ६५७ वैक्रमाब्दो जयादित्यस्य कालः स्वीकर्तुं शक्यते।

संस्कृतवाङ्मये वामननामानोऽनेके विद्वांसः प्रसिद्धास्सन्ति। एको वामनः 'विश्रान्तविद्याधर' इत्यभिधेयजैनव्याकरणस्य प्रणेताऽस्ति[4], द्वितीयः अलङ्कारशास्त्रस्य' प्रणेता, तृतीयश्च लिङ्गानुशासनस्य' रचयिताऽस्ति। सर्वं एते विभिन्ना आचार्याः काशिकाकारो वामनाचार्यं एतेभ्यः सर्वथा भिन्न एवाऽऽचार्यः तत्रेदंकारणम्—

भावृत्तिकृता पुरुषोत्तमदेवेन काशिकायाः भागवृत्तेश्चाऽनेके पाठः सममेव समुद्धृताः तत्तुलनयेदं स्पष्टीभवति यद् भागवृत्तिकारः स्थाने स्थाने काशिकां प्रत्याख्याति तथाहि—

१. "साहाय्यमित्यपि[5] ब्राह्मणादित्वादिति जयादित्यः नेति भागवृत्तिः।"

२. "कथमद्यश्वीनी[6] वियोगः ? विजायत इत्यस्यानुवृत्तेरिति जयादित्यः।" स्त्रीलिङ्गनिर्देशादुपमानस्याप्यसम्भवान्नैतदिति भागवृत्तिः।"

३. "इह समानस्येति[7] योगविभागः, तेन सपक्षसधर्मसजातीयाः

---

१. इत्सिग की भारतयात्रा, पृ० २७०।

२. 'संशय्य कर्णादिषु तिष्ठते यः।' किरात ३।१४।

३. पं० कृष्णमाचार्यविरचित 'हिस्ट्री आफ क्लासिकल संस्कृत लिटरेचर' पृष्ठ १४० में उद्धृत महाराज पृथिवीकोंकण का दानपत्र।

४. वामनो विश्रान्तविद्याधरव्याकरणकर्त्ता। गणरत्नमहोदधि, पृष्ठ २।

५. पुरुषोत्तमदेव——भाषावृत्ति, पृष्ठ ३१०।

६. तदेव, पृष्ठ ३१४।

७. तदेव, पृ० ४२०।

सिद्धयन्तीति वामनवृत्तिः। अनार्षोऽयं योगविभागः, तथा ह्यव्ययाना-मनेकार्थत्वात् सदृशार्थस्य सहशब्दस्यैते प्रयोगाः कथं नाम समान-पक्ष इत्यादयोऽपि भवन्तीति भागवृत्तिः।"

४. "दृशिग्रहणादिह पूरुषो[१] नारक इत्यादावप्ययं दीर्घ इति वामन-वृत्तिः। अनेनोत्तरपदे विधानादप्राप्तिरिति पूरुषादयो दीर्घोपदेशा एव संज्ञाशब्दा इति भागवृत्तिः।"

अत्र प्रथमद्वितीययोरुद्धरणयोर्जयादित्यस्य, तृतीयचतुर्थयोरुद्धरणयोर्वामनस्य वृत्तेर्खण्डनमस्ति। भागवृत्तेः कालः ७०२ वैक्रमाब्दात्—७०५ वैक्रमाब्दं याव-दस्ति। तदनुसारं वामनस्य कालः ७०० वैक्रमाब्दात् पूर्वं स्वीकर्तव्यो भवेत्। "अलङ्कारशास्त्र" "लिङ्गानुशासन" इत्युभयोर्ग्रन्थयोः प्रणेतुर्वामनस्य कालो वैक्रमनवमशतकमस्ति[२]। "विश्रान्तविद्याधर" इति ग्रन्थस्य कर्ता वामनः सं० ३७५ वैक्रमाब्दात् ५७३ वैक्रमाब्दाद्वा प्राक्तनोऽस्ति। अतः काशिकाकारो वामनाचार्य एतेभ्यः सर्वेभ्यः सर्वथा भिन्न आचार्यः। तस्य कालः सप्तमवैक्रमशतकमिति निश्चीयते।

## (१४) भागवृत्तिकारः

अष्टाध्याय्याः वृत्तिषु काशिकानन्तरं 'भागवृत्तेः' स्थानमस्ति। वृत्तिरियं सम्प्रत्यनुपलब्धा। अस्या प्रायो द्विशतसंख्याकानि समुद्धरणानि पदमञ्जरी-भाषा-वृत्ति-दुर्घटवृत्ति-अमरटीकासर्वस्वप्रभृतिषु विभिन्नेषु ग्रन्थेषूपलभ्यन्ते। पुरुषोत्तमदेव-स्य भाषावृत्तेरन्तिमेव श्लोकेन ज्ञायते यदियं वृत्तिः काशिकावत् प्रामाणिकी मन्यते स्म।[३]

बड़ौदातः प्रकाशिते कवीन्द्राचार्यस्य सूचीपत्रे 'भागवृत्ते' र्नामोपलभ्यते। भट्टो-जिदीक्षितेन शब्दकौस्तुभे, वैयाकरणसिद्धान्तकौमुद्यां च भागवृत्तेरनेकान्युद्धरणानि

१. पुरुषोत्तमदेव-भाषावृत्ति, पृ० ४२७।

२. कन्हैयालाल पोद्दारकृत 'संस्कृत साहित्य का इतिहास' भाग १, पृ० १५३ तथा वामनीय लिङ्गानुशासन की भूमिका।

३. काशिकाभागवृत्त्योश्च तत् सिद्धान्तं बोद्धुमस्ति धीः। तदा विचिन्त्यतां भ्रातर्भाषावृत्तिरियं मम॥ ( पुरुषोत्तम-भाषावृत्ति, अन्तिम श्लोक। )

प्रदत्तानि[1]। अनेन प्रतीयते यद् सं० १६ वैक्रमाब्दं १७ वैक्रमाब्दं वा पर्यन्तं भागवृत्तेर्हस्तलेखाः सुप्राप्या आसन्।

'भाषावृत्ति' व्याख्यात्रा श्रीसृष्टिधराचार्येण चक्रवर्तिना लिखितम्—

"भागवृत्तिर्भर्तृहरिणा[2] श्रीधरसेननरेन्द्रादिष्टा विरचिता।"

अनेन प्रतीयते वलभीनरेशस्य श्रीधरसेनस्याऽऽज्ञया भर्तृहरिणा भागवृत्तेः रचना विहिताऽऽसीत्।

"कातन्त्रपरिशिष्ट"स्य प्रणेत्रा श्रीपतिदत्तेन सन्धिपत्रे (१४२) उक्तम्—

"तथा च भागवृत्तिकृता विमलमतिनाप्येवं निपातितः।"

अनेन प्रतीयते यद् भागवृत्तेः प्रणेतुर्नाम "विमलमति" रित्यासीत्।

श्रीपण्डितगुरुपदहालदारमहोदयेन सृष्टिधराचार्यवचनमप्रामाणिकत्वेनोररीकृतम्, किन्तु श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयमतानुसारं श्रीसृष्टिधराचार्यश्रीपतिदत्तयोरुभयोरपि मतं समीचीनमस्ति, न तत्रास्ति कश्चिद् विरोधः। यथा कविसमाजेऽनेकेषां कवीनां 'कालिदास' इत्यौपाधिकं नाम प्रसिद्धम्, तथैव वैयाकरणनिकायेऽप्यनेकेषामुत्कृष्टवैयाकरणानां 'भर्तृहरि' रित्यौपाधिकं नाम प्रसिद्धमासीत्। भागवृत्तिग्रन्थप्रणेतुर्मुख्यं नाम 'विमलमति' रस्ति, 'भर्तृहरि' श्च तस्यौपाधिकी संज्ञाऽस्ति। विमलमति बौद्धसम्प्रदायस्य सुप्रसिद्धो विद्वानासीत्।

**भागवृत्तिकारस्य कालः**—श्रीसृष्टिधराचार्यमहोदयेनोक्तम् यद् 'भागवृत्ति' रचना वलभीनरेशस्य महाराजस्य श्रीधरसेनस्याऽऽज्ञया सञ्जाताऽऽसीत्। वलभ्या राजकुले श्रीधरसेननामानश्चत्वारो राजानः समभूवन्, येषां राज्यकालः सं० ५५७ वैक्रमाब्दात् ७०५ वैक्रमाब्दं यावत् स्वीक्रियते। भागवृत्तावस्यां स्थाने-स्थाने काशिकावृत्तेः खण्डनमुपलभ्यते।[3] अनेन स्पष्टं यद्भागवृत्तेः रचना काशिकावृत्तेरनन्तरं जाता। काशिकायाः निर्माणकालः प्रायः सं० ६५० वैक्रमाब्दात् ७००

१. भट्टोजिदीक्षित-वैयाकरणसिद्धान्तकौमुदी, पृ० ३६६, काशी चौखम्बा; मूल संस्करणम्।

२. भाषावृत्त्यर्थविवृति, ८।१।६७।

३. भागवृत्ति-संकलन, ५।१।३२; ५।२।१३; ६।३।८४।

वैक्रमाब्दं यावदस्ति । चतुर्थश्रीधरसेनस्य राज्यकालः सं० ७०२ वैक्रमाब्दात् ७०५ वैक्रमाब्दं यावदस्ति । अतो भागवृत्तेर्निर्माणं चतुर्थश्रीधरसेनस्याऽऽज्ञया जातम् ।

न्याससम्पादकेन भागवृत्तेः कालः सन् ६२५ ई० ( सं० ६८२ वि० ) काशिकायाश्च कालः सन् ६५० ई० ( सं० ७०७ वि० ) यावत् स्वीकृतः[१] अर्थात् भागवृत्तिरचना काशिकातः पूर्वं स्वीकृता, तन्न समीचीनम् । एवमेव श्रीपण्डित-गुरुपदहालदारमहोदयेन स्वीकृतम् भागवृत्तिरचनाकालो नवमशतकमित्येतदपि मतं न समीचीनम् । अतो भागवृत्तिरचनाकालः सं० ७०२-७०५ वैक्रमाब्दमध्य इति स्पष्टं सिध्यति ।

## (१५) भर्त्रीश्वरः

भर्त्रीश्वर नाम्ना आचार्येण पाणिनीयाष्टाध्याय्याः काचिद् वृत्तिः प्रणीतेति वर्धमानसूरिप्रणीत "गणरत्नमहोदधि" ग्रन्थस्याऽधोलिखितादुद्धरणादवगम्यते—[२]

"भर्त्रीश्वरेणाऽपि वारणार्थानामित्यत्र पुँल्लिङ्ग एव प्रयुक्तः ।"

अर्थात्—भर्त्रीश्वरेण पाणिनीयाष्टाध्याय्याः "वारणार्थानामीप्सितः[३]" इति सूत्रस्य व्याख्याने "प्रेमन्" शब्दः पुँल्लिङ्गे प्रयुक्तः ।

**कालः**—भट्टकुमारिलप्रणीतस्य "मीमांसाश्लोकवार्तिक" ग्रन्थस्योपरि भट्ट उम्बेकमहोदयस्यैका टीका प्रकाशिता, यत्र तेनोक्तम्—

"तथा चाहुर्भर्त्रीश्वरादयः[४] किं हि नित्यं प्रमाणं दृष्टं, प्रत्यक्षादि वा यदनित्यं तस्य प्रामाण्ये कस्य विप्रतिपत्तिः, इति ।"

अनेनोद्धरणेन ज्ञायते यद् भर्त्रीश्वरभट्ट उम्बेकात् पूर्ववर्ती, बौद्धमतानुयायी चाऽस्ति । श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयेन[५] स्वग्रन्थे उम्बेकभवभूत्योरैक्यं

१. न्यास भूमिका, पृष्ठम् २६ ।
२. गणरत्नमहोदधि, पृ० २१९ ।
३. पाणिनि–अष्टाध्यायी, १।४।२७ ।
४. भट्ट कुमारिलकृतमीमांसाश्लोकवार्तिकस्य भट्टउम्बेकस्य व्याख्या, पृ० ३८ ।
५. पं० युधिष्ठिर मीमांसक–संस्कृत व्याकरण शास्त्र का इतिहास, भाग १, पृ० ४७४-४७५ सं० २०३० वै० ।

प्रमाणैस्साधितम्। महाकविर्भवभूतिर्महाराजस्य यशोवर्मणोऽन्तेवास्यासीत्। अत एव भवभूतेः कालः प्रायः सं० ७८० वैक्रमाब्दात् ८०० वैक्रमाब्दं यावत् स्वीक्रियते। अतो भवभूतिद्वारा स्मृतस्य भर्त्रीश्वरस्य कालः सं० ७८० वैक्रमाब्दात् पूर्वं स्वीकर्तुं शक्यते।

## (१६) भट्टजयन्तः

पाणिनीयाष्टाध्याय्याः वृत्तिकारेषु न्यायमञ्जरीकारस्य जरन्नैयायिकस्य भट्टजयन्तस्याऽपि नाम स्मर्यते। पाणिनीयाष्टाध्याय्युपरि स्वप्रणीताया वृत्तेरुल्लेखो जयन्तेन स्वयमेव स्वकीयस्य "अभिनवागमाऽम्बर" इत्यभिधेयरूपकस्याऽऽरम्भे विहितः। तद्यथा—

अत्रभवतः शैशव एक व्याकरणविवरणकरणाद् वृत्तिकार इति प्रथितापरनाम्नो भट्टजयन्तस्य कृतिरभिनवागमाडम्बरनाम किमपि रूपकम्।[१]"

भट्टजयन्तेन न्यायमञ्जर्या अन्ते स्वकीयो यः परिचयः प्रदत्तस्तेन ज्ञायते यद् जयन्तस्य पितुर्नाम "चन्द्र" आसीत् शास्त्रार्थेष्ववाप्तजयकारणेन तस्य "जयन्त" इति नाम प्रसिद्धम्। तस्य नववृत्तिकार' इत्यपरमपि नामाऽऽसीत्[२]। जयन्तपुत्रेण "अभिनन्देन" कादम्बरीकथासारस्यारम्भे स्वकुलस्येषत् परिचयः प्रदत्तः। तदनुसारम्—

"गौडवंशीयभारद्वाजकुले "शक्ति" नामा विद्वान् बभूव। तस्य पुत्रो "मित्र" नामा, तत्पुत्रश्च 'शक्तिस्वामी' समजायत। शक्तिस्वामी कर्कोटवंशीयमहाराजस्य मुक्तापीडस्य मन्त्री आसीत्। शक्तिस्वामिनः पुत्रः "कल्याणस्वामी" तत्पुत्रश्च "चन्द्र" नामाऽजायत। चन्द्रपुत्रो जयन्तो बभूव, तस्याऽपरं नाम "नववृत्तिकार"

---

१. 'भट्टः चतुःशाखाभिज्ञः' जगद्धर मालतीमाधव की टीका के प्रारम्भ में।

२. वादेष्वाप्तजयो जयन्त इति यः ख्यातः सतामग्रणी–रन्वर्थो नववृत्तिकार इति यं शंसन्ति नाम्ना बुधाः सुनुर्व्याप्तदिगन्तरस्य यशसा चन्द्रस्य चन्द्रत्विषा, चक्रे चन्द्रकलावचूलचरणाध्यायी स धन्यां कृतिम्॥ (न्यायमञ्जरी, पृ० ६५९)

इत्यासीत् । स वेदवेदाङ्गवित् सर्वशास्त्रार्थविजेता चाऽऽसीत् । तत्पुत्रः साहित्य-तत्वज्ञः 'अभिनन्दो' बभूव[१] ।'

भट्टजयन्तो नैयायिकेषु 'जरन्नैयायिक नाम्ना प्रसिद्धः[२] । अयं व्याकरण-साहित्य-न्याय-मीमांसा शास्त्राणां[३] महापण्डित आसीत् । अस्य पितामहेन कल्याण स्वामिना ग्रामकामनया सांग्रहणीष्टिर्विहिता । तदनन्तरं तेन 'गौरमूलक' इत्यभिधेयो ग्रामोऽवाप्तः[४] ।

---

१. शक्तिर्नामाभवद् गौडो भरद्वाजकुले द्विजः ।
दीर्वाभिसारमासाद्य कृतदारपरिग्रहः ॥
तस्य मित्राभिधानोऽभूदात्मजस्तेजसां निधिः ।
जनेन दोषोपरमप्रयुद्धेनाचितोदयः ॥
सशक्तिस्वामिनं पुत्रमवाप श्रुतिशालिनम् ।
राज्ञः कर्कोटवंशस्य मुक्तापीडस्य मन्त्रिणम् ॥
कल्याणस्वामिनामास्य याज्ञवल्क्य इवाऽभवत् ।
तनयः शुद्धयोगर्द्धिनिर्धूतभवकल्मषः ॥
अगाधहृदयात् तस्मात् परमेश्वरमण्डनम् ।
अजायत सुतः कान्तश्चन्द्रो दुग्धोदधेरिव ॥
पुत्रं कृतजनानन्दं स जयन्तमजीजनत् ।
व्यक्ता कवित्ववक्तृत्वफला यत्र सरस्वती ॥
वृत्तिकार इति व्यक्तं द्वितीयं नाम बिभ्रतः ।
वेदवेदाङ्गविदुषः सर्वशास्त्रार्थवादिनः ॥
जयन्त नाम्नः सुधियः साधुसाहित्यतत्त्ववित् ।
सूनुः समभवत्तस्मादभिनन्द इति श्रुतः ॥

२. न्यायचिन्तामणि, उपमानखण्ड, पृ० ६१, कलकत्ता सोसाइटी सं० ।

३. वेदप्रामाप्यसिद्ध्यर्थमित्थमेताः कथाः कृताः ।
न तु मीमांसकख्याति प्राप्तोऽस्मीत्यभिमानतः ॥ ( न्यायमञ्जरी, पृ० २९० )

४. तथा ह्यस्मत्पितामह एव ग्रामकामः सांग्रहणीं कृतवान्, स इष्टिसमाप्ति-समनन्तरमेव गौरमूलकं ग्राममवाप । ( न्यायमञ्जरी, पृ० २७४ । )

**कालः**—भट्टजयन्तस्य प्रपितामहः शक्तिस्वामी काश्मीरस्य महाराजस्य मुक्तापीडस्य मन्त्री आसीत्। मुक्तापीडस्य कालोऽष्टमवैक्रमशतकस्योत्तरार्द्धमस्ति। अतो भट्टजयन्तस्य कालो नवमवैक्रमशतकस्य पूर्वार्द्धमेव ( सं० ८२५ वै०) स्वीकर्तव्यः।

भट्टजयन्तेन प्रणीताः न्यायमञ्जरी, न्यायकलिका, पल्लवप्रभृतयस्त्रयोऽन्येऽपि ग्रन्थास्सन्ति।

## (१७) श्रुतपालः

श्रुतपालेन पाणिनीयाष्टाध्याय्युपरि काचिद् वृत्तिः प्रणीतेति भाषावृत्ति[1]-ललितपरिभाषा[2]-कातन्त्रवृत्तिटीकाप्रभृतिषु[3] ग्रन्थेषु जैनशाकटायनस्य अमोघावृत्तौ[4] च प्रदर्शितानां श्रुतपालस्य व्याकरण-विषयकमतानामलोकनेन ज्ञायते।

**कालः**—श्रुतपालस्य व्याकरणविषयकाणि मतानि येषु ग्रन्थेषूपलभ्यन्ते तेषु जैनशाकटायनस्याऽमोघावृत्तिः' प्राचीनतमो ग्रन्थो वरीवर्ति। अमोघावृत्तिकृतः पाल्यकीर्तेः कालः प्रायः ९२४ वैक्रमाब्देऽस्ति। अतः श्री पं० युधिष्ठिरमीमांसक-महोदयमतानुसारं श्रुतपालस्य कालः सं० ८७० वैक्रमाब्दात् पूर्वं स्वीकर्तुं शक्यते।

## (१८) केशवः

'केशवः नाम्ना केनचिद् वैयाकरणेन पाणिनीयाष्टाध्याय्युपर्येका वृत्तिः प्रणीतेति व्याकरणग्रन्थेषूपलब्धेभ्योऽनेकेभ्य उद्धरणेभ्योऽवगम्यते। पुरुषोत्तमदेवेन भाषावृत्तावुक्तम्—

"पृषोदरादित्वादिकारलोपे एकदेशविकारद्वारेण पर्वच्छब्दादपि बलर्जिति केशवः।"[5]

---

१. अत्र संस्करोतेः कैयटश्रुतपालयोर्मतभेदात्। (पुरुषोत्तमदेव-भाषावृत्ति, ८।३।५)।

२. 'कार्मस्ताच्छील्ये' अष्टा० ५।४।१७२ ) इत्यत्र श्रुतपालेन ज्ञापितो ह्ययमर्थः। ( ललितपरिभाषा—'वीरेन्द्र रिसर्च सोसाइटी' हस्तलेख नं० ६३०, पत्रा ३२ क।)

३. कातन्त्रवृत्तिटीका, कृत्प्रकरणम्, ६८।

४. पाल्यकीर्ति-अमोघावृत्ति, ३।१।१८२,१८३।

५. पुरुषोत्तमदेव—भाषावृत्ति, ५।२।११२।

"केशववृत्तौ तु विकल्प उक्तः—हे प्रान्, हे प्राण् वा[1]।"

भाषावृत्तिव्याख्यात्रा श्रीसृष्टिधराचार्येण केशववृत्तेरेकश्श्लोकः समुद्धृतः। तथा हि—

"अपास्पाः पदमध्येऽपि[2] न चैकस्मिन् पुना रविः।
तस्माद्रोरीति सूत्रेऽस्मिन् पदस्येति न बध्यते॥"

"श्रीपण्डितगुरुपदहालदारमहोदयेन स्वकीये "व्याकरण दर्शनेर इतिहास" इत्यभिधेये ग्रन्थे उक्तम्—

"अष्टाध्यायीर[3] केशववृत्तिकार केशव पण्डित इहार प्रवक्ता। भाषावृत्तिते (५।२।११२) पुरुषोत्तमदेव, तन्त्रप्रदीपे (१।२।६;१।४।५५) मैत्रेयरक्षित, एवम् हरिनामामृतव्याकरणे (५०० पृष्ठ) श्रीजीवगोस्वामी केशवपण्डितेर नामस्मरण करियाछेन।"

एतैरुद्धरणैर्निश्चीयते यदवश्यमेव केशवेन पाणिनीयाष्टाध्यायिवृत्तेः प्रणयनं विहितमासीत्।

केशववृत्तेर्विषये येषामुद्धरणानि विविधेषु ग्रन्थेषूपलभ्यन्ते, तेषां सर्वेषामपि वंगदेशीयत्वात् केशवस्याऽपि वंगदेशीयत्वं सम्भाव्यते।

**केशवस्य कालः**—सत्सु 'केशव' नामाभिधेष्वनेकेषु ग्रन्थकारेषु कः केशवः पाणिनीयाष्टाध्यायिवृत्तेः प्रणेतेति सम्प्रत्यज्ञातमेव। श्रीपण्डितगुरुपदहालदारमहोदयस्य लेखेन ज्ञायते यत् "केशव" नामाभिधोऽयं वैयाकरणो मैत्रेयरक्षितात् प्राचीनः, स एव च पाणिनीयाष्टाध्यायिवृत्तेः प्रणेता। मैत्रेयरक्षितस्य कालः प्रायः सं० ११६५ वैक्रमाब्दोऽस्ति। अतः श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयमतानुसारे केशवः सं० ११६५ वैक्रमाब्दात् पूर्ववर्तीति वक्तुं शक्यते।

---

१. पुरुषोत्तमदेव-भाषावृत्ति, ८।४।२०॥

२. भाषावृत्तौ ५४४ पृष्ठस्य टिप्पणी।

३. द्र०, पं गुरुपद हालदार-व्याकरण दर्शनेर इतिहास, पृ० ४५३।

## (१९) मैत्रेयरक्षितः—

मैत्रेयरक्षितेन पाणिनीयाष्टाध्याय्या एका 'दुर्घटवृत्तिः' प्रणीता, या सम्प्रत्यनुपलब्धा। श्री उज्ज्वलदत्तमहोदयेन स्वकीयायामुणादिवृत्तौ मैत्रेयरक्षितप्रणीतायाः 'दुर्घटवृत्तेः' रधोलिखितौ पाठौ समुद्धृतौ—

"श्रीयमित्यपि भवतीति दुर्घटे रक्षितः[1]।"

"कृदिकारादिति ङीषि लक्ष्मीत्यपि भवतीति दुर्घटे रक्षितः[2]।"

शरणदेवेनाऽप्येका 'दुर्घटवृत्तिः' प्रणीता। सर्वरक्षितेन तस्याः संक्षेपः परिष्कारश्च विहितः। न च 'रक्षित' पदेन 'सर्वरक्षितस्य' ग्रहणमिति वाच्यम्, सर्वरक्षितपरिष्कृतायां दुर्घटवृत्तावुपर्युक्तपाठानुपलब्धेः। अत उज्जवदत्तेन 'रक्षितनाम्ना' समुद्धृतान्युद्धरणानि मैत्रेयरक्षितप्रणीतग्रन्थानामेवेत्यवगन्तव्यम्। अत एवोज्ज्वलदत्तोद्धृतानि दुर्घटवृत्तेरुद्धरणान्यपि मैत्रेयरक्षितप्रणीत दुर्घटवृत्तित एव समुद्घृतानि। मैत्रेयरक्षितस्य कालः सं० ११६५ वैक्रमाब्द इति श्री पं० युधिष्ठिरमीमांसकमहोदयैरनुमीयते।

## (२०) पुरुषोत्तमदेवः—

पुरुषोत्तमदेवेन पाणिनीयाऽष्टाध्याय्या उपर्येका लघुवृत्तिः प्रणीता। अष्टाऽष्टाध्याय्याः केवलं लौकिकसूत्राणां व्याख्याऽस्तीति कृत्वाऽस्या अपरं नाम 'भाषावृत्ति' रित्यस्ति। ग्रन्थेऽस्मिन्ननेकेषामेतादृशानां प्राचीनग्रन्थानामुद्धरणानि समुपलभ्यन्ते, ये सम्प्रत्यप्राप्याः।

पुरुषोत्तमदेवेन महाभाष्यस्य 'प्राणपणा' नाम्नी लघुवृत्तिः प्रणीता। वृत्तेरस्याष्टीकाकारेण मणिकण्ठेनाऽस्य नाम 'प्राणपणित' इति स्वीकृतम्[3]।

पुरुषोत्तमदेवो वङ्गप्रदेशीयवैयाकरणेषु प्रामाणिकः स्वीक्रियते। अनेके आचार्याः पुरुषोत्तमदेवस्य मतं प्रमाणकोटावुपस्थापयन्ति।

---

१. उज्ज्वलदत्त-उणादिवृत्ति, पृ० ८०।

२. तदेव, पृ० १४२।

३. श्रीदेवव्याख्यातप्राणपणितभाष्यग्रन्थस्य....। (इ० हि० क्वार्टर्ली, पृ० ३०३)।

पुरुषोत्तमदेवेन कस्मिंश्चिदपि ग्रन्थे स्वपरिचयो न प्रदत्तः। अतस्तस्येतिवृत्तमज्ञातमेव। पुरुषोत्तमदेवेनाऽष्टाध्याय्या उपरि स्वप्रणीतायां भाषावृत्तौ प्रत्याहारान् परिगणयतोक्तम्—'अश् हश् वश् झश् जश् पुनर्बश्[1]' इति। वाक्येऽस्मिन् 'पुनः' पदस्य प्रयोगेणाऽनुमीयते यत् पुरुषोत्तमदेवो वङ्गप्रदेशनिवासी आसीत्; यतो हि वङ्गप्रदेशे बकारवकारयोरुच्चारणं समानम्, अर्थात्–पवर्गीयबकारो भवति। अत एव पुरुषोत्तमदेवेनोच्चारणजन्यदोषपरिहारार्थं 'पुनः' शब्दस्य प्रयोगो विहितः।

**कालः**—भाषावृत्तेर्व्याख्यात्रा सृष्टिधराचार्येण लिखितम् यद् राज्ञो लक्ष्मणसेनस्याऽऽज्ञया पुरुषोत्तमदेवेन भाषावृत्तिः प्रणीता।[2] राज्ञो लक्ष्मणसेनस्य राज्यकालोऽद्यावधि सन्दिग्ध एव। अनेके विद्वांसो लक्ष्मणसेनस्य राज्यकालारम्भं प्रायः ११७४ वैक्रमाब्दे स्वीकुर्वन्ति। अतः पुरुषोत्तमदेवस्य कालो वैक्रमद्वादशशतकमिति निश्चेतुं शक्यते[3]।

**कृतयः**—भाषावृत्ति-महाभाष्यलघुवृत्तिरित्येतद्ग्रन्थद्वयातिरिक्तम्, पुरुषोत्तमदेवेनाऽधोलिखिताः ग्रन्थाः प्रणीताः—

कुण्डलीव्याख्यानम्, कारककारिका, दुर्घटवृत्तिः, परिभाषावृत्तिः, ज्ञापकसमुच्चयः, उणादिवृत्तिः, कारकचक्रम्, त्रिकाण्डशेषः (अमरकोशपरिशिष्टम्), हारावलीकोशः, वर्णदेशना चेति।

## (२१) शरणदेवः–

शरणदेवेन पाणिनीयाष्टाध्याय्या उपरि 'दुर्घट' नाम्नी वृत्तिः प्रणीता। वृत्तिरियं पाणिनीयाष्टाध्याय्याः विशिष्टानामेव सूत्राणामस्ति। संस्कृतभाषाया

---

१. वैदिकप्रयोगार्नार्थिनो लक्ष्मणसेनस्य राज्ञ आज्ञया प्रकृते कर्मणि प्रसजनम्। (भाषावृत्त्यर्थविवृतिप्रारम्भे)

२. पुरुषोत्तमदेव-भाषावृत्ति, पृ० १।

३. द्र०–पं० युधिष्ठिर मीमांसक-संस्कृत व्याकरण शास्त्र का इतिहास, प्रथम भाग पृ० ४०१, सं० २०३०॥

यानि पदानि व्याकरणेन सामान्यतया न साध्यन्ते, तेषामेव पदानां साधुत्वज्ञापनायाऽयं ग्रन्थः प्रणीतः। अत एवं ग्रन्थकारेण शरणदेवेनाऽस्य ग्रन्थस्य 'दुर्घटवृत्ति' रितिनाम निर्धारितम्।

ग्रन्थकारेण मङ्गलश्लोके सर्वज्ञं 'बुद्ध' इत्यपरनामानं देवं प्रणम्य[1] बौद्धग्रन्थानामनेकेषां प्रयोगाणां साधुत्वम्प्रदर्शितम्। अनेन ज्ञायते यत् शरणदेवो बौद्धमतावलम्बी आसीत्।

**कालः**—शरणदेवेन स्वग्रन्थारम्भे 'दुर्घटवृत्तेः' रचनाकालः १०९५ शकाब्दः सूचितः[2] अर्थात् सं० १२३० वैक्रमाब्दे ग्रन्थोऽयं लिखितः। अतः शरणदेवस्य कालः सं० १२३० वैक्रमाब्दः स्वीकर्तुं शक्यते।

दुर्घटवृत्तेरारम्भे लिखितमस्ति यत् शरणदेवानुरोधात् श्रीसर्वरक्षितेन ग्रन्थोऽयं संक्षिप्य प्रतिसंस्कृतः[3]।

संस्कृतवाङ्मयस्य प्राचीनेषु ग्रन्थेषु प्रयुक्तानां शतशः दुःसाध्यानां प्रयोगाणां साधुत्वनिदर्शनाय दुर्घटवृत्तेः प्रणयनं जातम्। प्राचीनकाले एतादृशा अनेके ग्रन्था आसन्। तेषु सम्प्रति केवलं शरणदेवप्रणीता दुर्घटवृत्तिरुपलभ्यते। यद्यपि शब्दकौस्तुभादिष्वर्वाचीनेषु ग्रन्थेषु कुत्रचिद् दुर्घटवृत्तेः प्रत्याख्यानमुपलभ्यते, तथापि कृच्छ्रसाध्यप्रयोगाणां साधुत्वप्रदर्शनाय ग्रन्थेऽस्मिन् यादृशी शैली समाश्रिता, प्रायोऽनेकेऽर्वाचीना ग्रन्थकारा अपि प्रायः तामेवानुसरन्ति।

ग्रन्थस्याऽस्याऽस्त्यन्यदपि वैशिष्ट्यम्। ग्रन्थेऽस्मिन्ननेकेषां प्राचीनग्रन्थानां ग्रन्थकाराणाञ्च वचनानि समुद्धृतानि। तत्राऽनेके ग्रन्थाः, ग्रन्थकाराश्चैतादृशाः, येषामुल्लेखोऽन्यत्र नोपलभ्यते। ग्रन्थकारेण ग्रन्थनिर्माणकालं विलिख्य महानुपकारो विहितः।

---

१. नत्वा शरणदेवेन सर्वज्ञं ज्ञानहेतवे। बृहद्भट्टजनाम्भोजकोशवीकासभास्वते॥

२. शाकमहीपतिवत्सरमाने एकनभोनवपञ्चविमाने। दुर्घटवृत्तिरकारि मुदेव कण्ठविभूषणहाररलतेव॥

३. वाक्याच्छरणदेवस्य च्छायावग्रहपीडया। श्री सर्वरक्षितेनैषा संक्षिप्य प्रतिसंस्कृता॥

## (२२) अप्पननैनार्यः

श्रीमता अप्पननैनार्यमहोदयेन पाणिनीयाष्टाध्याय्युपरि "प्रक्रिया दीपिका" नाम्नी वृत्तिः प्रणीता। ग्रन्थकारस्याऽपरं नाम वैष्णवदास आसीत्। प्रक्रिया दीपिकाया एको हस्तलेखो "मद्रासराजकीयहस्तलेखपुस्तकालये" वर्तते।[1] हस्तलेखस्याऽस्याऽऽदावधोलिखितः पाठ उपलभ्यते—

"अप्पननैनार्येण वेङ्कटाचार्यसूनुना।
प्रक्रियादीपिका सेयं कृता वात्स्येन धीमता॥"

हस्तलेखस्याऽन्ते लिखितमस्ति यत्—

"श्रीमद्वात्स्यान्वयपयः पारावारसुधाकरेण वादिमत्तेभकण्ठरिपुकण्ठलुण्टाकेन श्रीमद्वेङ्कटार्यपादकमलचञ्चरीकेण श्रीमत्परवादिमतभयङ्करमुक्ताफलेन अप्पननैनार्याभिधश्रीवैष्णवदासेन कृतः प्रकियादीपिका समाप्ता।"

लेखेनाऽनेन स्पष्टं यद् अप्पननैनार्योऽयं वात्स्यगोत्रीयः, पितुश्चाऽस्य नाम 'वेङ्कटार्य' इत्यासीत्।

**कालः**—श्रीरामलिङ्गमहोदयेन स्वकीयस्य "पाण्डुरङ्गविजयमु" इत्यभिधेयमहाकाव्यस्याऽऽदौ लिखितम् यद्[2] आन्ध्रप्रदेशे एकाक्येव वैयाकरणत्वेन ख्यातोऽयं नैनार्यः नैनार्य-नयनार्य अप्पन-अप्पण-अप्पल-अप्पल नाम्ना प्रसिद्धः। सोऽयं विजयनगर महाराजस्य श्रीकृष्णदेवरायसार्वभौमस्य ( राज्यकालः सं० १५६६–१५८६ वै० ) अष्टसु दिग्गजपण्डितेष्वन्यतमस्य श्रीतेनालिरामलिङ्गमहाकवेर्व्याकरणगुरुरस्ति।" "अपशब्दभयंनास्ति अप्पलाचार्यसन्निधौ" इत्यभियुक्तोक्त्या अप्पलाचार्यस्य वैयाकरणत्वं सुस्पष्टमेव। अत एव श्रीअप्पननैनार्यमहोदयस्य कालः सं० १५२० वंक्रमाब्दात् १५७० वैक्रमाब्दं यावत् स्वीकर्तव्य इति श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयानाम्मतम्।

---

१. द्र० मद्रास राजकीय हस्तलेख पुस्तकालय सूचीपत्र भाग ३, खण्ड १ ए, पृ० ३६०१, ग्रन्थाङ्क २५४१।

२. द्र०—पं० युधिष्ठिरमीमांसक-संस्कृत व्याकरणशास्त्र का इतिहास, प्रथम भाग, पृ० ४८५, सं० २०३०।

## (२३) आचार्य अन्नम्भट्टः

महामहोपाध्यायेनाऽऽचार्येणाऽन्नम्भट्टमहोदयेन पाणिनीयाष्टाध्याय्युपर्येका सामान्या "पाणिनीयमिताक्षरा" नाम्नी वृत्तिः प्रणीता, या काशीतः प्रकाशिता। एतेनैव महाभागेन पातञ्जलमहाभाष्यप्रदीपस्य "प्रदीपोद्योतन" नाम्नी व्याख्या च प्रणीता। 'महाभाष्यप्रदीपोद्योतनस्य' हस्तलेखाः मद्रासअडियारग्रन्थालयेषूपलभ्यन्ते। अस्य प्रथमाध्यायद्वितीयपादो भागद्वये मुद्रितः।

अन्नम्भट्टस्य पितुर्नाम श्रीअद्वैतविद्याचार्यतिरुमल आसीत्। तैलङ्गदेशवासी अन्नम्भट्टपिता श्रीतिरुमलो राघवसोमयाजिकुले जन्म लेभे। अन्नम्भट्टेन काशीमागत्य विद्याध्ययनं विहितमिति 'काशीगमनमात्रेण नान्नम्भट्टायते द्विज' इति लोकोक्त्या सूच्यते। अन्नम्भट्टस्य "प्रदीपोद्योतनस्यै" कैकस्याह्निकस्यान्तेऽधोलिखितः पाठोऽस्ति—

'इति श्रीमहामहोपाध्यायद्वैतविद्याचार्य राघवसोमयाजिकुलावतंस-श्रीतिरुमलाचार्यस्य सूनोरन्नम्भट्टस्य कृतौ महाभाष्यप्रदीपोद्योतने।'

श्रीकृष्णमाचार्यमहोदयेन स्वकीये 'हिस्ट्री आफ क्लासिकल लिटरेचर' इत्य-भिधेये ग्रन्थे ( पृ० ६५४ ) अन्नम्भट्टः शेषवीरेश्वर शिष्यत्वेनोक्तः। अत एवा-ऽऽचार्यस्याऽन्नम्भट्टस्यकालः षोडशवैक्रमाब्दशतके सप्तदशवैक्रमाब्दशतके वा स्वीकर्तुं शक्यते।

महाभाष्यप्रदीपोद्योतन—पाणिनीयमिताक्षरावृत्तिरित्येतद् ग्रन्थद्वयातिरिक्तम् महामहोपाध्यायेनाऽन्नम्भट्टमहोदयेन—तर्कसंग्रह-दीपिका ( तर्कसंग्रहटीका )-राणकोन्जीवनी (मीमांसान्यायसुधाटीका )-ब्रह्मसूत्रव्याख्या—जयकृतमण्यालोक-ग्रन्थस्य सिद्धाञ्जनटीका चेत्येते ग्रन्थाः प्रणीताः।

## (२४) आचार्यो भट्टोजिदीक्षितः

वैयाकरणमूर्द्धन्येन व्याकरणशास्त्रस्य धुरन्धराचार्येण आचार्यभट्टोजिदीक्षित-महोदयेन पाणिनीयाष्टाध्याय्याः 'शब्दकौस्तुभ' नाम्नी वृत्तिः प्रणीता।

श्रीभट्टोजिदीक्षितो महाराष्ट्रियब्राह्मण आसीत्। अस्य पितुर्नाम श्रीलक्ष्मी-धरदीक्षितः, लघुभ्रातुर्नाम श्रीरङ्गोजिभट्ट आसीत्। अस्य वंशवृक्षः अधोलिखितो-ऽस्ति—




प्रौढमनोरमाखण्डनकृत्पण्डितराजजगन्नाथमतानुसारं भट्टोजिदीक्षितस्य व्याकरणशास्त्रे गुरुर्नृसिंहपुत्रः शेषकृष्ण आसीत्। स च शेषकृष्णः प्रक्रियाप्रकाशकारो भट्टोजिदीक्षितेन शब्दकौस्तुभे 'गुरु' शब्देन व्यवहृतः।

भट्टोजिदीक्षितस्य कालविषये विद्वत्सु वैमत्यमवलोक्यते। भट्टोजिदीक्षितस्य कालः सन् १६००-१६५० अर्थात् १६५७-१७०७ वैक्रमाब्दपर्यन्तमिति डॉ० वेल्वाल्करमहोदयानाम्मतं वर्तते। अन्येषामैतिहासिकानाम्मतानुसारेणाऽस्य कालः १६३७ वैक्रमाब्दोऽस्ति। शेषकृष्णप्रणीतप्रक्रियाकौमुदीव्याख्यायाः १५१४ वैक्रमाब्दस्यैको हस्तलेखः पूनानगरस्य भण्डारकर-ओरियण्टल-रिसर्च-इन्स्टीट्यूट संस्थायाः संग्रहालये उपलभ्यते। लन्दननगरस्य इण्डिया ऑफिसग्रन्थालये विट्ठलप्रणीतप्रक्रियाप्रसादटीकाया एको हस्तलेख उपलभ्यते, यस्य लेखनकालः १५३६ वैक्रमाब्दोऽस्ति। विट्ठलेन शेषकृष्ण पुत्राद् वीरेश्वराद् ( रामेश्वराद् ) व्याकरण शास्त्रमधीतम्। अनेन, तस्मिन् काले शेषकृष्णः स्वर्गत आसीत्, तस्य स्वर्गवासकालश्च १५२५ वैक्रमाब्द आसीदित्यनुमीयते। अत एवाऽस्य गुरोः शेषकृष्णस्य स्वर्गवासकाल ( १५२५ वि० सं० ) मनुसृत्य भट्टोजिदीक्षितस्य कालः षोडशवैक्रमशतकस्य प्रथमदशतौ मन्तव्य इति पं० युधिष्ठिरमीमांसकानाम्मतम्।

भट्टोजिदीक्षितः शब्दकौस्तुभव्याख्याद्युक्तरीत्या चतुःशास्त्रज्ञः, स्वरवैदिकप्रक्रिययोः शाकलशाखास्थोदाहरणात् शाकलऋक्शाखाध्यायी, लोकव्यवहारानुसारेण काशिकाकृतः शिष्य इत्यपि ज्ञायते। अयं शाङ्करमतानुयायी। अत एव मध्वमतखण्डनायाऽद्वैततत्त्वकौस्तुभारण्यो ग्रन्थोऽनेन प्रणीतः। शब्दकौस्तुभे च—

"श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम्'

'इत्यनेन प्रतीयते यद् भट्टोजीत्यादेर्जीशब्दघटितत्वादसंस्कृते रामजी कृष्णजीत्यादिवद् जीत्यन्तस्य बहुवचनान्तनामकत्वेन नर्मदोत्तरदेशीयोऽयं भट्टोजिदीक्षितः काश्यामुवासेत्यपि निश्चीयते ।

**कृतयः**

भट्टोजिदीक्षितस्य सर्वोत्तमा कृतिः "शब्दकौस्तुभ" नाम्नी महती वृत्तिरष्टाध्यायी सूत्रानुसारस्य महाभाष्यकारस्य वैयाकरणशिरोमणेः पतञ्जलेर्व्याख्यानमाश्रित्य वर्तते । सम्पूर्णा वृत्तिस्तु सम्प्रति नोपलभ्यते; किन्तु यावानंश उपलब्धस्तं दृष्ट्वैतस्य व्याकरणदर्शने कियती सूक्ष्मा दृष्टिरासीदिति प्रतीयते । द्वितीया खलु कृतिः "सिद्धान्तकौमुदी" ति । अस्मिन् ग्रन्थे पाणिनिकात्यायनपतञ्जलीनां सर्वविधानि मतानि समालोच्य, वामनजयादित्यशेषकृष्णादिप्राचीनमतानि च सम्यक् खण्डयित्वा वैयाकरणसिद्धान्तभूतानि तत्त्वानि महता संरम्भेण प्रादर्शि । उक्तञ्च सिद्धान्तकौमुद्याः मङ्गलश्लोके—

"मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च ।
वैयाकरणसिद्धान्तकौमुदीयं विरच्यते ॥ इति

ग्रन्थस्याऽस्यान्ते स्वयमेव शब्दकौस्तुभस्य नामोल्लेखं करोति ग्रन्थकारः । तथा च—

"इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शितम् ।
विस्तरस्तु यथाशास्त्रं दर्शितः शब्दकौस्तुभे ॥

भट्टोजिदीक्षितेन सिद्धान्तकौमुद्याः व्याख्याभूता प्रौढमनोरमा टीकाऽप्यनायासेन बोधाय प्रणीता । भट्टोजिदीक्षितस्य "वेदभाष्यसार" नामक एको ग्रन्थो भारतीयविद्याभवनबम्बईतः प्रकाशितो वर्तते । अयं ऋग्वेदस्य प्रथमाध्यायस्य सायणीयऋग्भाष्यस्य संक्षेपभूतो वर्तते । एतस्य प्रधानशिष्यो वरदराजाचार्यः कश्चन दक्षिणात्यो ब्राह्मण आसीद्, येन मध्यसिद्धान्तकौमुदीलघुसिद्धान्तकौमुदीति ग्रन्थद्वयं विरचितम् ।

सिद्धान्तकौमुद्याः सूक्ष्मतया पर्यालोचनेनाऽनुमीयते यदयं भट्टोजिदीक्षितः सर्वविधविद्यानां रत्नाकरः पण्डितप्रकाण्डश्चाऽऽसीत् । किञ्च, शब्दकौस्तुभमादायैव भट्टोजिदीक्षितेन वैयाकरणभूषणसारकारिकाः प्रणीताः, याश्चाऽऽश्रित्य कौण्डभट्टो वैयाकरणभूषणसारग्रन्थं प्रणिनाय । तत्र धात्वर्थ-लिङर्थ-नामार्थ-समासार्थ-स्फोटादीनां मार्मिकं विवेचनं कृतं वर्तते । एतेन शब्दकौस्तुभप्रणेतुर्भट्टोजिदीक्षितस्य दार्शनिकतत्त्वान्वेषणधियो महत् प्रागल्भ्यं प्रतीयते । एतदतिरिक्ताः भट्टोजिदीक्षितेनाऽधोलिखिताः ग्रन्थाः प्रणीताः—

आशौचप्रकरणम्, कालनिर्णयः, हेमाद्रिसारभूतः, चतुर्विशतिमतव्याख्या, आचारकाण्डः, संस्कारकाण्डः, प्रायश्चित्तकाण्डः, श्राद्धकाण्डः, तिथिनिर्णयः, प्रवरनिर्णयः, प्रौढमनोरमा, तन्त्रसिद्धान्तदीपिका, त्रिस्थलीसेतुः, तैत्तिरीयसन्ध्याभाष्यञ्च ।

## (२५) अप्पयदीक्षितः

अप्पयदीक्षितमहोदयः पाणिनीयाष्टाध्यायीसूत्राणां "सूत्रप्रकाश" नाम्नी टीका प्रणीता । अस्या एको हस्तलेखः अडियारराजकीयग्रन्थालये समुपलभ्यते ।

श्री अप्पयदीक्षितमहोदयस्य पितुर्नाम "श्रीरङ्गराज अध्वरी" पितामहस्य च च नाम "आचार्यदीक्षित" इत्यासीत्[1] । अस्य पूर्णनाम "नारायणाचार्य" आसीदित्यनेके आचार्याः समामनन्ति । भरद्वाजगोत्रीयोऽयं स्वकाले शैवमतस्य महान् स्तम्भो मन्यते स्म । श्रीअप्पयदीक्षितमहोदयस्य लघुभ्रातुर्नाम श्रीअच्चानदीक्षित आसीत् । श्रीअच्चानदीक्षितपौत्रस्य श्रीनीलकण्ठमहोदयस्य 'शिवलीलार्णव' इत्य-

---

१. अप्पयदीक्षित नै 'न्यायरक्षामार्ग' में यही नाम लिखा है—आचार्यदीक्षित इति प्राथिताभिधानम् ।.... .... अस्मत्पितामहमशेषगुरुं प्रपद्ये ।

भिधेयेन काव्येन ज्ञायते यत् श्री अप्पयदीक्षितमहोदयः ७२ मितवर्षपर्यन्तमजीवत्। तथा च तेन प्राय एकशतमिता ग्रन्थाः प्रणीताः[1]।

**कालः**

श्रीअप्पयदीक्षितमहोदयस्य कालविषये विद्वत्सु पर्याप्तं वैमत्यमवलोक्यते। एतस्य कालविषयेऽधोलितानि मतानि प्रचलितानि—

(१) श्रीविट्ठलाचार्यप्रणीतायाः "प्रक्रियाकौमुदीप्रसाद" टीकाया एको हस्तलेखो लन्दननगरस्य इण्डियाआफिसग्रन्थालये उपलभ्यते। श्रीभट्टोजिदीक्षितस्य गुरुणा श्रीशेषकृष्णमहोदयेन प्रक्रियाकौमुद्याः "प्रक्रियाप्रकाश" नाम्नी व्याख्या प्रणीता। अस्या अपरं नाम 'प्रक्रियाकौमुदीवृत्ति' रित्यप्यासीत्। अस्याः सं० १५१४ वैक्रमाब्दीय एको हस्तलेखः पूनानगरस्य 'भण्डारकरप्राच्यविद्याग्रन्थालये' सुरक्षितोऽस्ति। शेषकृष्णं जीवितं मत्वा श्रीभट्टोजिदीक्षितमहोदयस्य कालः सं० १५७० वैक्रमाब्दात् १६५० वैक्रमाब्दं यावत् स्वीक्रियते। अतो वैयाकरणाचार्यस्य श्रीअप्पयदीक्षितमहोदयस्य कालः सं० १५७५ वैक्रमाब्दात् १६५० वैक्रमाब्दंयावत् स्वीकर्तुं शक्यते।

(२) श्रीअप्पयदीक्षितमहोदयस्य पितामहः आचार्यदीक्षितमहोदयो विजयनगराधिपस्य श्रीकृष्णदेवरायमहोदयस्य सभापण्डित आसीत्। श्रीकृष्णदेवरायमहोदयस्य राज्यकालः सं० १५६६ वैक्रमाब्दात् १५८६ वैक्रमाब्दं यावन्मन्यते। अतः सामान्यतया श्रीअप्पयदीक्षितमहोदयस्य कालः सं० १५५० वैक्रमाब्दात् १६२५ वैक्रमाब्दं यावत् स्वीकर्तुं शक्यते।

(३) श्री अप्पयदीक्षितमहोदयस्य भ्रातुष्पौत्रस्य श्रीनीलकण्ठस्य लेखेन ज्ञायते यत् श्रीअप्पयदीक्षितमहोदयेन वेल्लूरस्य राज्ञः श्रीचिनतिम्मनायकस्य प्रेरणया

---

१. कालेन शम्भुः किल तावतापि, कलाश्चतुष्षष्टिमिताः प्रणिन्ये। द्वासप्तति प्रायः समाः प्रबन्धाञ्छतं व्यवदधादप्पयदीक्षितेन्द्रः॥ सर्ग १।
यष्टुं विश्वजिता यता परिधरं सर्वे बुधा निर्जिता, भट्टोजिप्रमुखाः स पण्डितजगन्नाथोऽपि निस्तारितः। पूर्वेर्घे चरमे द्विसप्ततितमस्याब्दस्य सद् विश्वजिद्, याजी यश्च चिदम्बरे स्वयमभजन् ज्योतिः सतां पश्यताम्।
( रसगङ्गाधर हिन्दी टीका ( काशी ) में उद्धृत।)

न्यङ्कटदेशिकस्य 'यादवाभ्युदय' ग्रन्थस्य टीका विलिखिता। श्रीचिन्नतिम्मनायकस्य राज्यकालः सं० १५९९ वैक्रमाब्दात् १६०७ वैक्रमाब्दं यावत् स्वीक्रियते।

(४) श्री अप्पयदीक्षितमहोदयस्य भ्रातुष्पौत्रेण श्रीनीलकण्ठदीक्षितमहोदयेन 'श्रीनीलकण्ठचम्प्वाः' रचना ४७३८ कलिवर्षेषु गतेषु अर्थात् सं० १६९४ वैक्रमाब्दे विहिताऽऽसीत्[1]।

(५) आत्मकूर ( कर्नूल–आन्ध्रप्रदेश ) वास्तव्येन श्रीपं० पद्मनाभरावमहोदयेन १०-११-१९६३ दिनाङ्किते स्वपत्रे लिखितम्[2], यत्—

श्रीअप्पयदीक्षितमहोदयः श्रीविजयेन्द्रतीर्थ-ताताचार्याभ्यां सह तज्जाव्वरुनायकस्य शेवप्पनायकस्य सभामलञ्चकार। शेवप्पनायकः सं० १६३७ वैक्रमाब्दे ( सन् १५८० ई० ) श्रीविजयेन्द्रतीर्थाय ग्रामदानं चकार। मैसूरपुरातत्त्वविभागस्य सन् १९१७ ई० संग्रहेऽधोलिखितः श्लोकः समुद्धृतः—

"त्रेतम्गनय इव स्पष्टं विजयीन्द्रयतीश्वरः।
ताताचार्यो वैष्णवाग्रयः सर्वशास्त्रविशारदः॥
शैवाद्वैतैकसाम्राज्यः श्रीमान् अप्पयदीक्षितः।
तत्सभायां मतं स्वं स्वं स्थापयन्तस्स्थितास्त्रयः॥

अनेन स्पष्टं प्रतीयते यत् श्री अप्पयदीक्षितमहोदयस्य कालः सं० १५७५ वैक्रमान्दात् १६५० वैक्रमाब्दं यावत् स्वीकर्तुं शक्यते।

६. 'हिन्दुत्व' ग्रन्थलेखकः श्रीरामदासगौडमहोदयोऽलिखत् यत् श्रीअप्पयदीक्षितमहोदयः तिरुमल्लई ( सं० १६२४–१६३१ )–चिन्नतिम्म ( सं० १६३१-१६४२ )—वेङ्कट ( १६४२ वै० ) इत्येतेषां त्रयाणामपि राज्ञां सभापण्डित आसीत्। श्री अप्पयदीक्षितमहोदयेन विभिन्नेषु ग्रन्थेष्वेतेषां राज्ञां नामनिर्देशो

१. अष्टात्रिंशदुपस्कृतसप्तशताधिकचतुस्सहस्रेषु कलिवर्षेषु गतेषु (४७३८) ग्रथितः किल नीलकण्ठविजयोऽयम्।
२. द्र० युधिष्ठिर मीमांसक–संस्कृत व्याकरणशास्त्र का इतिहास, प्र०भाग, पृ० ४९२, सं० २०३०॥

विहितः[1]। श्री अप्पयदीक्षितमहोदयस्य जन्म सं० १६०८ वैक्रमाब्दे जातम्, ७२ वर्षस्यावस्थायां सं० १६८० वैक्रमाब्दे बभूव[2]।

७, 'हिन्दुत्व' ग्रन्थलेखकः श्रीरामदःसगौडमहोदयेन सूचितम् यत् श्रीनृसिंहाश्रममहोदयप्रेरणया श्रीअप्पयदीक्षितमहोदयेन 'परिमलन्यायरक्षामणि 'सिद्धान्तलेश' प्रभृतयो ग्रन्थाः प्रणीताः[3]। श्रीनृसिंहाश्रमप्रणीतस्य 'तत्त्वविवेक' ग्रन्थस्य परिसमाप्तिः सं० १६०४ वैक्रमाब्दे जाता, इति तेन स्वयमेव निर्दिष्टम्[4]। श्रीनृसिंहाश्रमः प्रक्रियाकौमुदीप्रकाशकारेण श्रीविट्ठलाचार्येण स्मृतस्य श्रीजगन्नाथाश्रमस्य शिष्योऽस्ति। श्रीविट्ठलाचार्यकृतप्रक्रियाकौमुदीप्रकाशस्यैकः सं० १५३४ वैक्रमाब्दीयो हस्तलेख उपलभ्यते।

८. 'संस्कृत साहित्य का इतिहास' इत्यभिधेयग्रन्थस्य लेखकेन श्रीकन्हैयालाल पोद्दारमहोदयेन श्रीअप्पयदीक्षितमहोदयस्य कालः सन् १६५७ अर्थात् सं० १७१४ वैक्रमाब्दः स्वीकृतः[5] तेनोक्तम्—'सन् १६५७ ईशवीये (सं० १७१४ वैक्रमाब्दे) काश्याः मुक्तिमण्डपे एका सभा जाता, यत्रेदं निर्णीतम् यत् महाराष्ट्रियाः देवर्षिं (देवसखे) ब्राह्मणाः पङ्क्तिपावनास्सन्ति। अस्मिन् निर्णयपत्रे श्रीअप्पयदीक्षितमहोदयस्यापि हस्ताक्षराणि सन्ति। निर्णयपत्रमिदम् श्रीपिपुटकरमहोदयेन 'चितले भट्टप्रकरणम्' इत्याख्ये ग्रन्थेऽपि मुद्रापितम्।

श्री पं० युधिष्ठिरमीमांसकमहोदयेन मतानामेतेषां सम्यक्समीक्षणानन्तरं साधितम् यत्

१. श्रीपिपुटकरेण प्रकाशितं निर्णयपत्रमवश्यमेव कृत्रिममस्ति अथवा अप्पय दीक्षितोऽयं वैयाकरणाऽप्पयदीक्षिताद् भिन्नोऽन्यः कश्चन वर्तते। यतो हि श्रीनीलकण्ठप्रणीतशिवलीलार्णवकाव्यरचनाकालं (सं० १६९४ वै०) यावद् अप्पयदीक्षितमहोदस्य स्वर्गवासः सञ्जात आसीत्।

१. रामदास गौड—हिन्दुत्व, पृ० ६२७।

२. तदेव, पृ० ६२७।

३. तदेव, पृ० ६२६।

४. तदेव, पृ० ६२४।

५. कन्हैयालाल पोद्दार—संस्कृत साहित्य का इतिहास, भाग १, पृ० २८५।

२. 'हिन्दुत्व' ग्रन्थलेखकस्य मतम् स्वीक्रियेत चेत् ६क्रमाङ्के निर्दिष्टं तन्मतम् ( सं० १६०८-१६८० ) ७ क्रमाङ्के निर्दिष्टेन 'श्रीनृसिहाश्रम सं० १६०४ वैक्रमाब्दे 'तत्त्वविवेक' ग्रन्थः प्रणीतः' इति लेखेन विपरीतं प्रतीयते। तथा च श्रीनृसिंहाश्रमगुरुश्रीजगन्नाथाश्रमः प्रक्रियाकौमुदीप्रसादप्रणेतुर्विट्ठलाचार्यस्य समकालिकोऽस्ति।

३. श्रीअप्पयदीक्षितस्य कालः सामान्यतया सं० १५७५ वैक्रमाब्दात् १६५० वैक्रमाब्दमध्ये स्वीकर्तव्यः। श्रीमीमांसकमहोदयः स्वीकरोति यत् अप्पयदीक्षित नामधेयौ द्वौ विद्वांसौ सञ्जातावित्यपि सम्भाव्यते। दाक्षिणात्यपरम्परानुसारं श्रीअप्पयदीक्षित पौत्रस्याऽपीदं नाम सम्भवति। विषयोऽयं गभीरतयाऽनुसन्धातव्यो गवेषकैः।

## (२६) नीलकण्ठवाजपेयी

श्रीनीलकण्ठवाजपेयिनाभिधेयेनाऽऽचार्येण पाणिनीयाष्टाध्याय्याः 'पाणिनीय-दीपिका' नाम्नी वृत्तिः प्रणीता, यस्योल्लेखो नीलकण्ठेन स्वयमेव परिभाषावृत्तौ विहितः[१] एतेन महाभाष्यस्य 'भाष्यतत्त्वविवेक 'नाम्नी व्याख्याऽपि प्रणीता, यस्या एको हस्तलेखो मद्रासराजकीमहस्तलेखपुस्तकालयस्व सूचीपत्रे भागे २, खण्डे १. A. पृष्ठे १६१२ ग्रन्थाङ्के निर्दिष्टोऽस्ति। हस्तलेखस्याऽस्यान्ते टीका-कारस्य नाम 'नीलकण्ठ यज्वे'ति निर्दिष्टमस्ति[२]।

श्रीनीलकण्ठवाजपेयिमहोदयेन वैयाकरणसिद्धान्तकौमुद्याः 'सुखबोधिनी' व्याख्यायाः: प्रारम्भेऽधोलिखितप्रकारेण स्वपरिचयः समुपस्थापितः—

'पदवाक्यप्रमाणानां पारगं विबुधोत्तमम्।
रामचन्द्रमहेद्राख्यं पितामहमहं भजे॥
आत्रेयाब्धिकलानिधिः कविबुधालङ्कारचूडामणिः।
तातः श्रीवरदेश्वरो मखिवरो योऽयष्ट देवान् मखैः॥

---

१. अस्मत् कृतपाणिनीयदीपिकायां स्पष्टम्। नीलकण्ठ-परिभाषावृत्ति, पृ० २६।)
२. द्र० युधिष्ठिर मीमांसक–संस्कृत व्याकरणशास्त्र का इतिहास, प्रथमभाग, पृ० ४११, सं० २०३०।

अध्यैष्टाप्पयदीक्षितार्यतनयात् तन्त्राणि काश्याम्पुनः ।
षड्वर्गाणि यो त्यजेष्टाशिवतां प्राप नस्सोऽवतात् ॥
श्रीवाजपेयिना नीलकण्ठेन विदुषां मुदे ।
सिद्धान्तकौमुदीव्याख्या क्रियते सुखबोधिनी ॥
अस्मद्गुरुकृतां व्याख्यां बह्वर्थां तत्त्वबोधिनीम् ।
विभाव्य तत्रानुक्तं च व्याख्यास्येऽहं यथामति ॥[1]

श्लोकानामेतेषामनुशीलनेन ज्ञायते यत् नीलकण्ठो रामचन्द्रस्य पौत्रो, वरदेश्वरस्य च पुत्र आसीत् । वरदेश्वरेणाऽप्पयदीक्षितपुत्राद् विद्याध्ययनं विहितम् । नीलकण्ठः तत्त्वबोधिनीकाराद् ज्ञानेन्द्रसरस्वतिमहोदयाद् विद्या अधीताः । श्रीनीलकण्ठवाजपेयिनः कालो १६०० वैक्रमाब्दात् १६७५ वैक्रमाब्दं यावत् स्वीकर्तव्य इति श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयानाम्मतम् ।

श्रीनीलकण्ठवाजपेयिनाऽधोलिखिताः ग्रन्थाः प्रणीताः—

(१) व्याकरणमहाभाष्यस्य 'भाष्यतत्त्वविवेक' नाम्नी टीका ।
(२) पाणिनीयदीपिका ( अष्टाध्यायीवृत्तिः )
(३) परिभाषावृत्तिः ।
(४) वैयाकरणसिद्धान्तकौमुद्याः सुखबोधिनी टीका ।
(५) तत्वबोधिनीव्याख्यानगूढार्थदीपिका ।

## (२७) विश्वेश्वरसूरिः

श्रीविश्वेश्वरसूरि नामधेयेन विदुषा पाणिनीयाष्टाध्याय्युपरि 'व्याकरणसिद्धान्तसुधानिधि' नाम्नी विस्तृता व्याख्या प्रणोता । व्याख्येयमष्टाध्याय्या आदिमेषु त्रिष्वध्यायेष्वेव समुपलभ्यते ।

श्रीविश्वेश्वरसूरिणा नाममात्रमेव स्ववृत्तं प्रदत्तम् । तदनुसारेण श्रीविश्वेश्वरस्य पितुर्नाम 'लक्ष्मीधर' इत्यासीत् । पर्वतीयविशेषणेनाऽस्य पर्वतीयत्वं स्पष्टीभवति । ग्रन्थकारस्य मृत्युः प्रायः ३४ वर्षावस्थायां जाता ।

१. कृष्णमाचार्य—हिस्ट्री आफ क्लासिकल संस्कृत लिटरेचर, पृ० ७६६, पैराग्राफ ९०६ ।

ग्रन्थकारेण श्रीविश्वेश्वरसूरिणा भट्टोजिदीक्षितस्य विभिन्नेषु स्थानेषूल्लेखो विहित; परन्तु तत्पौत्रस्य हरिदीक्षितस्य, विभिन्नेषु स्थानेषूल्लेखो विहितः, परन्तु तत्पौत्रस्य हरीदीक्षितस्य, तत्प्रणीतस्य प्रौढमनोरमाव्याख्याभूतस्य शब्दरत्नस्य क्वचिदपि चर्चा न विहिता। अतोऽनुमीयते यद् 'शब्दरत्न' ग्रन्थरचनातः पूर्वमेव श्रीविश्वेश्वरसूरिणा स्वग्रन्थः प्रणीतः। अतोऽस्य कालः सं० १६०० वैक्रमाब्दात् १६५० वैक्रमाब्दं यावत् स्वीकर्तव्यः। 'हिस्ट्री आँफ क्लासिकल संस्कृत लिटरेचर' इत्यभिधेयग्रन्थस्य लेखकेन श्री कृष्णमाचार्यः महोदयेनाऽस्य अष्टादशेशवीयशतकं निर्धारितम्।

श्री विश्वेश्वरसूरिणाऽधोलिखिता अन्ये ग्रन्था अपि प्रणीताः—

(१) तर्ककौतूहलम्।

(२) अलङ्लारकौस्तुभम्।

(३ रुक्मिणी परिचयः।

(४) आर्यासप्तशतो।

(५) अलङ्कारकुलप्रदीपः।

(६) रसमञ्जरी टीका।

## (२८) गोकुलचन्द्रः

गोकुलचन्द्रनामाभिधेयेन वैयाकरणाचार्येण पाणिनीयाष्टाध्याय्या एका संक्षिप्ता वृत्तिः प्रणीता, यस्या एको हस्तलेख उपलभ्यते।

वृत्तेरन्ते श्रीगोकुलचन्द्रेण यः स्वपरिचयः प्रदत्तस्तदनुसारेणाऽस्य पितुर्नाम 'बुधसिंहः', मातुर्नाम 'सुशीला'; गुरोश्च नाम 'जगन्नाथ आसीत्। अस्यैकस्य सोदर्यंभ्रातुर्नाम गोपाल आसीत्। लेखकोऽयं वैश्यकुलीन आसीत्।[1]

वृत्तेरस्याः रचनायाः समाप्तिकालः सं० १८९७ वैक्रमाब्दस्य माघशुक्ला अष्टमी वर्तते। वृत्तिरियमत्यन्तसंक्षिप्तसूत्रोदाहरणस्वरूपा वर्तते।

---

१. बुधसिंहात् सुशीलायां लब्धजन्मा विशां वरः।
लब्धविद्यो जगन्नाथाच्छ्रोत्रियाद् ब्रह्मनिष्ठतः॥
लब्ध्वा सहायं सोदर्यं श्रीगोपालं व्यदधादिमाम्।
वृत्तिं पाणिनिसूत्राणामर्थ्यां गोकुलचन्द्रमाऽअष्टमी॥सं० १८९७ माघ शुक्लाः।

## (२९) ओरम्भट्ट

श्री वैद्यनाथभट्टविश्वरूपेण 'ओरम्भट्ट' इत्यपरनामाभिधेयेन वैयाकरणेन पाणिनीयाष्टाध्याय्याः 'व्याकरणदीपिका' नाम्नी वृत्तिः प्रणीता। वृत्तावस्यां वृत्त्युदाहरणाऽन्याप्रभृतयो यथासम्भवं सिद्धान्तकौमुदीत उद्धृताः।

श्रीओरम्भट्टमहोदयो महाराष्ट्रियः काशीवास्तव्यः पण्डितोऽस्ति। काश्याः सुप्रसिद्धस्य विदुषो बालशास्त्रिणो गुरोः काशीनाथशास्त्रिणः समकालिकोऽयमाचार्यः। श्रीपण्डितकाशीनाथशास्त्रिमहोदयः सं० १९१६ वैक्रमाब्दे काशिकराजकीयसंस्कृतमहाविद्यालयादवकाशः गृहीत आसीत्। अथ ओरम्भट्टस्य कालः प्रायः सं० १९०० वैक्रमाब्दोऽस्ति।

## (३०) स्वामी दयानन्द सरस्वती

पाणिनीयसूत्राणां 'अष्टाध्यायी भाष्य' इत्याख्यविस्तृतटीकाप्रणेतुः स्वामीदयानन्दसरस्वतीमहाभागस्य जन्म 'काठियावाड़' नगरान्तर्गत 'टंकारा' ग्रामे औदीच्यब्राह्मणकुले जातम्। अस्य पिता सामवेदीयब्राह्मण आसीत्। अस्य पितुर्नाम श्री कर्शनजी तिवारी, पितामहस्य च नाम श्रीविश्रामजी तिवारी, उपनाम लालजी तिवारी आसीत्। स्वामिदयानन्दस्य बाल्यकालस्य नाम 'मूलजी' इत्यासीत् सम्भवतोऽयं 'मूलशङ्कर' नाम्नाऽपि प्रसिद्ध आसीत्। मूलशङ्करस्य पिता शैवमतावलम्बी आसीत्। सोऽत्यन्तं धर्मनिष्ठो दृढचरित्रयुक्तो धनधान्यादिपूर्णो वैभवसम्पन्न आसीत्।

मूलशङ्करस्य द्वौ कनिष्ठौ सहोदरभ्रातारावास्ताम्। तस्य द्वे भगिन्यावास्ताम्। ययोः कनिष्ठायाः भगिन्याः मृत्युमूलशङ्करस्य बाल्यकाले एव सञ्जाता। एतस्य वैमातृकाश्चत्वारो भ्रातर आसन्, तेषां वंशजा अद्यापि वर्तन्ते।

पञ्चमे वर्षे मूलशङ्करस्य विद्यारम्भः, अष्टमे वर्षे चोपनयनसंस्कारो जातः। सामवेदित्वेऽपि शैवमतावलम्बित्वान्मूलशङ्करस्य पिता तं रुद्राध्यायं, समग्रं यजुर्वेदं च कण्ठाग्रं कारयामास। गृहे वसन् मूलशङ्करेण व्याकरणादीनामध्ययनं विहितमासीत्। बाल्यकाले स्वपितृव्यस्य, भगिन्याश्च मृत्युकारणेनैतस्य मनसि

वैराग्यभावना जागृता जाता, सा चोत्तरोत्तरं वर्द्धमानैवाऽऽसीत्। अस्य पिता मूलशङ्करस्य मनोगतं भावमवगत्य, तं विवाहबन्धने बद्धं प्रयत्नं चकार, परन्तु मूलशङ्करस्य संकल्पदार्ढ्यान्न साफल्यमवाप। अत एकदा सायङ्काले सः भौतिकसम्पत्तिपरिपूर्णं स्वगृहं सर्वकालार्थं तत्याज। तदा सः २२ वर्षदेशीय आसीत्।

गृहपरित्यागनन्तरं योगिनामन्वेषणाय, सत्यशिवदर्शनस्य चेच्छया मूलशंकरः प्रायः पञ्चदश वर्षं यावद् हिंस्रजन्तुपरिपूर्णेषु भयङ्करेषु वनेषु, कन्दरासु, हिमपरिपूर्णासु हिमालयकन्दरासु च भ्रमति स्म। कालेऽस्मिन् तेन योगस्य विविधानां क्रियाणामनेकेषां शास्त्राणाञ्चाऽध्ययनं विहितम्।

नर्वदास्त्रोतसो यात्राप्रसङ्गे मूलशंकरः स्वामिपूर्णानन्दसरस्वतिमहाभागात् सन्यासं गृहीत्वा 'दयानन्द सरस्वती' संज्ञामवाप। नर्वदास्त्रोतसो यात्रायामेव तेन मथुरानिवासिनः प्रज्ञाचक्षुदण्डिनो विरजानन्दस्वामिनः सकाशं व्याकरणादिशास्त्राण्यधीतवान्। स्वामिविरजानन्दो व्याकरणशास्त्रस्याऽद्वितीयो विद्वानासीत्। तस्य व्याकरणशास्त्रस्य नव्यप्राचीनोभयविधसर्वग्रन्थेष्वव्याहतगतिरासीत्। सकलः पण्डितः समाजः स्वामिदयानन्दश्च तं 'व्याकरणसूर्य'' इति कथयति स्म।

**कालः**

स्वामिदयानन्दसरस्वतिमहाभागस्य जन्म १८८१ वैक्रमाब्दे जातम्। अस्य जन्मनस्तिथिराश्विनशुक्ला सप्तमीत्युच्यते। अनेके विद्वांसो दयानन्दस्य जन्मकालः पौषमासे स्वीकुर्वन्ति। अस्य स्वर्गवासः सं० १९४० वैक्रमाब्दे कार्तिककृष्णाऽमावस्यायां दीपावल्यवसरे जातः।

**कृतयः**

स्वगुरोराज्ञया स्वामिदयानन्दो वैदिकधर्मप्रचाराय, विलुप्तसंस्कृतव्याकरणशास्त्राऽध्ययनाऽध्यापनपरम्परायाः पुनरुद्धाराय प्रयत्नं चकार। तेन वेदाध्ययने, वेदाङ्गस्वरूपव्याकरणशास्त्राध्ययने चार्षपरम्परैव समर्थिता। एतदर्थं तेनाऽनेके ग्रन्था अपि हिन्दी भाषायां प्रणीताः। स्वामिदयानन्देन गुरुकुलेषु पाणिनीयाऽटाध्यायिक्रमेण संस्कृतव्याकरणशास्त्राऽध्ययनाऽध्यापनपरम्परा प्रारब्धा।

स्वामिदयानन्देन पाणिनीयसूत्राणामुपरि 'अष्टाध्यायी भाष्य' नाम्नी टीका प्रणीताऽऽसीत्। स्वामिदयानन्दस्य १५ अगस्त सन् १८७८ ईशवीयदिनाङ्कित

( आषाढ शुक्ल द्वितीया सं० १९३५ वि०) पत्रेण ज्ञायते यद्, अष्टाध्यायीभाष्यस्य रचनोक्तदिनाङ्कतः पूर्वमेव प्रारब्धा आसीत्[1]। एकेनाऽन्येन पत्रेण ज्ञायते यत् २४ अप्रैल सन् १८७९ दिनाङ्कं यावदष्टाध्यायीभाष्यस्य चत्वारोऽध्यायाः पूर्णाः जाता आसन्[2]। चतुर्थाध्यायादग्रे रचना जाता न वेति न ज्ञायते। स्वामिदयानन्दस्याऽनेकैः पत्रैर्ज्ञायते यत् पर्याप्तग्राहकाभावादष्टाध्यायीभाष्यं स्वजीवनकाले प्रकाशयितुं न शशाक स्वामिदयानन्दः। स्वामिदयानन्दस्य स्वर्गवासानन्तरं तत्स्थानापन्नया "परोपकारिणिसभया' 'अष्टाध्यायीभाष्यस्य' भागद्वयं प्रकाशितम्, यत्र तृतीयाध्यायपर्यन्तं भाष्यमस्ति। अस्य प्रथमभागस्य ( अ० १।१-२ तथा अ० २ ) सम्पादन डा० रघुवीर जी एम० ए० महोदयेन विहितम्। तृतीयचतुर्थभागयोः सम्पादनं श्री पं० ब्रह्मदत्तजिज्ञासुमहाभागेन विहितम्। तत्र श्रीपं० युधिष्ठिरमीमांसकमहोदयेनाऽपि सहायकरूपेण कार्यं विहितम्।

स्वामिदयानन्देन स्वदशवर्षाणां कार्यकाले ( सं० १९३१ तः १९४० वैक्रमाब्दं यावत् ) प्रायः पञ्चाशद् ग्रन्थाः प्रणीताः। तत्र व्याकरणविषयकग्रन्थेषु—अष्टाध्यायीभाष्यम्, वेदाङ्गप्रकाशान्तर्गताः—वर्णोच्चारणशिक्षा-सन्धिविषय-नामिक-कारकीय-सामासिक-धातुपाठ-अव्ययार्थ-आख्यातिक-सौवरपारिभाषिक-स्त्रैणतद्धित—गणपाठ-उणादिकोशप्रभृतयो ग्रन्थाः महत्त्वपूर्णाः। अन्येषु ग्रन्थेषु च ऋग्वेदादिभाष्य भूमिका-ऋग्वेदभाष्य-यजुर्वेदभाष्य-सत्यार्थप्रकाश-संस्कारविधिप्रभृतयो ग्रन्थाः महत्वपूर्णास्सन्ति।

## अज्ञातकालिकाः वृत्तिकारास्तद्ग्रन्थाश्च

### (१) नारायणसुधीः

श्रीनारायणसुधी प्रणीतस्य पाणिनीयाष्टाध्याय्याः 'अष्टाध्यायांप्रदीप-शब्दभूषण' इत्यभिधेयस्य वृत्तिग्रन्थस्य हस्तलेखाः मद्रास-अडियार-तञ्जौरराजकीयपुस्तकालयेषु

१. ऋषि दयानन्द के पत्र और विज्ञापन, पृ०१०५, द्वि० सं०॥
२. तदेव, पृ० १४१, द्वि० सं०॥

समुपलभ्यन्ते। मद्रासनगरस्य राजकीयपुस्तकालयस्य सूचीपत्रे ४र्थं भागे A खण्डे ४२७५ पृष्ठे निर्दिष्टस्य हस्तलेखस्यान्तेऽधोलिखितः पाठ उपलभ्यते—

'इति श्रीगोविन्दपुरवास्तव्यनारायणसुधीविरचिते सवार्त्तिकाष्टाध्यायी प्रदीपे शब्दभूषणे अष्टमाध्ययस्य चतुर्थः पादः ॥'

वृत्तिरियमतीव विस्तृताऽस्ति। अत्रोपयोगिवार्तिकानामपि समावेशोऽस्ति। तृतीयाध्यायस्य द्वितीयपादानन्तरमुणादिसूत्राणि षष्ठाध्यायस्य द्वितीयपादानन्तरं फिट्सूत्राण्यपि व्याख्यातानि। श्रीनारायणसुधीमहोदयस्य देशकालावज्ञातौ स्तः।

## (२) रुद्रधरः

श्रीरुद्रधरप्रणीतायाः पाणिनीयाष्टाध्यायिवृत्तेरेको हस्तलेखवाराणसीस्थसम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सरस्वतीभवनग्रन्थालयस्य हस्तलेखसंग्रहे समुपलभ्यते।[1]

श्रीरुद्रधरो मैथिलपण्डितोऽस्ति। अस्य कालोऽज्ञातोऽस्ति।

## (३) उदयनः

श्री उदयनाचार्यप्रणीतायाः 'मितवृत्त्यर्थसंग्रह' इति नामधेयायाः वृत्तेरेको हस्तलेखो जम्मूनगरस्य रघुनाथमन्दिर पुस्तकालये उपलभ्यते।[2]

वृत्तेरस्याः हस्तलेखस्याऽऽरम्भेऽधोलिखितः श्लोक उपलभ्यते—

'मुनित्रयमतं ज्ञात्वा वृत्तीरालोच्य यत्नतः।
करोत्युदयनः साधु मितवृत्त्यर्थसंग्रहम् ॥'

उदयनेन ग्रन्थेऽस्मिन् काशिकावृत्तेः संक्षेपो विहितः। ग्रन्थकारस्य देशकालावज्ञातौ स्तः। उदयनाचार्योऽयं नैयायिकोदयनाचार्यात् सर्वथा भिन्न आचार्योऽस्ति।

## (४) उदयशङ्करभट्टः

उदयशङ्करभट्टनामाभिधेयेन वैयाकरणाचार्येण पाणिनीयाष्टाध्याय्याः 'मितवृत्त्यर्थसंग्रह' नाम्नी काचिद् वृत्तिः प्रणीता, तस्य सङ्केतः तेन प्रणीतस्य 'परिभाषाप्रदीपार्चि' इत्यभिधेयग्रन्थस्याऽऽदौ समुपलभ्यमानेनाऽधोलिखितेन पाठेन ज्ञायते—

---

१. द्र०, सरस्वती भवन संग्रह नं० १९ (पुराना), वेस्टन संख्या १३।

२. द्र०, रघुनाथ मन्दिर जम्मूपुस्तकालय संग्रह सूचीपत्र, पृ० ४५।

कृत्वा पाणिनिसूत्राणां मितवृत्त्यर्थसंग्रहम् ।
परिभाषा प्रदीपार्चिस्तत्रोपायो निरूप्यते ॥

## (५) रामचन्द्रः

श्री रामचन्द्राचार्येण पाणिनीयाष्टाध्याय्या एका वृत्तिः प्रणीता । तत्राऽनेन काशिकावृत्तेः संक्षेपो विहितः । अनेन श्री नागोजीविदुषः प्रेरणयैव वृत्तिरियं प्रणीतेति तस्याः वृत्तेः प्रारम्भे समुपलभ्यमानेनाऽधोलिखितेन श्लोकेनाऽवगम्यते—

'नागोजीविदुषा प्रोक्तो रामचन्द्रो यथामति ।
शब्दशास्त्र समालोच्य कुर्वेऽहं वृत्तिसंग्रहम् ॥'

नागोजी नामा विद्वानयं सम्भवतः सुप्रसिद्धो वैयाकरणो नागेशभट्ट एव । एकश्च रामचन्द्रः शेषवंशीयस्य नागोजीभट्टस्य पुत्रः, तेन सिद्धान्तकौमुद्याः व्याख्या प्रणीता । स महाभाष्यटीकाकारस्य शेषनारायणस्य शिष्यः । परन्त्वयं रामचन्द्रः शेषवंशीयनागोजीभट्टसुतरामचन्द्रात् सर्वथा भिन्न इति श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयानां मतम् ।

## (६) सदानन्दनाथः

सदानन्दनाथ नामाभिधेयविदुषा पाणिनीयाष्टाध्याय्याः 'तत्त्वदीपिका' नाम्नी व्याख्या प्रणीता । वृत्तेरस्याः निर्देशो' योगप्रचारिणीसभागोरक्षटीला काशी' तः प्रकाशितायाः श्रीनाथग्रन्थसूच्याः १६ पृष्ठे समुपलभ्यते । सूचीपत्रानुसारेण वृत्तिरियं जोधपुदुर्गपुरस्तकालये (संख्या २७५७।१३ ) सुरक्षिता वर्तते ।

एतदतिरिक्तमनेकासां वृत्तीनां सङ्केतः श्रीपण्डित युधिष्ठिरमीमांसकमहोदयेन स्वकीये 'संस्कृत व्याकरण शास्त्र का इतिहास' इत्यभिधेये ग्रन्थे विहितः । तथा हि—

'पाणिनीया लघुवृत्तिः' नाम्नी वृत्तिः श्लोकबद्धा । अस्याः सङ्केतः त्रिवेन्द्रम् पुस्तकालयस्य सूचीपत्रे ( भाग ५, ग्रन्थांक १०५ ) समुपलभ्यते ।

श्लोकबद्धायाः पाणिनीयसूत्रवृत्तेरेको हस्तलेखो मैसूरराजकीयपुस्तकालयेऽपि समुपलभ्यते, इति सन् १९२२ ईशवीयप्रकाशितेन तत्रत्यसूचीपत्रेण (पृष्ठम् ३१५, ग्रन्थाङ्कः ४७५० ) ज्ञायते ।

ग्रन्थावुभावभिन्नौ भिन्नौ वेति न सम्यग् ज्ञायते।

पाणिनीयसूत्रः-लघु [वृत्ति] विवृतिः पाणिनीयलघुवृत्तेः श्लोकबद्धा टीका। टीकेयं रामशालिक्षेत्रवास्तव्येन केनचिद् द्विजेन प्रणीता, तस्य नाम न ज्ञायते। त्रिवेन्द्रम् राजकीय पुस्तकालयस्य सूचीपत्रे (भागः ६, ग्रन्थाङ्कः ३४) वृत्तेरस्याः सङ्केत उपलभ्यते।

मैसूरराजकीय पुस्तकालय सूचीपत्रस्य ३१५ पृष्ठे 'पाणिनीयसूत्रवृत्ति टिप्पणी' नामधेयस्य ग्रन्थस्योल्लेखोऽस्ति। ग्रन्थोऽयं 'देवसहाय' नाम्ना विदुषा प्रणीत इति तत्र सङ्केतितम्।

मद्रासराजकीयपुस्तकालयस्य नवीने मुद्रिते बृहत्सूचीपत्रे पाणिनीयाष्टाध्याय्याः पञ्चानां वृत्तीनामुल्लेख उपलभ्यते। तथा हि—

| ग्रन्थनामानि | ग्रन्थाङ्काः |
|---|---|
| १—पाणिनीयसूत्रवृत्तिः | ११५७७ |
| २—पाणिनीयसूत्रविवरणम् | ११५७८ |
| ३—पाणिनीयसूत्रविवृतिः | ११५७९ |
| ४—पाणिनीयसूत्रविवृति लघु वृत्तिकारिका | ११५८० |
| ५—पाणिनीय सूत्रव्याख्यानम् उदाहरणश्लोकसहितम्। | ११५८१ |

श्रीविश्वेश्वरानन्दवैदिकशोधसंस्थाने होशियारपुरे पाणिनीयाष्टाध्याय्या द्वे वृत्ती उपलभ्येते। उभावपि वृत्ती केरललिप्यां लिखिते स्तः। (ग्रन्थाङ्कः ३७५०, ६२८१)

वाराणसीस्थसम्पूर्णानन्द संस्कृतविश्वविद्यालयस्य सरस्वती भवनग्रन्थालयस्य संग्रहे पाणिनीयाष्टाध्याय्या एका अज्ञातकर्तृकी वृत्तिः समुपलभ्यते। (द्र० महीधर संग्रह वेष्टन नं० २८)।

एवमनेकेषु ग्रन्थालयेषु पाणिनीयाष्टाध्याय्याः वृत्तीनां हस्तलेखाः वर्तन्ते, तेषामन्वेषणमतीवावश्यकम्प्रतीयते।

॥ इति संस्कृतव्याकरणशास्त्रैतिह्यविमर्शे अष्टाध्यायिवृत्तिकारवर्णनं नाम षष्ठोऽध्यायः॥

अथ सप्तमोऽध्यायः

# अष्टाध्यायिवार्तिककारवर्णनम्

## वार्तिकलक्षणम्

संस्कृतवाङ्मये वार्तिकनाम्ना व्यवह्रियमाणाः ग्रन्था द्विधा दृश्यन्ते। तत्र प्रथमास्तावत् तादृशा वार्तिकग्रन्थाः, येषां रचनाः सूत्रेषु जाताः, तेषु च भाष्याणां रचनाः जाताः। अत एव कात्यायनीयवार्तिकानां कृते भाष्यसूत्रशब्दो व्यवह्रियते। एतादृशः प्रकारोवार्तिकग्रन्थानां केवलं व्याकरणशास्त्रे समुपलभ्यते। अपराश्च ते वार्तिकग्रन्थाः, येषां भाष्येषु रचना जाताः। यथा न्यायभाष्यवार्तिकम्।

पराशर-उपपुराणे वार्तिकस्याऽधोलिखितं लक्षणमुक्तम्—

'उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते।
तं ग्रन्थं वार्तिकम्प्राहुर्वार्तिकज्ञाः मनीषिणः॥'

व्याकरणसम्प्रदाये 'व्याकरणशास्त्रप्रवृत्तेः' कृते वृत्ति शब्दो व्यह्रियते। तद्यथा—

'का पुनर्वृत्तिः?[1] शास्त्रप्रवृत्तिः।'

यास्काचार्यप्रणीतस्य निरुक्तस्य 'संशयवत्यो[2] वृत्तयो भवन्ति' इत्यस्मिन् वाक्येऽपि वृत्तिशब्दस्यार्थो व्याकरणशास्त्रप्रवृत्तिरेवाऽस्ति।

कात्यायनेनाऽपि वृत्तिशब्दस्यैष एवार्थोऽङ्गीकृतः—

'तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणम्[3] अनण्त्वात्।'

---

१. युधिष्ठिर मीमांसक—संस्कृत व्याकरणशास्त्र का इतिहास भाग १, पृ० २९३ पर उधृत, सं० २०३०।

२. यास्क–निरुक्तम्, २।१॥

३. महाभाष्यम्, १।१ पा०। २ आ० अ इ उ ण् सू०।

वाक्यमिदं व्याचक्षाणेन श्रीकैयटेनोक्तम्—

'वृत्तिः शास्त्रस्य लक्ष्ये प्रवृत्तिः[१], तदनुगतो निर्देशोऽनुवृत्तिनिर्देशः।'

वस्तुतः शास्त्रप्रवृत्तेः प्रतीतिः केवलं सूत्रैर्न जायते, तत्कृते सूत्रव्याख्यानमपेक्ष्यते। अत एव सूत्राणां लघवो व्याख्यानग्रन्थाः, येषु पदच्छेदविभक्त्यनुवृत्त्युदाहरणप्रत्युदाहरणादिभिः सूत्रतात्पर्यं प्रकाश्यते, 'वृत्ति' शब्देन व्यवह्रियन्ते। अनयैव दृष्ट्या मूलभूतस्य शब्दानुशासनस्य कृते 'वृत्तिसूत्र' पदं व्यवह्रियते।

वृत्तिशब्दस्योपयुक्तार्थस्य प्रकाशे 'वार्तिक' पदस्य 'वृत्तेर्व्याख्यानं वार्त्तिकम्' इत्यर्थः सङ्गच्छते।

## वार्तिकानां कृते वाक्य-व्याख्यानसूत्र-भाष्यसूत्राऽनुतन्त्राऽनुस्मृति-शब्दानां प्रयोगाः

**वाक्यम्**—वार्तिकानां कृते स्वतन्त्ररूपेण 'वाक्य' पदस्य निर्देशः कैयटप्रणीते महाभाष्यप्रदीपे[२], न्यासे,[३] देवकृते दैवग्रन्थे[४] चोपलभ्यते। सूत्रेषु क्रियापदप्रयोगाभावात्तत्र वाक्यत्वलक्षणं[५] न सङ्घटते, वार्तिकेषु च क्रियापदमपि प्रयुज्यते; अत एव कारणात् वार्तिकानां कृते 'वाक्य' शब्दः प्रयुज्यते।

**व्याख्यानसूत्रम्**—वार्तिकानां कृते 'व्याख्यानसूत्र' शब्दस्य प्रयोगः केवलं कैयटप्रदीपे महाभाष्यप्रदीपे समुपलभ्यते।[६] येषां सूत्राणां व्याख्यानं विधीयेत,

---

१. कैयट—भाष्यप्रदीप, १।१।२ आ०। अ इ उ ण् सू० भा०। पृ० ६०। हरयाणासाहित्यसंस्थानम् गुरुकुलझज्जरसंस्करणम्, सं० २०१९ वै०॥

२. सूत्रव्याख्यानार्थत्वाद् वाक्यानाम्....... (महाभाष्यप्रदीपम्, ६।३।३४।) तुल्यविचारत्वाद् भाष्ये त्रिसूत्रीं पठित्वा वाक्यं पठितम्—संपुंकानामिति॥ (तदेव, ८।३।५॥)

३. भाष्यं कात्यायनेन प्रणीतानां वाक्यानां विवरणं पतञ्जलिप्रणीतम्। (न्यास, पृ० १)

४. उपालम्भे शपेर्वाक्यात्। (देव-दैवग्रन्थ, श्लो० १३२।)

५. एकतिङ् वाक्यम् (व्याकरणमहाभाष्यम्, २।१।१॥)

६. व्याख्यानसूत्रेषु लाघवाऽनादरात्। (कैयट, महाभाष्यप्रदीप, ८।२।६॥) इस पर नागेश लिखता है—व्याख्यानसूत्रेष्विति वार्तिकेष्वित्यर्थः (उद्योत, ८।२।६॥)

तानि 'व्याख्यानसूत्राणि' । वार्तिकेषु भाष्यस्वरूपव्याख्यानग्रन्थप्रणयनाद्, वार्तिकानि 'व्याख्यानसूत्राणी' त्युच्यन्ते ।

**भाष्यसूत्रम्**—भर्तृहरिणा महाभाष्यदीपिकायां[१] वार्तिकानां कृते 'भाष्यसूत्र' शब्दः प्रयुक्तः । महर्षिदयानन्दसरस्वतिमहाभागेनापि स्वकीय 'ऋग्वेदादिभाष्यभू[२]मिकायां' वार्तिकानां कृते 'भाष्यसूत्र' शब्दो व्यवहृतः । हर्षवर्धनकृतलिङ्गानुशासनटीकायां 'वार्तिक' शब्दस्याऽर्थं एव 'भाष्यसूत्र' मिति लिखितम् ।[३]

**अनुतन्त्रम्**—आचार्येण भर्तृहरिणा स्ववाक्यपदीयब्रह्मकाण्डे[४], वाक्यपदीयब्रह्मकाण्डस्य स्वोपज्ञटीकायां[५] वार्तिकानि 'अनुतन्त्र' नाम्ना समुद्धृतानि ।

**अनुस्मृतिः**—सायणाचार्येण धातुवृत्तौ वार्तिकानां कृते 'अनुस्मृति' शब्दो व्यवहृतः[६] ।

---

१. भाष्यसूत्रे गुरुलाघवस्यानाश्रितत्वात्, लक्षणप्रपञ्चयोस्तु मूलसूत्रेऽप्याश्रयणाद् इहापि लक्षणप्रपञ्चाभ्यां प्रवृत्तिः । ( भर्तृहरि–महाभाष्यदीपिका, पृ० ४८ ) न च तेषु भाष्यसूत्रे गुरुलघुप्रयत्नः क्रियते । तथा [ हि–]–न हीदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्तीति । भाष्यसूत्राणि हि लक्षणप्रपञ्चाभ्यां समर्थतराणि ( भर्तृहरि-महाभाष्यदीपिका, पृ० २८१, २८२ । )

२. अर्थगत्यर्थः शब्दप्रयोग इति भाष्यसूत्रम् । ( ऋग्वेदादिभाष्य भूमिका—वैदिक लौकिकसामान्यविशेषनियमप्रकरण, पृ० ३७६, तृ० सं० ॥ )

३. वार्तिकं भाष्यसूत्राणि । हर्षवर्धन-लिङ्गानुशासनटीका, नपुं० प्रकरण कारिका ४४ ।

४. नित्या शब्दार्थसम्बन्धाः समाम्नाताः महर्षिभिः । सूत्राणामनुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः ( भर्तृहरि-वाक्यपदीयम्, ब्रह्मकाण्डम् २३ )

५. अनुतन्त्रे खल्वपि–सिद्धे शब्दार्थसम्बन्धे इति । ( भर्तृहरि-वाक्यदीय-स्वोपज्ञटीका, ब्रह्मकाण्डम्, पृ० ३५, लाहौर संस्करणम् ।

६. अनुस्मृतौ कारशब्दस्य स्थाने करशब्दः पठ्यते । (सायण-धातु-वृत्ति, पृ० ३० काशीसंस्कृतसीरिज, नं० १०३, बनारस सन् १९३४ ।

## वार्तिककारस्य कृते वाक्यकार-वाक्यकरणीय-वाक्यार्थविद-पदकारशब्दानां प्रयोगाः

आचार्य भर्तृहरि[१]-कुमारिलभट्ट,[२] जिनेन्द्रबुद्धिपाद[३]-क्षीरस्वामी[४]-हेलाराज[५]-हेमचन्द्र[६] -हरदत्त[७] प्रभृतिभिर्वैयाकरणैर्वार्तिककारकृते 'वाक्यकार' शब्दः प्रयुक्ताः सायणाचार्येण[८] नागेशभट्टेन[९] चापि वार्तिककारस्य कृते वाक्यकारशब्दो व्यवहृतः।

**वाक्यकरणीयः**—श्रीहेमसंगणिः[१०] गुणरत्नसूरिश्च[११] वार्तिककारस्य कृते 'वाक्यकरणीय' शब्दं व्यवहरतः।

---

१. एषा भाष्यकारस्य कल्पना, न वाक्यकारस्य। ( भर्तृहरि—महाभाष्य दीपिका ) यदेवोक्तं वाक्यकारेण वृत्तिसमवायार्थ उपदेशः ( भर्तृहरि-( महाभाष्यदीपिका )

२. धर्माय नियमं चाह वाक्यकारः प्रयोजनम्। ( कुमारिलभट्ट-तन्त्रवार्तिकम् १।३।८।।पृ० २७८, पूनासंस्करणम्।

३. जिनेन्द्रबुद्धिः—न्यास, ६।२।११।। वीरेन्द्र रिसर्च सोसाइटी, राजशाही बंगाल संस्करणम्।

४. सौत्रश्चुलुम्पादयश्च वाक्यकरीया धातवः। ( क्षीरस्वामी-क्षीरतरङ्गिणी )

५. हेलाराज-वाक्यपदीयटीका, काण्डम्, ३, पृ० २, १२, २७ प्रभृतीनि, रामलाल कपूरट्रस्टसंस्करणम्।

६. सौत्राश्चुलुम्पादयश्च वाक्यकारीया धातव उदाहार्याः। ( हैमधातुपारायणस्यान्ते )

७. यद्विस्मृतदृष्टं वा सूत्रकारेणतत्स्फुटम्। वाक्यकारो ब्रवीत्येवं तेनादृष्टं च भाष्यकृत्॥ ( हरदत्तमिश्र-पदमञ्जरी, भाग १, पृ० ७. मेडिकल हाल प्रैस, बनारस, सन् १८९५॥

८. चुलुम्पादयो वाक्यकारीयाः। ( सायण-धातुवृत्ति, पृ० ४०२, काशी संस्कृत सीरिज नं० १०३, बनारस सन् १९३४। )

९. वाक्यकारो वार्तिकमारभते। ( नागेश-भाष्यप्रदीपोद्योत, ६।१।१३५॥)

१०. एव लौकिकवाक्यकरणीयानाम्....। ( न्यायसंग्रह, पृ० १२२॥ ) अथ वाक्यकरणीयाः....। ( तदेव, पृ० १३०। )

११. चुलुम्पादयो वाक्यकरणीयाः। ( गुणरत्नसूरि-क्रियारत्न समुच्चय,, पृ २८४।)

**वाक्यार्थविद्**—श्री भट्टनारायणेन गोभिलगृह्यसूत्रस्य (३।१०।६, ४।१।११) भाष्ये 'वाक्यार्थविद्' नाम्ना वचनद्वयं समुद्घृतम्।

**पदकारः**—'सांख्यसप्तति' ग्रन्थस्य युक्तिदीपिकाटीकायां वार्तिककारस्य कृते 'पदकार' शब्दस्य प्रयोग उपलभ्यते।[१]

## प्रमुखाः वार्तिककाराः

श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयेन स्वकीये 'संस्कृत व्याकरण शास्त्र का इतिहास' इत्यभिधेये ग्रन्थे कात्यायन-भारद्वाज-सुनाग-क्रोष्टा-वाडव-कुणरवाडव-व्याघ्रभूति-वैयाघ्रपद्य-गोनर्दीय-गोणिकापुत्र-सौर्यभगवान्प्रभृतीनां वार्तिकाकाराणामुल्लेखा विहितः। अत्र क्रमशः संक्षेपतस्तेषां परिचय उपस्थाप्यते।

## १. कात्यायनः

पाणिनीयव्याकरणे यावन्ति वार्तिकानि लिखितानि, तेषु कात्यानस्य वार्तिकपाठ एव सुप्रसिद्धः। पतञ्जलेराचार्यस्य व्याकरमहाभाष्ये प्रामुख्येन कात्यायनीय वार्तिकाणामेव व्याख्यानमस्ति पतञ्जलिना व्याकरणमहाभाष्ये[२] कात्यायनः स्पष्टतया 'वार्त्तिककार' उक्तः। कात्यायनस्य परिचयः पूर्वमेव प्रदत्तः।

## २. भारद्वाजः

भारद्वाजोयवार्तिकविषये भगवता पतञ्जलिना स्वकीये महाभाष्ये अनेकेषु स्थानेषु चर्चितम्।[३] वार्तिकान्येतानि पाणिनीयाष्टकमेवाश्रित्यैव प्रणीतानि, तथ्यमिदं

१. पदकारश्चाह—जातिवाचकत्वात्। सांख्यसप्ततेयुक्तिदीपिका टीका, पृ० ७।) तुलनीयम्—दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्। ( वार्तिकम्, १।२।१०।। )

२. न स्म पुरानद्यतन इति ब्रुबता कात्यायनेनेह। स्मादिविधिः पुरान्तो यद्यविशेषेण भवति, किं वार्त्तिककारः प्रतिषेधेन करोति—न स्म पुरानद्यतन इति। ( पतञ्जलि-महाभाष्यम्, ३।२।१।८ ) सिद्धवत्येवं यत्त्विदं वार्तिकारः पठति—'विप्रतिषेधाट्टापो वलीयस्त्वम्' इत्येतदसंगृहीतं भवति। ( तदेव, ७।१।१।। )

३. पतञ्जलि—व्याकरणमहाभाष्यम्, १।१।२०, ५६।। १।२।२२।। १।३।६७।। ३।१।३८, ४८, ८९।। ४।१।७९।। ६।४।४७, १५५ ।।

व्याकरणमहाभाष्ये समुद्धृतभारद्वाजीयवार्तिकानां सूक्ष्मपर्यवेक्षणेन स्पष्टीभवति ।[१] न्यासग्रन्थेऽपि भारद्वाजीयवार्तिकोल्लेख उपलभ्यते ।[२]

भारद्वाजीयवार्तिकानि कात्यायनीयवार्तिकापेक्षयेषद्विस्तृतान्यासन् । तुलनीयम्—

**कात्यायनवार्तिकम्**—घुसंज्ञायां प्रकृतिग्रहणं शिदर्थम् ।

**भारद्वाजीयवार्तिकम्**—घुसंज्ञायां प्रकृतिग्रहणं शिद्विकृतार्थम् ।[३]

**कात्यायनवार्तिकम्**—यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम् ।

**भारद्वाजवार्तिकम्**—यक्चिणोः प्रतिषेधे णिश्रिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम् ।[४]

एतेषां भारद्वाजीयवार्तिकानां प्रणेता को भारद्वाज इति न सम्प्रति ज्ञायते । यद्येतानि वार्तिकानि पाणिनीयव्याकरणस्योपरि न प्रणीतानीति स्वीक्रियेत तर्ह्यवश्यमेवेदं स्वीकर्तुं शक्यते यत् तानि पाणिनिपूर्ववर्ति भारद्वाजव्याकरणोपरि प्रणीतानि स्युः । अस्यामवस्थायां भारद्वाजव्याकरणपाणिनीयव्याकरणयोरतीव साम्यं स्वीकर्तव्यं भविष्यति ।

## ३. सुनागः

भगवता पतञ्जलिना स्वकीये व्याकरणमहाभाष्येऽनेकेषु स्थानेषु सौनागवार्ति-

---

१. भारद्वाजीयाः पठन्ति—नित्यमकित्त्वमिडाद्योः, क्त्वाग्रहणमुत्तरार्थम् ॥ (पतञ्जलि—व्याकरणमहाभाष्यम्, १।२।२२॥) भारद्वाजीयाः पठन्ति—भ्रस्जोरोपधयोर्लोपः, आगमो रम् विधीयते ॥ (तदेव, ६।४।४७ ॥)

२. पूङश्चेत्यत्र सूत्रे द्वयोर्विभाषयोर्मध्ये ये विधयस्ते नित्याः भवन्तीति मन्यमानैर्भारद्वाजीयैरिदमुक्तम्—नित्यमकित्त्वमिडाद्योरिति । (जिनेन्द्रबुद्धि—न्यास, भाग १, पृ० १६२ ॥)

३. पतञ्जलि—व्याकरणमहाभाष्यम्, १।१।२० ।

४. तदेव, ३।१।८९ ।

कानि समुद्धृतानि।[1] पदमञ्जरीकारहरदत्तमिश्रस्य लेखानुसारेण वार्तिकानामेतेषां प्रणेतुर्नाम 'सुनाग' आसीत्।[2] कैयटप्रणीतमहाभाष्यप्रदीपावलोकनेन ज्ञायते यत् सुनाग आचार्यः कात्यायनादर्वाचीनोऽस्ति।[3]

व्याकरणमहाभाष्यात् प्रतीयते यत् सौनागवार्तिकानि पाणिनीयाष्टाध्यायीमाश्रित्य प्रणीतान्यासन्।[4] एवमेव भगवता पतञ्जलिना 'ओमाङोश्च' इतिसूत्रस्थं चकारं प्रत्याख्यायोक्तम्—

'एवं हि सौनागाः पठन्ति[5]—चोऽनर्थकोऽधिकारादेङः।'

श्री पं० गुरुपदहालदारमहोदयेन सुनागः पाणिनेः पूर्ववर्तीति साधितम्[6], किन्तु तन्मतन्न समीचीनम्।

सौनागवार्तिकानि कात्यायनीयवार्तिकापेक्षयाऽतीवविस्तृतानि सन्ति। अत एव व्याकरणमहाभाष्ये (२।२।१७) कात्यायनस्य वार्तिकस्य व्याख्यानन्तरं पतञ्जलिनोक्तम्—

'एतदेव च सौनागैर्विस्तरतरकेण पठितम्।'

व्याकरणमहाभाष्ये (४।१।१५) पतञ्जलिनोक्तम्—

---

१. पतञ्जलि-व्याकरणमहाभाष्यम्, , २।२।१८ ॥ ३।२।५६ ॥ ४।१।७४, ८७ ॥ ४।३।१५६ ॥ ६।१।९५॥ ६।३।४३ ॥

२. सुनागस्याचार्यस्य शिष्याः सौनागाः। (हरदत्त—पदमञ्जरी, भाग २, पृ० ७६१ ॥)

३. कात्यायनाभिप्रायमेव प्रदर्शयितुं सौनागैरतिविस्तरेण पठितमित्यर्थः। (कैयट—महाभाष्यप्रदीप, २।२।१८।)

४. इह हि सौनागाः पठन्ति—वुञश्छाञ् कृतप्रसंगः। इस पर कैयट लिखता है—पाणिनीयलक्षणे दोषोद्भावनमेतत्। (पतञ्जलि—व्याकरणमहाभाष्य तथा कैयट—प्रदीप, ४।३।११५।)

५. पतञ्जलि—व्याकरणमहाभाष्यम्, ६।१।९५।

६. गुरुपदहालदार—व्याकरणदर्शनेर इतिहास, पृ० ४४५; हालदार पाड़ा रोड, कालीघाट, कलकत्ता।

'अत्यल्पमिदमुच्यते—ख्यनु इति। नञ्स्नञीकक्ख्युंस्तरुणतुलनानामुपसंख्यानम्।'

यद्यपि महाभाष्येऽत्र वार्तिकस्याऽस्य कर्तुर्नाम न लिखितम्, तथापि महाभाष्ये वार्तिकमिदं सौनागवार्तिकत्वेनोक्तम्।[1] अत एवेदं सौनागवार्तिकम्, कात्यायनीयवार्तिकापेक्षयाऽतिविस्तृतमिति स्पष्टम्।

व्याकरणमहाभाष्येऽनेकेषु स्थानेषु 'अत्यल्पमिदमुच्यते' इत्युक्त्वा कात्यायनीयवार्तिकेभ्यो विस्तृतानि वार्तिकानि समद्धृतानि[2], तेषां सौनागत्वं सम्भाव्यते।

श्रृङ्गारप्रकाशे 'महावार्तिककार' नाम्ना महाभाष्ये (२।१।५१) पठितमेकं वार्तिकमुद्धृतम्।[3] महावार्तिककारोऽयं सुनाग एवेति श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयमतम्।

व्याकरणमहाभाष्ये (४।२।६५) महावार्तिकाध्येतॄणां कृते प्रयुज्यमानस्य 'माहावार्तिक' पदस्य निर्देश उपलभ्यते। एतानि महावार्तिकानि सम्भवतः सौनागवार्तिकान्येव।

महाभाष्यमतिरिच्य भर्तृहरिप्रणीतमहाभाष्यटीका[4]-काशिका[5]-भाषावृत्ति[6]-

---

१. एवं हि सौनागाः पठन्ति—नञ्स्नञीकक्ख्युँस्तरुणतुलनानामुपसंख्यानम्। (पतञ्जलि—महाभाष्यम्, ३।२।५६, ४।१।८७।)

२. पतञ्जलि—व्याकरणमहाभाष्यम्, २।४।४९॥ ३।१।१४। २२, २५, ९७॥ ३।२।२९॥

३. ननु च द्वन्द्वतत्पुरुषयोरुत्तरपदेनित्यसमासवचनमिति महावार्तिककारः पठति। (श्रृंगारप्रकाशः, पृ० २९।)

४. नैव सौनागदर्शनमाश्रीयते। (पं० युधिष्ठिरमीमांसकस्य भर्तृहरिकृतमहाभाष्यदीपिकाहस्तलेखः, पृ० ३१)

५. सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन, अस्यतेर्भावे॥ (काशिका, ७।२।१७॥)

६. निष्ठायां कर्मणि शकेरिड्वेति सौनागाः॥ (भाषावृत्ति, ७।२।१७॥)

क्षीरतरंगिणी[१]-धातुवृत्ति[२]-मल्लवादिप्रणीतद्वादशारनयचक्रस्यसिंहसूरिगणिटीका[३]-प्रभृतिषु ग्रन्थेष्वनेकानि सौनागमतान्यवलोक्यन्ते।

## ४. क्रोष्टा

अस्याऽऽचार्यस्य वार्तिकस्योल्लेखो व्याकरणमहाभाष्ये केवलमेकस्मिन्नेव स्थाने समुपलभ्यते। तथा हि—

'परिभाषान्तरमिति[४] च कृत्वा क्रोष्ट्रीयाः पठन्ति-नियमादिको गुणवृद्धी भवतो विप्रतिषेधेन।'

उद्धरणादेतस्मादिदमपि स्पष्टम् यत् क्रोष्ट्रीयवार्तिकानि पाणिनीयाष्टाध्यायी-मेवाश्रितान्यासन्। क्रोष्ट्रीयवार्तिकानामुल्लेखोऽन्यत्र नोपलभ्यते।

## ५. वाडवः

आचार्यस्याऽस्यमतं व्याकरणमहाभाष्ये दृश्यते। यथा-'अनिस्टिज्ञो[५] वाडवः' पठति।'

---

१. धातूनामर्थनिर्देशोऽयं प्रदर्शनार्थं इति सौनागाः। यदाहुः—क्रियावाचित्वमाख्यातुमेकोऽत्रार्थः प्रदर्शितः। प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः। (क्षीरतरङ्गिणी) देखें मद्रास राजकीय हस्तलेख पुस्तकालय का सूची पत्र, पृ० १८४९। रोमनाक्षर मुद्रित जर्मन संस्करण में 'धातुना······यदाहुः पाठ नहीं है। 'क्रियावाचित्वमाख्यातुम्' श्लोक चान्द्रधातु पाठ के अन्त में भी मिलता है। द्र० क्षीरतरङ्गिणी, पृ० ३ सं०—युधिष्ठिरमीमांसक, रामलालकपूरट्रस्ट अमृतसर।

२. शक धातु, पृ० ३०१, अस् धातु, पृ० ३०७, शक्लधातु पृ० ३१९ (सायण धातुवृत्ति, काशी संस्कृत सीरिज नं० १०३, बनारस, सन् १९३४।)

३. छिविसिव्योर्ल्युट्परयोर्दीर्घत्वं वष्टि भागुरिः। करोतेः कर्तृभावे च सौनागा हि प्रचक्षते॥ मल्लवादिप्रणीत द्वादशारनयचक्र की सिंहसूरिगणि की टीका भाग १, पृ० ४१, बड़ौदा संस्करण॥

४. पतञ्जलि—व्याकरणमहाभाष्यम्, १।१।३॥

५. तदेव, ८।२।१०६॥

एतद् व्याचक्षाणेन स्वकीये महाभाष्यप्रदीपोद्योते श्रीनागेशभट्टेनोक्तम्—

'सिद्धं त्विदितोरिति वार्तिकं वाडवस्य ।'

वार्तिककारस्याऽस्य विषये एतदतिरिक्तं न किञ्चिज्ज्ञायते ।

## ६. व्याघ्रभूतिः

व्याकरणमहाभाष्ये व्याघ्रभूतेराचार्यस्य साक्षादुल्लेखो नास्ति । व्याकरण-महाभाष्ये (२।४।३६) 'जग्धिविधिर्ल्यपि' इत्यादि श्लोकवार्तिकमुद्धृम् । श्री-कैयटमतानुसारेण श्लोकवार्तिकमिदं व्याघ्रभूतिप्रणीतमस्ति[1] । कातन्त्रवृत्तिपञ्जि-काप्रणेत्रा श्रीत्रिलोचनदासेन व्याघ्रभूतिमतमुद्धृतम् । तथा हि—

'तथा च व्याघ्रभूतिः[2]—सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्त-मथाप्यदन्तमिति ।'

सुपद्मकरन्दकारेणाऽपीदं व्याघ्रभूतिवचनत्वेन स्वीकृतम्[3] । न्यासकार इदं वचनमागमवचनत्वेन प्रतिपादयति[4] ।

काशिकायाम् (७।२।१०) समुद्धृता अनिट्कारिका अपि व्याघ्रभूति-प्रणीताः मन्यन्ते[5] । पण्डितगुरुपदहालदारमहोदयेनाऽयं पाणिनेराचार्यस्य साक्षात् शिष्य उक्तः ।[6] तत्र प्रमाणमन्वेषणीयम् ।

---

१. अयमेवार्थो व्याघ्रभूतिनाप्युक्त इत्याह···। (कैयट-महाभाष्यप्रदीप, २।४।३६।)

२. त्रिलोचनदास—कातन्त्रचतुष्टयम् ।

३. सुपद्म, सुबन्त, २४ ।

४. जिनेन्द्रबुद्धि—न्यास ७।१।९४ ।।

५. यमिन्मन्तेष्वनिडेक इष्यते इति व्माघ्रभूतिना व्याहृतस्य·······। (भट्टोजि-दीक्षित—शब्दकौस्तुभ अ० १ । पाद १। आ० २। पृ० ८२ । तर्पि तिपि-मिति व्याघ्रभूतिवचनविरोधाच्च । सायण–धातुवृत्ति, पृ० ८२, काशी संस्कृत सीरिज, नं० १०३, बनारस, सन् १९३४ ।

६. गुरुपद हालदार—व्याकरणदर्शनेर इतिहास, पृ० ४४४, हालप्तर पाड़ा रोड कालीघाट कलकत्ता ।

## ७. वैयाघ्रपद्यः

आचार्य वैयाघ्रपद्यस्य नाम व्याकरणमहाभाष्ये उदाहरणरूपेण बहुधा समुद्धृतम्। वैयाघ्रपद्य एकं व्याकरणशास्त्रं प्रणिनाय।

काशिकायाम् (८।२।१) शुष्किका शुष्कजङ्घा च' इत्येकः श्लोकः समुद्धृतः। श्रीभट्टोजिदीक्षितमहोदयेन वार्तिकमिदं वैयाघ्रपद्यप्रणीतमुक्तम्[1]। यदि भट्टोजिदीक्षितस्य लेखः समीचीनः स्याद्, उपर्युक्तश्लोकश्च अष्टाध्याय्याः (८।२।१) प्रयोजननिदर्शकं वार्तिकमेव स्यात्तर्हि निश्चितरूपेण वैयाघ्रपद्योऽयं पाणिनेरर्वाचीनो भविष्यति। श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयमतानुसारेण वैयाघ्रपद्यनामानौ द्वावाचार्यौ मन्तव्यौ—पाणिनेः पूर्ववर्ती व्याकरणशास्त्रप्रवक्ता, द्वितीयश्च पाणिनेरर्वाचीनः वार्तिककारो वैयाघ्रपद्यश्चेति।

### महाभाष्ये स्मृता अन्ये वैयाकरणाः

व्याकरणमहाभाष्ये उपर्युक्तवार्तिककारानतिरिच्याऽन्येषामपि वैयाकरणामपि मतान्युद्धृतानि। यथा—गोनर्दीयः, गोणिकापुत्रः, सौर्यभगवान्, कुणरवाडव, भवन्तः भेदात्। एते आचार्याः पाणिनीयाष्टाध्याय्याः वार्तिकाराः आसन् वृत्तिकाराः वेति न सम्प्रति ज्ञायते। एतेषामप्याचार्याणां संक्षिप्तपरिचय उपस्थाप्यते।

## ८. गोनर्दीयः

गोनर्दीयाचार्यस्य मतानि व्याकरणमहाभाष्येऽधोलिखितेषु स्थानेषूद्धृतानि—
'गोनर्दीयस्त्वाह[2]—सत्यमेतत् सति त्वन्यस्मिन्निति।'
'गोनर्दीयस्त्वाह[3]—अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ।
त्वकत्पितृको मकत्पितृक इत्येव भवितव्यमिति।'

---

१. अत एव शुष्किका....... इति वैयाघ्रपदीयवार्तिके जिशब्द एव पठ्यते।
(भट्टोजिदीक्षित—शब्दकौस्तुभम्, १।१।५६॥)

२. पतञ्जलि-व्याकरणमहाभाष्यम्, १।१।२१॥

३. तदेव, १।१।२९॥

'न तर्हि इदानीमिदं भवति'[१]--इच्छाम्यहं काशकटीकारमिति। इष्टमेवैतद् गोनर्दीयस्य।'

'गोनर्दीयस्त्वाह'[२]—इष्टमेवैतत् संगृहीतं भवति—अतिजरमतिजरैरिति भवितव्यम्।'

'गोनर्दीय' इति नाम देशनिमित्तकमस्ति। अनेन प्रतीयते यद् गोनर्दीय आचार्योऽयं 'गोनर्द' देशस्याऽस्ति। उत्तरप्रदेशस्य वर्तमानं गोण्डामण्डलं सम्भवतः प्राचीनो गोनर्ददेशोऽस्ति। काशिकायां (१।१।७५) 'गोनर्दः' प्राच्यदेशोऽभिहितः। अनेके ऐतिहासिका काश्मीरान्तर्गतं गोनर्दं स्वीकुर्वन्ति। काश्मीरस्य 'राजतरङ्गिणी' इत्यभिधेये ऐतिहासिके ग्रन्थे गोनर्द नामधेयानां त्रयाणां राज्ञामुल्लेखोऽस्ति। सम्भाव्यते यत् तत्सम्बन्धात् काश्मीरस्याऽपि कश्चित् प्रदेशः 'गोनर्द' नाम्ना प्रसिद्धो भवेत्। अस्यामवस्थायां 'गोनर्द' नामानौ द्वौ देशौ स्वीकर्तव्यौ भविष्यतः।

'गोनर्दीय' शब्दे विद्यमानेन तद्धितप्रत्ययेन स्पष्टम् यद् गोनर्दीय आचार्यः प्राच्यगोनर्ददेशस्याऽऽसीत्। भर्तृहरि[३]–कैयट[४]–नागेश[५]–राजशेखर[६] प्रभृतयो ग्रन्थकाराः गोनर्दीयशब्दं पतञ्जलेर्नामान्तरं स्वीकुर्वन्ति। वैजयन्तीकोषकारोऽपि गोनर्दीयशब्दं पतञ्जलेः पर्यायं स्वीकरोति।[७] डॉ० कीलहार्नमहोदयस्य मतमस्ति यद् गोनर्दीय आचार्यो महाभाष्यकाराद् भिन्नोऽस्ति। श्रीपण्डितयुधिष्ठिरमीमांसक-महोदयमते गोनर्दीय आचार्यो महाभाष्यकारः पतञ्जलिर्नास्ति। अतोऽयमाचार्यः महाभाष्यकारादन्यो वैयाकरण आचार्योऽस्ति।

---

१. पतञ्जलि-व्याकरणमहाभाष्यम्, ३।१।९२॥

२. तदेव, ७।२।१०१॥

३. गोनर्दीयस्त्वाह—तस्माद् भाष्यकारो व्याचक्षति (व्याचष्टे) सूत्रमिति। भर्तृहरि—भाष्यटीका, १।१।२१॥)

४. भाष्यकारस्त्वाह—(कैयट–प्रदीप, १।१।आ०५।सू०२१॥)

५. गोनर्दीयपदं व्याचष्टे—भाष्यकार इति (नागेश-उद्योत, १।१।२१॥)

६. यस्तु प्रयुक्ते···तत्प्रमाणमेवेति गोनर्दीयः। राजशेखर-काव्यमीमांसा, पृ० २६, गायकवाड संस्कृत सीरिज, बड़ौदा, प्रथम संस्करण।)

७. गोनर्दीयः पतञ्जलिः॥ वैजयन्ती कोष, श्लोक १५७॥)

## ९. गोणिकापुत्रः

अस्याऽऽचार्यस्य मतं भगवता पतञ्जलिना व्याकरणमहाभाष्ये समुद्धृतम्। तथाहि—

उभयथा गोणिकापुत्र इति।[१]

एतद् वचो व्याचक्षाणेन नागेशभट्टेनोक्तम्—

'गोणिकापुत्रो भाष्यकार इत्याहुः।'[२]

अत्र 'आहुः' इति पदेन प्रतीयते यत् नागेशस्येदं मतमभीष्टं नास्ति। वात्स्यायनप्रणीतकामसूत्रेऽपि गोणिकापुत्रस्योल्लेख उपलभ्यते।[३] कोशकारः पतञ्जलेर्नामान्तरेषु 'गोणिकापुत्र' इतिशब्दं न पठति। अत एव निश्चितरूपेणाऽयं महाभाष्यकाराद् भिन्नो वैयाकरणोऽस्ति।

## १०. सौर्यं भगवान्

भगवता पतञ्जलिना व्याकरणमहाभाष्ये आचार्यस्याऽस्य मतमुद्धृतम्। तथा हि—

'तत्र सौर्यभगवता उक्तम्[४]—अनिष्टज्ञो वाडवः पठति।'

श्रीकैयटमतानुसारेण आचार्योऽयं 'सौर्यं' इत्यभिधेयनगरस्य वास्तव्य आसीत्।[५] सौर्यनगरस्योल्लेखः। काशिकायामुपलभ्यते[६]। महाभाष्यकारेणाऽस्याऽऽचार्यस्य नाम्ना सह 'भगवान्' शब्दस्य प्रयोगो विहितः। अनेनाऽस्याऽऽचार्यस्य

---

१. पतञ्जलि–व्याकरणमहाभाष्य- १।४।५१।।

२. नागेश–उद्योतः १।४।५१।।

३. गोणिकापुत्रः पारदारिकम्। वात्स्यायन–कामसूत्र, १।१।१६।। सम्बन्धिसखिश्रोत्रिय-राजदारवर्जमिति गोणिकापुत्रः। (तदेव, १।५।३१।।)

४. पतञ्जजि–व्याकरणमहाभाष्यम्, ८।२।१०६।।

५. सौर्यं नाम नगरं, तत्रत्येनाचार्येणेदमुक्तम्। (कैयट–भाष्यप्रदोप, ८।२।१०६।।)

६. सौर्यं च नगरम्, कैतवतं च ग्रामः। (काशिका, २।४।७।।)

महत् प्रामाणिकत्वम्प्रतीयते। पतञ्जलेराचार्यस्य लेखादिदमपि ज्ञायते यत् सौर्यं आचार्यः वाडवाचार्यादर्वाचीनोऽस्ति।

## ११. कुणरवाडवः

व्याकरणमहाभाष्ये भगवता पतञ्जलिना कुणरवाडवस्याऽऽचार्यस्य मतं द्विधा समुद्धृतम्। तथा हि—

'कुणरवाडवस्त्वाह[१]—नैषा शंकरा, शंगरैषा। गृणातिः शब्दकर्मा। तस्यैषः प्रयोगः।'

कुणरवाडवस्त्वाह[२]—नैष वहीनरः। कस्तर्हि? विहीनर एषः। विहीनो नरः कामभोगाध्याम् विहीनरः विहीनरस्यापत्यं वैहीनरिः।

अत्र श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयेनैकः प्रश्नः समुत्थापितो यत् किं पूर्वोक्तवाडव एव कुणरवाडवो भवितुमर्हति? किन्तु कुणरवाडवोऽयमन्यो वैयाकरणः वाडवश्चाऽन्यः इत्येव स्वीकर्तव्यः।

## १२. भवन्तः (?)

भगवता पतञ्जलिना व्याकरणमहाभाष्ये उक्तम्—

'इह भवन्तस्त्वाहुः[३]—न भवितव्यमिति।'

पतञ्जलिनाऽत्र 'भवन्तः' पदेन कस्याऽऽचार्यस्य केषामाचार्याणां वा मतं समुद्धृतमिति न सम्यग् ज्ञायते। भर्तृहरिणा स्वकीयमहाभाष्यदीपिकायां चतुर्षु स्थानेषु 'इह भवन्तस्त्वाहुः' इति निर्देशं विधाय कानिचिन्मतान्युद्धृतानि। महाभाष्यदीपिकायां 'इन्द्रभवस्त्वाहुः' इति पाठो दृश्यते। किन्तु पाठोऽयं शुद्धो नास्तीति प्रतीयते। पतञ्जलिर्भर्तृहरिश्च कस्यचिदेकस्यैवाचार्यस्य मतं समुद्धरतो, भिन्नस्याऽऽचार्यस्य वेत्यपि विचारणीयमस्ति। एतद्व्यतिरिक्तं महाभाष्ये 'अन्य' 'अपर' प्रभृतिभिः शब्दैरनेकेषामाचार्याणां मतान्युद्धृतानि, किन्तु तेषामाचार्याणां किं नामासीदिति न सम्यग् ज्ञायते।

॥ इति संस्कृतव्याकरणशास्त्रेतिह्यविमर्शे अष्टाध्यायिवार्तिककारवर्णनं-नाम सप्तमोऽध्यायः॥

---

१. पतञ्जलि-व्याकरणमहाभाष्यम्, ३।२।१४॥

२. तदेव, ७।३।१॥

३. तदेव, ३।१।८।

# अथाऽष्टमोऽध्यायः

# वार्तिकभाष्यकारवर्णनम्

## भाष्यलक्षणम्

विष्णुधर्मोत्तरपुराणस्य तृतीयखण्डस्य चतुर्थाध्याये भाष्यस्याऽधोलिखितं लक्षणमुक्तम्—

'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥

यस्मिन् ग्रन्थे सूत्रार्थः सूत्रानुसारिवाक्यानां, स्वपदानां च व्याख्यानं विधीयते, तं ग्रन्थं भाष्यविदः 'भाष्य' नाम्ना वदन्ति।

भगवता पतञ्जलिना महाभाष्ये द्विधा उक्तम्—

'उक्तो[1] भावभेदो भाष्ये।,

विषयेऽस्मिन् कैयटादयष्टीकाकाराणां मतमस्ति यदत्र 'भाष्य' पदेन 'सार्वधातुके[2] यक्' सूत्रस्थमहाभाष्यस्य संकेतोऽस्ति, किन्तु श्री पं० युधिष्ठिरमीमांसक महोदय-मतानुसारेण पतञ्जलेः संकेतोऽत्र कश्चित्प्राचीनं भाष्यग्रन्थं प्रत्यस्ति[3]।

व्याकरणमहाभाष्यावलोकनेन ज्ञायते यन्महाभाष्यात् पूर्वं वार्तिकेष्वनेके भाष्यग्रन्थाः प्रणीता आसन्। ते सम्प्रति नोपलभ्यन्ते। महाभाष्येऽनेकेषु स्थलेषु 'अपर आह' इत्युक्त्वा वार्तिकानामनेकाः विभिन्नाः व्याख्या समुद्धृताः। तथा हि—

---

१. पतञ्जलि–व्याकरणमहाभाष्यम्, ३।३।१९॥ ३।४।६७॥

२. पाणिनि–अष्टाध्यायी ३।१।६७॥

३. पं० युधिष्ठिर मीमांसक–संस्कृत व्याकरण शास्त्रका इतिहास, भाग १ पृ० ३२६–३२७, सं० २०३०।

'अभ्रू कुंसादीनामिति वक्तव्यम्[१]। भ्रुकुंसः भ्रूकुंसः, भ्रुकुटिः, भ्रूकुटिः। अपर आह-अकारो भ्रूकुंसादीनामिति वक्तव्यम्। भ्रकुंसः भ्रकुटिः।'

व्याकरणमहाभाष्ये 'सिद्धमनच्त्वात्' वाक्यापरिसमाप्तेर्वा' इति बार्तिकद्वयस्य द्वे व्याख्ये समुद्धृते। तथा हि[१]—

'सिद्धमनच्त्वात् सिद्धमेतत्। कथम्? अनच्त्वात् कथमनच्त्वम्? ''स्पृष्टं स्पर्शानां करणम्'। 'ईषत्स्पृष्टमन्तस्थानाम्।' 'विवृतमूष्मणाम्' ईषदित्यनुवर्तते। स्वराणां च' विवृतम् ईषदिति निवृत्तम्। ※ वाक्यापरिसमाप्तेर्वा*वाक्यापरिसमाप्तेर्वा पुनः सिद्धमेतत्। किमिदं वाक्यापरिसमाप्तेरिति? वर्णानामुपदेशस्तावद्। उपदेशोत्तरकालेत्संज्ञा। इत्संज्ञोत्तरकाल 'आदिरन्त्येन सहेता' इति प्रत्याहारः। प्रत्याहारोत्तरकाला सवर्णसंज्ञा सवर्णसंज्ञोत्तरकालम् 'अणुदित् सवर्णस्य चाप्रत्ययः' इति सवर्णग्रहणम्। एतेन सर्वेण समुदितेन वाक्येनान्यत्र सवर्णानां ग्रहणं भवति। न चात्रेकारः शकारं गृह्णाति।

अपर आह-*सिद्धमनच्त्वात् ※ सिद्धमेतत्। कथम्? अनच्त्वात्। कथमनच्त्वम्? * वाक्यापरिसमाप्तेर्वा ※ उक्ता वाक्यापरिसमाप्तिः[२]

व्याकरणमहाभाष्ये 'समर्थतराणां वा' इति वार्तिकस्य तिस्रो व्याख्याः दृश्यन्ते। तथा हि[३]—

※समर्थतराणां वा ※ समर्थतराणां वा पदानां समासो भविष्यति। कानि पुनः समर्थतराणि? यानि द्वन्द्वभावीनि। कुत एतत्? एषां ह्याशुतरा वृत्तिः प्राप्नोति। तद्यथा-'समर्थतरोऽयं माणवकोऽध्ययनाय' इत्युच्यते 'आशुतरग्रन्थः' इति गम्यते।

---

१. पतञ्जलि-व्याकरण महाभाष्यम्, ६।३।६१॥

२. पतञ्जलि-व्याकरणमहाभाष्यम्, १।१। आ० ४।सू० १०॥

३. तदेव, २।१।आ०।१।सू० १॥

अपर आह-समर्थतराणां वा पदानां समासो भविष्यति। कानि पुनः समर्थतराणि ? यानि द्वन्द्वभावीनि। कुत एतद् ? समानविभक्तीन्येतानि, अन्यविभक्ती राजा। भवति विशेषः स्वस्मिन् भ्रातरि पितृव्यपुत्रे च।

* समुदायसामर्थ्याद्वा सिद्धम् ॐ समुदायसामर्थ्याद्वा पुनः सिद्धमेतत्। समुदायेन राज्ञः सामर्थ्यं भवति, नावयवेन।

अपर आह--ॐसमर्थतराणां वा समुदायसामर्थ्यात्। ॐ समर्थतराणां वा पदानां समासो भविष्यति। कुत एतत् ! समुदायसामर्थ्यादिव ॥'

एतैरुद्धरणैः स्पष्टीभवति यन्महाभाष्यात् पूर्वं वार्तिकेष्वनेकाः व्याख्याः प्रणीता आसन्। केवलं कात्यायनीयवार्तिकाणां न्यूनातिन्यूनं तिस्रो व्याख्याः महाभाष्यात् पूर्वमवश्यमेव विद्यमाना आसन्नित्यनुमीयते। एवमेव भारद्वाज-सौनाग-प्रभृति-वार्तिकेष्वप्यनेके भाष्यग्रन्थाः प्रणीता इत्यपि सम्भाव्यते। किन्त्वेषा महती प्राचीना ग्रन्थराशिः सम्प्रति सर्वथा विलुप्ता, नैतेषां ग्रन्थानां ग्रन्थकाराणां वा नामानि ज्ञायन्ते। आचार्येण भर्तृहरिणा स्वकीये वाक्यदीयेऽनेकेषां भाष्याणां स्थितिः सूचिता। तथाहि—

'सूत्राणां सानुतन्त्राणां[1] भाष्याणाञ्च प्रणेतृभिः।'

व्याकरणमहाभाष्यप्रणयनान्तरमप्यनेकैर्विद्वद्भिर्वार्तिकानां व्याख्याः प्रणीताः, परन्तु तासु केवलं पितृणामेव व्याख्यानां तद्व्याख्यातॄणां च विवरणमुपलभ्यते, तदत्र संक्षेपेणोपस्थाप्यते।

## १. हेलाराजः

हेलाराजप्रणीतवाक्यपदीयटीकावलोकनेन ज्ञायते यत्तेन वार्तिक-पाठस्य 'वार्तिकोन्मेष' नाम्नी व्याख्या प्रणीता। तेनोक्तम्—

'वाक्यकारस्यापि तदेवं[2] दर्शनमिति वार्तिकोन्मेषे कथितमस्माभिः।'

---

१. भर्तृहरि—वाक्यप्रदीयम्, ब्रह्मकाण्डम्, २३।

२. हेलाराज—वाक्यप्रदीयम्, तृतीयकाण्डटीका, पृ० ४४३, काशीसंस्करणम्।

'वार्तिकोन्मेषे विस्तरेण[1] यथातत्त्वमस्माभिर्व्याख्यातमिति तत एवावधार्यम् ।'

वार्तिकोन्मेषे यथागमं[2] व्याख्यातम्, तत एवावधार्यम् ।'

'वार्तिकोन्मेष' ग्रन्थः सम्प्रति नोपलभ्यते ।

श्रीहेलाराजेन वाक्यतदीयस्य तृतीयकाण्डस्य स्वटीकाया अन्ते स्वकीयः परिचयोऽधोलिखितप्रकारेण प्रदत्तः—

मुक्तापीड इति प्रसिद्धिमगमत् काश्मीरदेशे नृपः,
श्रीमान् ख्यातयशा बभूव नृपतेस्तस्य प्रभावानुगः ।
मन्त्री लक्ष्मण इत्युदारचरितस्तस्यान्ववाये भवो
हेलाराज इमं प्रकाशमकरोच्छ्रीभूतिराजात्मजः ॥[3]

अनेनोल्लेखेन ज्ञायते यत् काश्मीरमहाराजस्य मुक्तापीडस्य मन्त्रिणो लक्ष्मणस्य कुले हेलाराजो जन्म लेभे । हेलाराजस्य पितुर्नाम श्रीभूतिराज आसीत् ।

लक्ष्मणभूतिराजयोः समये कियदान्तर्यमस्तीति न ज्ञायते । अत एव हेलाराजस्य निश्चितः कालः क इत्यवगन्तुं न शक्यते सारल्येन । श्रीमता अभिनवगुप्तेन स्वकीये गीताभाष्ये भूतिराजपुत्रः भट्ट इन्दुराजो स्वगुरुत्वेनाऽभिहितः । भूतिराजोऽयं हेलाराजपिता भूतिराजस्तद्भिन्नो वेति न ज्ञायते । यद्युभयोरैक्यं स्यात्तर्हि भट्ट इन्दुराजो हेलाराजस्य भ्राता भविष्यति । अत एव हेलाराजस्य कालः वैक्रमैकादशशतकारम्भः स्वीकर्तुं शक्यते ।

## ३. राघवसूरिः

'राघवसूरि' नामाभिधेयविदुषा वार्तिकानां 'अर्थप्रकाशिका' नाम्नी व्याख्या लिखिता । अस्य हस्तलेखो मद्रासराजकीयलेखसंग्रहे समुपलभ्यते[1] । अस्य कालविषये न किञ्चिज्ज्ञायते ।

---

१. हेल—वाक्यपदीयम्, तृतीयकाण्डीका, पृ० ४४४ ।

२. तदेव, पृ० ४४६ ।

३. द्र०-मद्रास राजकीय हस्तलेखसंग्रह सूचीपत्र भाग ४, खण्ड १ G पृ० ५८०४ ग्रन्थाङ्क ३९१२ B. ।

## ३. राजरुद्रः

'राजरुद्र' नामाभिधेयविदुषा काशिकावृत्तौ समुद्धृतश्लोकवार्तिकानां व्याख्या प्रणीता। राजरुद्रस्य पितुर्नाम 'गन्नय' आसीत्। ग्रन्थस्याऽन्तेऽधोलिखितः पाठ उपलभ्यते :—

'इति राजरुद्रिये (काशिका) वृत्तिश्लोकव्याख्यानेऽष्टमाध्यायस्य चतुर्थःपादः।

अस्यैको हस्तलेखः मद्रासराजकीयपुस्तकालयस्य हस्तलेखसंग्रहे विद्यते[1]। अस्य ग्रन्थकारस्य कालविषये न किञ्चिज्ज्ञायते।

॥ इति संस्कृतव्याकरणशास्त्रैतिह्यविमर्शे वार्तिकभाष्यकारवर्णन नामाऽष्टमोऽध्यायः॥

———

१. द्र०–मद्रास राजकीय पुस्तकालय हस्तलेख संग्रह सूचीपत्र, भाग ४, खण्ड १, C, पृष्ठ ५८०३, ग्रन्थाङ्क ३९१२ A.।

## अथ नवमोऽध्यायः

# काशिकावृत्तिव्याख्यातृवर्णनम्

'काशिका' इत्यभिधेयस्य वृत्तिग्रन्थस्याऽनेकाः टीकाः प्रणीताः वैयाकरणैर्विद्वद्भिस्तत्रानेकाः सम्प्रति न प्राप्यन्ते। अत्र प्रामुख्यमभजमानानां टीकाकाराणां परिचय उपस्थाप्यते।

## १. आचार्यो जिनेन्द्रबुद्धिः

काशिकावृत्तेर्यावत्यो व्याख्या उपलभ्यन्ते परिज्ञाताः वा सन्ति, तासु बोधिसत्त्वदेशीयाऽऽचार्यजिनेन्द्रबुद्धिपादप्रणीता 'काशिकाविवरणपञ्जिका' अथवा 'न्यास' इत्यपरनाम्ना प्रसिद्धा सर्वप्राचीना महत्त्वपूर्णा चास्ति। न्यासकारोऽयं बौद्धमतस्य प्रामाणिक आचार्य आसीत्।

**कालः**—न्यासकारेण किञ्चिन्मात्रमपि स्वकीयः परिचयो न प्रदत्तः, अतस्तस्येतिवृत्तं सर्वथाऽन्धकारावृतमस्ति। न्यासकारस्य कालनिर्णयविषये कानिचित् तथ्यान्यत्र प्रस्तूयन्ते—

१. श्रीहरदत्तेन पदमञ्जर्यां (४।१।४२) न्यासकारस्य नामनिर्देशपूर्वकमुल्लेखः कृतोऽस्ति। हरदत्तस्य कालः वैक्रमद्वादशशतकस्य प्रथमचरणमस्ति। अतो हरदत्तात् पूर्वमेव न्यासकारस्य सत्ता स्वीकर्तुं शक्यते।

२. महाभाष्यटीकाकारः कैयटो हरदत्तात् पूर्ववर्ती। कैयटजिनेन्द्रबुद्धिपादयोरनेकानि वचनानि समानान्यवलोक्य मन्यन्ते विद्वांसो यदेतयोरेकोऽपरमनुकरोति, किन्तु न केनाऽपि कस्यचिन्नाम गृहीतम्। उदाहरणार्थम्—

**न्यासः**—'द्वयोरिकारयोः[१]प्रश्लेषनिर्देशः। तत्र यो द्वितीय इवर्णः स ये [ विभाषा ] इत्यात्त्वबाधा यथा स्यादित्येवमर्थः।'

---

१. जिनेन्द्रबुद्धि—न्यास, ३।१।१११।

**प्रदीपः**—दीर्घोच्चारणे[1] भाष्यकारेण प्रत्याख्याते केचित् प्रश्लेषनिर्देशेन द्वितीय ईकारो ये विभाषा ( ६।४।४३ ) इत्यात्त्वस्य पक्षे परत्वात् प्राप्तस्य बाधनार्थ इत्याहुः। तदयुक्तम्। क्यप्सन्नियोगेन विधीयमानस्येत्वस्यान्तरङ्गत्वात्।'

**न्यासः**—'अनित्यता' पुनरागमशासनस्य घोर्लोपो लेटि वा (७।३।७०) इत्यत्र वाग्रहणलिङ्गाद विज्ञायते। तद्धि ददत् ददात् इत्यत्र नित्यं घोर्लोपो मा भूदित्येवमर्थं क्रियते। यदि च नित्यमागमशासनं स्याद् वाग्रहणमनर्थकं स्यात्। भवतु नित्यो लोपः। सत्यपि तस्मिन् लेटोऽडाटौ ( ३।४।९४ ) इत्यटि कृते ददत् ददादिति सिद्धत्येव। अनित्यत्त्वे त्वागमशासनस्याडागमाभावान्न सिध्यति, ततो वावचनमर्थवद् भवति।'

**प्रदीपः**—केचित्त्वनित्यमागमशास[3]नमित्यस्य ज्ञापकं वाग्रहणं वर्णयन्ति। अनित्यत्वात्तस्याट्यसति ददादिति न स्यादिति। तत्सिद्धये वाग्रहणं क्रियमाणमेनां परिभाषां ज्ञापयति।'

उद्धरणानामेतेषां पारस्परिकतुलनया स्पष्टं प्रतीयते यदुभयत्र कैयटः 'केचित्' पदेन न्यासकारं हरदत्तं निर्दिशति। अतोऽनुमीयते हरदत्तः कैयटात् पूर्ववर्ती, तस्माच्च न्यासकारः।

३. डॉ० याकोबीमहोदयेन भविष्यत्पुराणमाश्रित्य हरदत्तस्य देहावसानकालः ८७८ ईशवीयः ( सं० ९२५ वै० ) स्वीकृतः यदि हरदत्तस्य तिथिरियं प्रमाणान्तरेण परिपुष्टं भवेत् तर्हि न्यासकारस्य कालः सं० ९०० वैक्रमाब्दात् पूर्वं स्वीकर्तव्यो भविष्यति।

४. हेतुबिन्दुटीकायां श्री अर्चटमहोदयनोक्तम्—

---

१. कैयट—महाभाष्यप्रदीप, ३।१।१११।

२. जिनेन्द्रबुद्धि—न्यास, ७।१।१।

३. कैयट—महाभाष्य प्रदीप, ७।३।७०।

४. जर्नलरायल एशियाटिक सोसाइटी, बम्बई, भाग २३, पृ० ३१।

'यदा ह्याचार्यस्या[1]ऽप्येतदभिमतमिति कैश्चिद् व्याख्यायते·····।'

वचनमिदं व्याचक्षाणेन् श्रीपण्डितदुर्वेकमिश्रेण स्वकीयायां 'आलोक' टीकाया-मुक्तम्—

'कैश्चिदिति[2]ईश्वरसेनजिनेन्द्रभूतिभिः।'

यद्यर्चटस्य 'कैश्चित्' पदेन ईश्वरसेनं जिनेन्द्रबुद्धिं प्रति च निर्देशः पण्डित-दुर्वेकमिश्रकृतव्याख्यानानुसारं स्वीक्रीयते तर्हि न्यासकारस्य कालः सप्तमेशवीयशतकं भविष्यति, अर्चटस्य सप्तमेशवीयशतकान्तभागे स्थितत्त्वात्।

५. न्यासस्य सम्पादकेन श्रीशचन्द्रचक्रवर्तीमहोदयेन महाकविमाघप्रणीतशिशु-पालबधमहाकाव्यस्य 'अनुत्सूत्रपदन्यासा' इति श्लोकमाश्रित्य न्यासकारस्य कालः सन् ७२५–७५० ईशवीयः अर्थात् सं० ७८२–८०७ वैक्रमाब्दः स्वीकृतः। वस्तुतस्तु माघकाव्ये यत् 'अनुत्सूत्रपदन्यासा' इति न्यासस्य नामोपलभ्यते तत्त्वन्यस्य न्यासकारस्य सङ्केतोऽस्ति, यतो हि व्याकरणनिकायेऽनेके न्यासकाराः प्रसिद्धाः सन्ति। भामहेन स्वकीयालङ्कारशास्त्रे लिखितम्:—

'शिष्टप्रयोगमात्रेण न्यासकारमतेन वा।
तृचा समस्तषष्ठीकं न कथञ्चिदुदाहरेत्॥
सूत्रज्ञापकमात्रेण वृत्रहन्ता यथोदितः।
अकेन च न कुर्वीत वृत्तिस्तदगऽमको यथा॥'

एतेषु श्लोकेषु स्मृतो न्यासकारो जिनेन्द्रबुद्धिर्नास्ति। यतो हि तस्य सम्पूर्णे न्यासे कुत्रचिदपि 'जनिकर्तुः[3] प्रकृतिः' इति सूत्रस्य ज्ञापकेन 'वृत्रहन्ता' पदे समासविधानं न विहितम्। अतः केवलं 'न्यास' नाम्न उल्लेखेन भामहः जिनेन्द्र-बुद्धिपादादुत्तरवर्ती न भवितुमर्हति।

६. किञ्च सं० १११४–११६५ वैक्रमाब्दमध्यवर्तिना मैत्रेयरक्षितेन न्यासस्य 'तन्त्रप्रदीप' नाम्नी व्याख्या कृता।

---

१. अर्चट—हेतुबिन्दु टीका, पृ० २१८, बड़ौदा संस्करण।

२. दुर्वेकमिश्र—हेतुबिन्दु-आलोक, पृ० ४०१, बड़ौदा संस्करण।

३. पाणिनि—अष्टाध्यायी, १।४।३०।

अतो न्यासकारस्य श्रीजिनेन्द्रबुद्धिपादस्य समयः वैक्रमैकादशतकमिति स्वीकर्तुं शक्यते ।

**न्यासस्य व्याख्याकारः—**

मैत्रेयरक्षितेन न्यासस्य महती व्याख्या लिखिता या 'तन्त्रप्रदीप' नाम्ना व्यवहृता वर्तते । सौभाग्यादस्य हस्तलेखः कलकत्ताराजकीयपुस्तकालये सुरक्षितोऽस्ति ।[1] मैत्रेयरक्षितो हि व्याकरणशास्त्रस्याऽसाधारणः पण्डित आसीत् । सः पाणिनीयादि-व्याकरणस्योद्भटो विद्वानासीत् । तेनोक्तम् स्वकीये धातुपाठे—

'वृत्तिन्यासं समुद्दिश्य कृतवान् ग्रन्थविस्तरम् ।
नाम्ना तन्त्रप्रदीपं यो विवृतास्तेन धातवः ॥
आकृष्य भाष्यजलधेरथ धातु नाम
पारायणक्षपणपाणिनिशास्त्रवेदी ।
कालापचान्द्रमततत्त्वविभागदक्षो
धातुप्रदीपमकरोज्जगतो हिताय ॥'

न्यासस्योपरि मैत्रेयरक्षितप्रणीतस्य 'तन्त्रप्रदीपस्या' ऽधोलिखिताः टीकाः जाताः—

१—श्रीवाणेश्वरमिश्रसुतेन श्रीनन्दनमिश्रन्यायवागीशेन 'तन्त्रप्रदीपस्य' 'तन्त्रप्रदीपोद्योतन' नाम्नी टीका विलिखिता । ग्रन्थस्याऽस्य प्रथमाध्यायस्यैको हस्तलेखः कलकत्ताराजकीयपुस्तकालये समुपलभ्यते ।[2] पुरुषोत्तमदेवप्रणीतपरि-भाषा वृत्तिसम्पादकेन श्रीदिनेशचन्द्रभट्टाचार्येण यस्य हस्तलेखस्य वर्णनं विहितम्[3],

---

१. 'द्र०—बंगालगवर्नमेण्ट की आज्ञानुसार पं० राजेन्द्रलाल सम्पादित सूचीपत्र भाग ६, पृ० १४०, ग्रन्थाङ्क २०७६ ।

२. पं० राजेन्द्रलाल सम्पादित कलकत्ता राजकीय पुस्तकालय सूचीपत्र, भाग ६, पृ० १५०, ग्रन्थाङ्क २०८३ ।

३. 'इतिधनेश्वरमिश्रतनयश्रीनन्दनमिश्र विरचिते न्यासोद्दीपने····
( श्रीदिनेशचन्द्र भट्टाचार्य सम्पादित पुरुषोत्तमदेवीय परिभाषावृत्ति भूमिका, पृ० १८, राजशाही संस्करण )

तदनुसारं श्रीनन्दनमिश्रस्य पितुर्नाम श्रीधनेश्वरमिश्रः, तट्टीकाग्रन्थस्य च नाम 'न्यासोद्दीपन' मस्ति ।

२—श्रीसनातनतर्काचार्यनामाभिधेयविदुषा तन्त्रप्रदीपस्य 'प्रभा' नाम्नी टीका विलिखिता । प्रो० कालीचरणशास्त्री हुबली महोदयेन भारतकौमुद्याः द्वितीयभागे प्रकाशिते मैत्रेयरक्षितविषयके लेखे तट्टीकाग्रन्थस्योल्लेखो विहितः ।

३—केनचिदज्ञातनामाभिधेयविदुषा तन्त्रप्रदीपस्य 'आलोक' नाम्ना टीका प्रणीता । अस्या उल्लेखोऽपि प्रो० कालीचरणशास्त्रिण उपर्युक्ते निबन्धेऽस्ति ।

चतुर्दशवैक्रमशतकोत्तरार्धजातेन मल्लिनाथेन न्यासस्य 'न्यासोद्योत' नाम्नी टीका प्रणीता ।[1] मल्लिनाथः साहित्यस्य व्याकरणस्य चोत्तमो विद्वानासीदिति तस्य काव्यटीकाभ्यः स्फुटं ज्ञायते ।

नरपतिमहामिश्रनामाभिधेयविदुषा न्यासस्योपरि 'न्यासप्रकाश' नाम्नी टीका विलिखिता । अस्य प्रारम्भिकभागस्यैको हस्तलेखो जम्मूस्थितरघुनाथमन्दिरसंग्रहे वर्तते ।[2] नरपति महामिश्रस्य कालः १४००-१४५० ईशवीयोऽस्ति[3] ।

पञ्चदशेशवीयशतके समुत्पन्नेन[4] श्रीमच्छ्रीकान्तपण्डितात्मजेन[5] पुण्डरीकाक्ष-

---

१. उक्तं च न्यासोद्योते—न केवलं श्रूयमाणैव क्रिया निमित्तं कारकभावस्य, अपि तु गम्यमानाऽपि । (मल्लिनाथ-किरातार्जुनीयटीका २।१७, पृ० २४, निर्णयसागर संस्करण ।)

द्र०—सायण-धातुवृत्ति, पृष्ठ ३१, २१९ काशी संस्करण ।

२. द्र० जम्मूरघुनाथमन्दिर संग्रह सूचीपत्र, पृ० ४१ ।

३. दिनेशचन्द्रभट्टाचार्य (सम्पादक)—पुरुषोत्तमदेवीय परिभाषावृत्ति भूमिका, पृ० १६, राजशाही संस्करण ।

४. दिनेशचन्दभट्टाचार्य (सम्पादक)—पुरुषोत्तमदेवीय परिभाषावृत्ति, भूमिका, पृ० १८ वीरेन्द्र रिसर्च सोसाइटी, राजशाही बंगाल ।

५. इति महामहोपाध्यायश्रीमच्छ्रीकान्तपण्डितात्मजश्रीपुण्डरीकाक्षविद्यासागरभट्टाचार्यकृतायां भट्टिटीकायां कलापदीपिकायाम्…….।

विद्यासागरनामाभिधेयविदुषा न्यासस्य टीका लिखिता। अस्या उल्लेखो ग्रन्थकारेण स्वयमेव 'कातन्त्रप्रदीप' नाम्न्याः कातन्त्रटीकायांविहितः। तथाहि—

'तच्चिन्त्यमिति न्यासटीकायां प्रपञ्चितमस्माभिः।'

श्रीसर्वानन्देन अमरटीकासर्वस्वे रत्नमतेः समुद्धृतेऽधोलिखिते पाठे तच्छब्देन न्यासोऽभिप्रेतश्चेदिदं स्वीकर्तुं शक्यते यद् रत्नमतिनामाभिधेयविदुषा न्यासोपरि कश्चिट्टीका ग्रन्थः प्रणीत आसीत्—

'न तु संशयवति पुरुष इति न्यासः। अतः सप्तम्यर्थे बहुव्रीहिः। संशयकर्तरि पुरुष एवेति तद्रत्नमतिः।[1]'

## २. इन्दुमित्रः

इन्दुमित्र नामाभिधेयेन वैयाकरणेन काशिकायाः 'अनुन्यास'—नाम्नी व्याख्या प्रणीतेति माधवीया धातुवृत्ति[2]-उज्ज्वलदत्तप्रणीतोणादिवृत्ति[3]-सीरदेवीयपरिभाषावृत्ति[4]-दुर्घटवृत्ति[5]-प्रक्रियाकौमुदीप्रसादटीका[6]-अमरटीकासर्वस्वादि[7] ग्रन्थावलोकनेन ज्ञायते।

---

१. सर्वानन्द—अमरटीकासर्वस्व, ३।१।५. भाग ४, पृ० ३, त्रिवेन्द्रम् संस्करण।
२. सायण—माधवीया धातुवृत्ति, पृ० २०१, काशी संस्कृत सीरिज नं० १०३ संस्करण, १९३४।
३. उणादिवृत्ति (उज्ज्वलदत्त)—पृ० १, ५५, ८८, जीवानन्दविद्यासागर संस्करण, कलकत्ता।
४. परिभाषावृत्ति (सीरदेव), पृ० २८, ७९, ब्रजभूषणदास कम्पनी, काशी, सन् १८८७।
५. दुर्घटवृत्ति (सम्पादक-गणपति शास्त्री), पृ० १२०, १२३, २२६ त्रिवेन्द्रम्, सन १९२४।
६. प्रक्रियाकौमुदी, प्रसादटीका, भाग १, पृ० ६१०, भाग २, पृ० १४५, भण्डारकर ओरियन्टल रिसर्च इन्स्टीट्यूट, पूना।
७. अमरटीकासर्वस्व भाग १, पृ०६१०, भाग २, पृ०३३६, त्रिवेन्द्रम् संस्करण।

श्री आफ्रेरूट महोदयेन स्वकीये बृहत्सूचीपत्रे 'अनुन्यास' नाम्ना तन्त्रप्रदीपस्योल्लेखो विहिताः[1], स सर्वथा चिन्त्य एव प्रतीयते। सीरदेवेन परिभाषावृत्तौ अनुन्यासकारतन्त्रप्रदीपकारयोः शाश्वतिको विरोधः सूचितः। तथाहि—

'एतस्मिन् वाक्ये इन्दुमैत्रेययोः[2] शाश्वतिको विरोध.'

'उपदेशग्रहणानुवर्तनं[3] प्रति रक्षितानुव्यासयोर्विवाद एव।'

अनेके ग्रन्थकाराः इन्दुमित्रं 'इन्दु' नाम्नाऽपि स्मरन्ति। एकः 'इन्दुः' क्षीरस्वामिकृतायाममरकोषव्याख्यायामप्युद्धृतः। किन्तु सः वाग्भट्टस्य साक्षाच्छिष्यः आयुर्वेदशास्त्रग्रन्थकारः वैयाकरणादिन्दोश्च सर्वथा भिन्न एव।

श्रीसीरदेवेन स्वकीयायां परिभाषावृत्तौ, अनुन्यासकारमैत्रेययोरघोलिखितः पाठ उद्धृतः—

'अनुन्यासकार--प्रत्ययसूत्रे अनुन्यासकार उक्तवान् प्रतियन्त्यनेनार्थानिति प्रत्ययः, एरच् (३।३।५९) इत्यच्, पुंसि संज्ञायां घः प्रायेण (३।३।११८) इति ना घ[4] इति।'

मैत्रेय—मैत्रेयः पुनराह—पुनराह—पुंसि संज्ञायां (३।३।११८) इति घ एव। एरच् (३।३।५९) इत्यच् प्रत्ययस्तु करणे ल्युटा बाधितत्वान्न शक्यते कर्त्तुम्। न च वा सरूपविधिरस्ति, कृतल्युडित्यादिवचनात्[5]।'

पूर्वोद्धृतयोरनुन्यासकारमैत्रेययोरुभयोरपि पाठयोः पारस्परिकतुलनया प्रतीयते यद् मैत्रेयरक्षितोऽनुन्यासकारं खण्डयति। अतः इन्दुमित्रो मैत्रेयरक्षितात् पूर्ववर्त्ती वर्तते। इन्दुमित्रप्रणीतग्रन्थस्य 'अनुन्यास' संज्ञया ज्ञायते यद् ग्रन्थोऽयं न्यासानन्तरं रचितः। अतः स्थूलरूपेणेदमेव वक्तुं शक्यते यदिन्दुमित्रस्य कालः सं० ८०० वैक्रमाब्दात् ११५० वैक्रमाब्दमध्यभागोऽस्ति।

---

१. आफ्रेरूट-वृहत् सूचीपत्र, भाग ५।

२. परिभाषावृत्ति (सीरदेव), पृ० ७९, व्रजभूषणदास कम्पनी, काशी, सन् सन् १८८७।

३. सीरदेव-परिभाषावृत्ति, व्रजभूषणदास कम्पनी, काशी, सन् १८८७।

४. तदेव, पृ० ७९।

५. तदेव, पृ० ७९।

इन्दुमित्रेण पाणिनीयाष्टाध्याय्याः 'इन्दुमती' नाम्नीवृत्तिरपि प्रणीतेति प्रक्रियाकौमुद्याः प्रसादटीकायां श्रीविट्ठलाचार्येणोद्धृतसमुद्धरणेन ज्ञायते । तथा हि—

'एतच्च[1] इन्दुमित्रमतेनोक्तम् । प्रत्यय इति सूत्रे प्रत्याय्यते ज्ञायतेऽर्थोऽस्मादिति प्रत्ययः । 'पुंसि संज्ञायां घः प्रायेण' इति घान्तस्य प्रत्ययशब्दस्यान्वर्थस्य निषेधो ज्ञापक इति भावः । तथा च इन्दुमत्यां वृत्तावुक्तम्—'प्रतेस्तु व्यञ्जनव्यवहितो य इति भवति निमित्तम्' इति केषाञ्चिन्मते प्रतेरपि भवति ।'

## (३) महान्यासकारः

केनचिदज्ञातनाम्ना वैयाकरणेन काशिकावृत्तेरुपरि 'महान्यास' नाम्नी टीका विलिखिता । अस्या अधोलिखितान्युद्धरणानि उज्ज्वलदत्तस्योणादिवृत्तौ, सर्वानन्दप्रणीतेऽमरटीकासर्वस्वग्रन्थे च समुपलभ्यन्ते—

१. टित्त्वमभ्युपगम्य गौरादित्वात् सूचीति महान्यासे[2] ।

२. वल्लतेः घञ्, ततष्ठन् इति महान्यासः[3] ।

३. चुल्लीति महान्यास इति उपाध्यायसर्वस्वम्[4] ।

एतेषु प्रथममुद्धरणं काशिकायाः (१।२।५०) 'पञ्चसूचिः' इत्युदाहरणस्य व्याख्यया समुद्धृतम् । द्वितीयोद्धरणस्य मूलमज्ञातमस्ति । उद्धरणद्वयमेतद् जिनेन्द्रबुद्धिप्रणीते न्यासे नोपलभ्यते । अतो महान्यासः ततः पृथगस्ति । महान्यासग्रन्थस्य कर्तुर्नाम न ज्ञायते । एको 'महान्यासः' क्षपणकव्याकरणोपर्यप्यासीदिति मैत्रेयेन तन्त्रप्रदीपे (४।१।१५५) सूचितम्[5] ।

---

१. प्रक्रियाकौमुदी, प्रसादटीका, भाग २, पृष्ठ १४५ ।

२. उज्ज्वलदत्त—उणादिवृत्ति, पृष्ठ १६५, जीवानन्द विद्यासागर, कलकत्ता ।

३. अमरटीकासर्वस्व (सर्वानन्द)—भाग २, पृष्ठ ३७९, गणपतिशास्त्री सम्पादित, त्रिवेन्द्रम् ।

४. तदेव, भाग ३, पृष्ठ २७७

५. द्र० धातुप्रदीप, (मैत्रेयरक्षित)—भूमिका, पृष्ठ १, वारेन्द्ररिसर्च सोसाइटी, राजशाही, बंगाल ।

श्रीसर्वानन्देन अमरटीकासर्वस्वग्रन्थस्य रचना शकाब्दे १०८१ अर्थात् सं० १२१६ वैक्रमाब्दे विहिता । यतो महान्यासकारस्य कालः सं० १२१६ वैक्रमाब्दात् पूर्वं स्वीकर्तुं शक्यते ।

## (४) विद्यासागरमुनिः

विद्यासागरमुनिना काशिकावृत्तेः 'प्रक्रियामञ्जरी' नाम्नी टीका लिखिता । टीकाग्रन्थोऽयं मद्रासराजकीयपुस्तकालयस्य संग्रहे उपलभ्यते ।[1] अस्यैको हस्तलेखः त्रिवेन्द्रम् नगरेऽप्युपलभ्यते ।[2] ग्रन्थस्यास्य प्रारम्भिको लेखोऽधोलिखितोऽस्तिः—

'वन्दे मुनीन्द्रान् मुनिवृन्दवन्द्यान्,
श्रीमद्गुरून् श्वेतागिरीन् वरिष्ठान् ।
न्यासकारवचः पद्मनिकरोद्गीर्णमम्बरे
गृह्णामि मधुप्रीतो विद्यासागरषट्पदः ॥

वृत्ताविति—सूत्रार्थप्रधानो ग्रन्थो भट्टनल्पूरप्रभृतिभिर्विरचितोवृत्ति···।'

उपरिनिर्दिष्टेनाऽनेन श्लोकेन ज्ञायते यद् विद्यासागरस्य गुरोर्नाम श्वेतगिरिरासीत् । अत्र पदमञ्जर्यास्तत्कर्तुर्वोल्लेखो नास्ति । अतः विद्यासागरमुनिर्हरदत्तात् प्राचीनः प्रतीयते, अस्य कालः सं० १११५ वैक्रमाब्दात् पूर्वं स्वीकर्तुं शक्यते ।

## (५) आचार्यो हरदत्तमिश्रः

हरदत्तमिश्रेण काशिकायाः 'पदमञ्जरी' नाम्नी व्याख्या लिखिताऽस्ति । पदमञ्जरीपर्यालोचनेन हरदत्तस्य प्रौढं पाण्डित्यं तद्वैशिष्ट्यञ्च प्रतिभाति । हरदत्तो न केवलं वैयाकरण एवाऽऽसीत्, किन्तु तेन योगसूत्र-गृह्यसूत्र-धर्मशास्त्रादीनाञ्च प्रामाणिकी व्याख्या कृताऽस्ति । पण्डितराज इव हरदत्तोऽप्यात्मनः प्रशंसातो न विरमति । तदुक्तम् तेन—

'प्रक्रियातर्कगहनप्रविष्टो[3]हृष्टमानसः । हरदत्तहरिः स्वैरं विहरन् केन वार्यते ?

---

१. द्र० मद्रास राजकीय हस्तलेख पुस्तकालयसूचीपत्र, भाग २, खण्ड १ पृष्ठ ३५०७, ग्रन्थांक २४९३ ।

२. द्र० त्रिवेन्द्रम् हस्तलेखसूचीपत्र भाग ३, ग्रन्थाङ्क ३३ ।

३. हरदत्त—पदमञ्जरी, भाग १, पृ० ४९ ॥

हरदत्तस्य पिता पद्मकुमारः, माता श्रीः, ज्येष्ठभ्राता अग्निकुमारः, गुरुश्चाऽपराजित आसीत्। तेनैवात्मनः परिचये स्वयमेव व्यलेखि—

'तातं पद्मकुमाराख्यं प्रणम्याम्बां श्रियं तथा।
ज्येष्ठं चाऽग्निकुमाराख्यमाचार्यमपराजितम्।'

हरदत्तो हि शैवमतावलम्बी द्रविडब्राह्मण आसीत्। सः पदमञ्जरीप्रथमश्लोकेन साम्बं सदाशिवं प्रणमति—

'तस्मै शिवाय परमाय दशाण्ययाय साम्बाय सादरमयं विहितः प्रणामः।'

पदमञ्जर्या अवलोकनेन ज्ञायते यद् हरदत्तो दरदत्तो दक्षिणदेशवासी[1] द्रविडदेशवासी[2] चाऽऽसीत्। हरदत्तस्याऽन्येभ्यो ग्रन्थेभ्यो ज्ञायते यत् सः चोलदेशान्तर्गतस्य 'कावेरी' व्याख्यायाः नद्याः कस्यचित् तटवर्तिनो ग्रामस्य निवासी द्रविडभाषाभाषी चाऽऽसीत्।[3]

**कालः**

हरदत्तः स्वकीयेषु ग्रन्थेषु नैवंविधायाः कस्याश्चिद् घटनाया उल्लेखः कृतोऽस्ति, यया तस्य समयनिर्णये निश्चितं ज्ञानं सम्भवेत्। तथाप्यनेकेषां ग्रन्थकाराणां पौर्वापर्यपर्यालोचनेन द्वादशशतकं तस्य कालो निर्णीयते[4]।

**कृतयः**

पदमञ्जरीपर्यालोचनया प्रतीयते यद् हरदत्तो महापद[5]मञ्जरीनामकं द्वितीयं,

---

१. यश्चिराय हरदत्तसंज्ञया विश्रुतो दशसु दिक्षु दक्षिणः। (तदेव, भाग १, पृ० १)

२. लेट् शब्दस्तु वृत्तिकारदेशे जुगुप्सितः, यथाऽत्र द्रविडदेशे निविशब्दः। (तदेव, भाग २, पृ० ५१९)

३. अनुष्ठानमपि चोलदेशे प्रायेणैनम्। (हरदत्त-गौतमधर्मसूत्रटीका, १४।४४)
यस्यां वसन्ति यामुपजीवन्ति। यथा तीरेण कावेरि तव। (हरदत्त-आपस्तम्ब गृह्यसूत्रटीका, १४६)
किलासः त्वग् दोषः तेमल् इति द्रविड भाषायां प्रसिद्धः। (हरदत्त-गौतमधर्म सूत्र टीका १।१८)

४. द्र०-प० युधिष्ठिर मीमांसक—संस्कृत व्याकरणशास्त्रका इतिहास, भाग १, पृ० ५१६, सं० २०३०॥

५. भाष्यवार्तिकविरोधस्तु महापदमञ्जर्यमस्माभिः प्रपञ्चितः।
(हरदत्त-पदमञ्जरी, १।१।२० पृ० ७२)

तृतीयञ्च परिभाषा[1]प्रकरणाख्यं कञ्चन ग्रन्थं लिखितवानासीत् । हरदत्तमिश्रस्याऽ-न्योलिखिताः ग्रन्था अपि प्रसिद्धाः—

१. आश्वलायनगृह्यसूत्रव्याख्या—अनाविला ।

२. गौतमधर्मसूत्रव्याख्या—मिताक्षरा ।

३. आपस्तम्बगृह्यसूत्रव्याख्या—अनाकुला ।

४. आपस्तम्बधर्मसूत्रव्याख्या—उज्ज्वला ।

५. आपस्तम्बगृह्यमन्त्रव्याख्या ।

६. आपस्तम्बपरिभाषाव्याख्या ।

७. एकाग्निकाण्डव्याख्या ।

८. श्रुतिसूक्तिमाला ।

## पदमञ्जर्याः व्याख्यातारौ

१ रङ्गनाथ यज्वा—चोलदेशनिवासिना नल्लादीक्षितसूरिपौत्रेण श्रीनारायणदीक्षितेन्द्रपुत्रेण श्रीरङ्गनाथयज्वना पदमञ्जर्याः 'मञ्जरी मकरन्द' नाम्नी टीका विलिखिता । टीकाया अस्या अनेके हस्तलेखाः मद्रास[2]-अडियार[3]-तञ्जोर-नगराणां[4] राजकीयपुस्तकालयेषूलभ्यन्ते । अडियारसूचीपत्रेऽस्या नाम 'परिमल' इति लिखितमस्ति । अस्य कालः वैक्रमाष्टादशशतकमध्यभागः ( प्रायः सं० १७४५ वि० ) स्वीक्रियते विद्वद्भिः ।

२. शिवभट्टः—श्रीशिवभट्टप्रणीतायाः पदमञ्जर्याः 'कुङ्कुमविलास'

---

१. एतच्चास्माभिः परिभाषाप्रकरणाख्ये ग्रन्थे उपपादितम् ।
(तदेव, भाग २, पृ० ४३७)

२. मद्रास राजकीयपुस्तकालयसूचीपत्र, भाग ४, खण्ड १८ पृष्ठ ५७०३, ग्रन्थाङ्क, ३८५१ ।

३. अडियारराजकीयपुस्तकालयसूचीपत्र, भाग २, पृष्ठ ७२ ।

४. तञ्जौरराजकीयपुस्तकालयसूचीपत्र, भाग १०, पृष्ठ ४१४९, ग्रन्थाङ्क ५४६६ ।

नाम्न्याः व्याख्याया उल्लेखः आफ्रेक्टमहोदयस्य बृहत्सूचीपत्रे समुपलभ्यते। अन्यत्राऽस्य टीकाग्रन्थस्यल्लेखो नोपलभ्यते अस्य ग्रन्थकारस्य कालो न ज्ञायते।

## (६) रामदेव मिश्रः

रामदेवमिश्रनामाभिधेयविदुषा काशिकायाः 'वृत्तिप्रदीप' नाम्नी व्याख्या लिखिताऽस्ति। अस्य हस्तलेखाः डी० ए० वी० कालेजान्तर्गते लाहौरपुस्तकालये मद्रास-तञ्जौरपुस्तकालयेषु चोपलभ्यन्ते।

श्रीराभदेवमिश्रप्रणीतस्य 'वृत्तिप्रदीपस्या'ऽनेकान्युद्धरणानि माधवीया धातुवृत्तौ समुपलभ्यन्ते[1]। अतो रामदेवमिश्रः सायणात् ( सं० १३७२-१४४४ ) पूर्ववर्तीवर्तते। सायणाचार्येण धातुवृत्तौ ५० तमे पृष्ठे लिखितम् 'हरदानुवादी राममिश्रोऽपि' अनेन प्रतीयते यद् रामदेवमिश्री हरदत्तादुत्तरवर्ती। अत एव श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयस्य मतानुसारेण श्रीरामदेवमिश्रस्य कालः सं० १११५ वैक्रमाब्दतः १४७० वैक्रमाब्दमध्ये स्वीकर्तुं शक्यते।

## (७) वृत्तिरत्नाकरः

त्रिवेन्द्रम्नगरस्थराजकीयपुस्तकालयसूचीपत्रे ( भाग ४, ग्रन्थाङ्क ५९ ) काशिकायाः 'वृत्तिरत्न' नाम्न्या उल्लेखोऽस्ति। एतत्कर्तुर्नाम न ज्ञायते।

## (८) चिकित्साकारः

श्रीआफ्रेक्टमहोदयेन स्वकीये बृहत् सूचीपत्रे काशिकायाः 'चिकित्सा' नाम्न्याः व्याख्याया उल्लेखो विहितः। अस्याः रचयितुर्नाम न ज्ञायते।

॥ इति संस्कृतव्याकरणशास्त्रैतिह्यविमर्शे काशिकावृत्तिव्याख्यातृवर्णनं नाम नवमोऽध्यायः॥

---

१. सायणा-माधवीया धातुवृत्ति, पृ० ३४, ५०, काशीसंस्कृत सीरिज नं० १०३, बनारस, सन् १९३४।

## अथ दशमोऽध्यायः

# व्याकरणमहाभाष्यटीकाकारवर्णनम्

व्याकरणमहाभाष्योपर्यनेकैर्विद्वद्भिष्टीकाः विलिखिताः, तास्वनेकाष्टीकाः सम्प्रति नोपलभ्यन्ते। अनेकेषां टीकाकाराणान्तु नामाऽपि न ज्ञायते। अत्र प्रामुख्यम्भजमानानां टीकाकाराणां परिचय उपस्थाप्यते—

## (१) आचार्यो भर्तृहरिः

संस्कृत व्याकरणपर्यालोचनया ज्ञायते यत् पतञ्जलिमुनिकृतस्य व्याकरणमहाभाष्यस्याऽनेके व्याख्यातारो बभूवुस्तेषु भर्तृहरिरप्यन्यतमः! भर्तृहरिविरचितायाः महाभाष्यटीकाया यावानंश उपलभ्यते, तदवलोकनेन स्पष्टं ज्ञायते यत् ततः पूर्वमपि महाभाष्येऽनेकाः व्याख्याः जाता आसन्। अत एव भर्तृहरिणाऽऽचार्येण 'अन्यै', 'अपरे', केचित्' इत्यादिशब्दैः प्राचीनटीकाकाराणां मतमुरन्यस्तं विद्यते। महाभाष्यस्योपलब्धासु टीकासु भर्तृहरेष्टीकाऽतिप्राचीना, प्रामाणिकी च वर्तते। वैयाकरणनिकाये पतञ्जलेरनन्तरं योगिराजोभर्तृहरिरेव सर्ववैयाकरणैः प्रमाणभूत आचार्यः स्वीक्रियते। भर्तृहरिणा च स्वकीयेषु ग्रन्थेषु न क्वचन आत्मनः परिचयो दत्तः। अतस्तद्विषयेऽस्माकं ज्ञानमत्यल्पमेव, किन्तु पुण्यराजेन भर्तृहरिगुरोर्नाम 'वसुरातं' इत्युक्तम्—

'न तेनाऽस्मद्गुरोस्तत्र[1]भवतो वसुरातादन्यः।'

अपि चोक्तम्—

'आचार्यवसुरातेन[2] न्यायमार्गान् विचिन्त्य सः।
प्रणीतो विविवच्चाऽयं मम व्याकरणागमः॥'

वर्धमानेनोक्तम्—

'यस्त्वयं वेदविदामलङ्कारभूतो[3] वेदाङ्गत्वात् प्रमाणितशब्दशास्त्रः सर्वज्ञमन्य उपमीयते तेन कथमेतत् प्रयुक्तम्।'

---

१. वाक्यपदीयस्य पुण्यराजटीका, पृ० २८४ वाराणसी।

२. तदेव, पृ० २९०।

३. वर्धमान-गणरत्नमहोदधि, पृ० १२३, भीमसेन शर्मा सम्पादित, इटावा।

वाक्यपदीयमहाभाष्ययोः पर्यालोचनया ज्ञायते यद् भर्तृहरिर्वैदिकधर्मावलम्बी विद्वानासीत्, अयमागमशास्त्रञ्च सर्वोपरि प्रमाणं मनुते। तथा चोक्तम् तेन वाक्यपदीये ब्रह्मकाण्डे—

'न चागमादृते[1] धर्मस्तर्केण व्यवतिष्ठते।'

अपि चोक्तम्—

'वेदशास्त्रविरोधी[2] च तर्कश्चक्षुरपश्यताम्।'

जैनविद्वान् वर्धमानसूरिर्गणरत्नमहोदधौ भर्तृहरिप्रणीतमहाभाष्यटीकामुद्धरन्नुवाच—

'यस्त्ववं वेदविदामलङ्कारभूतो[3] वेदाङ्गत्वात् प्रमाणितशब्दशास्त्रः सर्वज्ञमान्य उपमीयते तेन कथमेतत् प्रयुक्तम्।'

यत्तु चीनीयात्रिणा इत्सिङ्गेन स्वकीयभारतयात्राविषये लिखितम् यद् भर्तृहरिर्बौद्धधर्मानुयायी विद्वानासीत्। तेन सप्तवारं प्रव्रज्याग्रहणं कृतम्, तदनर्गलं प्रलपितमेव; नहि वेदविरोधी बौद्धविद्वानागमविहितं धर्मं विशुद्धं मन्तुं शक्नुयात्।

उत्पलेन स्वकीयायां 'ईश्वरप्रत्यभिज्ञाविमर्शिन्यां'—'तत्र भगवद्भर्तृहरिणाऽपि—'न सोऽस्ति प्रत्ययो लोके....' इत्यादिवाक्यपदीयस्य तिस्रः कारिकाः समुद्धरतोक्तम्—

'बौद्धैरपि अध्यवसायापेक्षं प्रकाशस्य प्रामाण्यं वदद्भिरुपगतप्राय एवायमर्थः।'

एभिः प्रमाणैः स्पष्टम् यद् भर्तृहरिर्बौद्धधर्मावलम्बी नाऽऽसीत्।

---

१. भर्तृ-वाक्यपदीयम्, १।४६।

२. तदेव, १।१३६।

३. वर्धमान-गणरत्नमहोदधि, पृ० १२३, भीनसेनशर्मा सम्पादित, इटावा।

कालः—भर्तृहरेराचार्यस्य कालविषये विद्वत्स्वद्यापि वैमत्यमवलोक्यते। केचित्तु इत्सिंगलेखानुसारं भर्तृहरेः समयो वैक्रमसप्तमशतकोत्तरार्द्धं इति मन्यन्ते। भारतीयजनश्रुतेरनुसारं भर्तृहरिर्महाराजस्य विक्रमादित्यस्य सहोदरो भ्राता आसीत्। काशिकायां (४।३।८८) वाक्यपदीयस्योल्लेखोऽस्ति, तेन काशिकानिर्माणात् पूर्वं वाक्यपदीयनिर्माणं जातमिति प्रतीयते। काशिकानिर्माणञ्च सं० ६८०-७०१ वै० मध्ये जातम्। वामनेन काशिकायां दुर्गवृत्तेःखण्डनं विहितम्। कातन्त्रव्याकरणदुर्गवृत्तौ वाक्यपदीयस्य श्लोक उद्धृतोऽस्ति। अतो भर्तृहरिः सप्तमशतकाद् बहुपूर्ववर्ती सिद्धो भवति। किञ्च कुमारिलभट्टेनाऽपि तन्त्रवार्तिके[१] वाक्यपदीयस्य (१।१३) पद्यमुद्धृत्य प्रत्याख्यातम्। अतो भर्तृहरेः कालो वैक्रमसंवत्सरस्य चतुर्थशतकं स्वीकर्तुं युक्तं प्रतीयते।

कृतयः—भर्तृहरिणा अनेके ग्रन्थाः प्रणीताः—(१) महाभाष्यदीपिका, (२) वाक्यपदीयम् (३) वेदान्तसूत्रवृत्तिः (४) मीमांसासूत्रवृत्तिः (५) नीति-वैराग्य-शृंगारशतकञ्च। भर्तृहरिकृतमहाभाष्यदीपिकाया अवलोकनेन ज्ञायते यद् भर्तृहरि-र्मीमांसाया महान् विद्वानासीत्। काशीसमीपवर्तिनि विक्रमादित्यकृते चुनारदुर्गे भर्तृहरेरेका गुहा विद्यते। विक्रमराजधान्यामुज्जयिन्यामपि 'भर्तृहरिगुफा' प्रसिद्धाऽस्ति। एतेन विक्रमादित्यभर्तृहर्योः पारस्परिककल्पना समीचीनैव। भर्तृहरिणा महाभाष्यस्यैका विस्तृता भावपूर्णा च व्याख्या विहिता, या 'महाभाष्यदीपिके' ति नाम्ना प्रसिद्धास्ति, परं साम्प्रतं सा सम्पूर्णा नोपलभ्यते। कैयट-वर्धमान-शिवरामेन्द्रसरस्वती-नागेशवैद्यनाथपायगुण्डेप्रभृतीनां ग्रन्थेषु महाभाष्यदीपिकायाः उद्धरणं प्राप्यते। श्रूयते यद् जर्मनीदेशस्यबर्लिनपुस्तकालये महाभाष्यदीपिकायाः हस्तलेखः सुरक्षितोऽस्ति। अस्य चित्रं पञ्जाबविश्वविद्यालय (लाहौर) पुस्तकालये आसीत्, यः सम्प्रति पाकिस्तानदेशे विसृष्टः। सम्प्रति मद्रासविश्वविद्यालय-

---

१. यदपि केनचिदुक्तम्-तत्वावबोधः शब्दानां नास्ति व्याकरणादृते। तद्रूपरस-गन्धेष्वपि वक्तव्यमासीद् इत्यादि। (तन्त्रवार्तिकम्, भा० १, अ० १। पा० ३।अधि० अधि० ८। पृ० २६६, पूनासंस्करण।

पुस्तकालयेऽपि तस्य हस्तलेखस्य चित्रं समागतमस्ति। सम्प्रति महाभाष्यदीपिकायाः संस्करणद्वयं प्रकाशितम्। एकं तावत् श्रीपण्डितकाशीनाथअभ्यङ्करेण सम्पादितं भण्डारकर ओरियण्टल रिसर्च इन्स्टीट्यूटपूनातः प्रकाशितम्, द्वितीयञ्च श्री वी० स्वामीनाथन्महोदयेन सम्पादितम् काशीहिन्दूविश्वविद्यालयात् प्रकाशितम्।

वस्तुतो भर्तृहरिसमोऽशेषतत्त्वनिष्णातो वैयाकरणो नितान्तं दुर्लभः। पतञ्जलिना महाभाष्ये व्याकरणस्य यद् दार्शनिकपक्षरहस्यं समुद्घाटितं तत्प्रेरणया स्फूर्तिमवाप्य भर्तृहरिणाऽलौकिकपाण्डित्यमण्डितं दार्शनिकविवेचकं वाक्यपदीयं विरचितम्। वाक्यपदीयं काण्डत्रये विभक्तमस्ति—तत्राद्यं ब्रह्मकाण्डम्, द्वितीयं वाक्यकाण्डम्, तृतीयञ्च पदकाण्डम्। प्रथमकाण्डे—व्याकरणसम्मतमूलतथ्यस्य शब्दब्रह्मणो विमर्शः कृतोऽस्ति। तस्याद्यं पद्यम्—

'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥'

अत्र वेदस्वरूपप्रतिपादनमपि संक्षेपतो विद्यते। फलतः काण्डमिदमागमकाण्डमपि कथ्यते। द्वितीये काण्डे वाक्यविषया विचारितास्सन्ति। तृतीये च पदकाण्डे पदानामभिधानं कृतमस्ति। तथा चोक्तम्—

'द्विधा कैश्चित् पदं भिन्नं चतुर्धा पञ्चधापि वा।
अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिकम्॥'

## २. आचार्यः कैयटः

कैयटेन पतञ्जलिमुनिना प्रणीते महाभाष्ये 'प्रदीप' नाम्नी एका महत्त्वपूर्णा टीका लिखिताऽस्ति। महाभाष्यस्योपलब्धासु टीकास्वियमेव टीका सर्वातिशायिनी विद्वत्समादृता चाऽस्ति। कैयटकृतस्य महाभाष्यप्रदीपस्य प्रत्यध्यायसमाप्तौ या पुष्पिकोपलभ्यते, तया ज्ञायते यत् कैयटस्य पितुर्नाम **जैयट** उपाध्याय आसीत् यथा—'इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे' इत्यादि।

उद्योतकरस्योद्धरणं चन्द्रसागरसूरिणा हैमबृहद्वृत्तौ आनन्दबोधिनी टीकाया-मुद्धृतमस्ति। उद्योतकरः कैयटस्य शिष्य आसीत्, उद्योतकरोऽयं न्यायवार्तिक-निर्मातुरुद्योतकराद् भिन्नः प्रतीयते। कैयटेनाऽऽनन्दवर्द्धनाचार्यकृतस्य देवीशतकस्य टीका कृताऽस्ति, तत्र कैयटस्य पितुर्नाम चन्द्रादित्य इत्यस्ति निर्दिष्टम्। अतोऽयं कैयटः प्रदीपकर्तुः कैयटाद् भिन्नः प्रतीयते। यद्यपि कैयटः स्वजन्मना कतमं देश-मलङ्कृतवानिति न स्पष्टं प्रतीयते, तथापि मम्मटः, रुद्रटः, उद्भटेत्यादि नाम-सादृश्यात् कैयटोऽपि काश्मीरवास्तव्य इत्यनुमीयते। श्रूयते—एकदा कैयटः पाजामा नामकमधोवस्त्रं परिधाय काश्याः पण्डितसभायामुपस्थितः। परं न केनाऽपि तस्मिन् ध्यानं दत्तम्, परन्तु तत्र प्रस्तुते शास्त्रीयतत्त्वविशेषे यदा कैयटेन साधु समाधानं कृतं तदा पण्डितमण्डली चकिता जाता। तस्य महत् सम्मान-मजायत, अतोऽपि कैयटः काश्मीरनिवासी प्रतीयते।

१।२।६४ सूत्रस्थमहाभाष्यवाक्यस्य 'वृक्षस्थोऽवतानो वृक्षेच्छिन्नेऽपि न नश्यति' इत्यस्य व्याख्याने कैयटो लिखति यद् 'यथा वृक्षोपरि द्राक्षादिलता।' अनेन दृष्टान्तेनाऽपि कैयटः काश्मीरदेशजः प्रतीयते। मैत्रेयरक्षितस्तन्त्रदीपे एवं कैयटं स्मरति—'कैयटस्तु[१] कार्तिक्याः प्रभृतीति भाष्यकारवचनादेवंविधविषये पञ्चमी भवतीति मन्यते।' अतः कैयटस्य समयो वैक्रमैकादशशतकस्योत्तरार्द्धो निश्चितो विद्वद्भिः। कैयटो भर्तृहरिकृत वाक्यपदीयमाश्रित्य भाष्यप्रदीपं रचितवान् तथा चोक्तं तेन स्वयमेव 'तथापि हरिबद्धेन सारेण ग्रन्थसेतुना'।

प्रदीपपर्यालोचनया कैयटस्य प्रौढं पाण्डित्यं प्रतीयते। साम्प्रतं महाभाष्य-भेदनसमर्थो भाष्यप्रदीप एवाऽस्ति। एनमन्तरा महाभाष्यार्थः सम्यग् ज्ञातुन्न शक्यते। अतो वैयाकरणनिकाये कैयटकृतभाष्यप्रदीपस्य महत्त्वपूर्णं स्थानमस्ति, यदि कैयटकृतं व्याख्यानं नाऽभविष्यत् तर्ह्यस्मादृशां कृते महादुर्बोधमेवाऽभविष्यद् महाभाष्यम्। यदा महाभाष्यस्य विषमपङ्क्तीनां रहस्यं नावगतं तदा पण्डितैः

---

१. मैत्रेयरक्षित—तन्त्रप्रदीप, १।२।१; भारतकौमुदी, भाग २, पृ० ८९३ की टिप्पणी में उद्धृत।

तच्चतुर्दिक्षु गोलाकाराः कुण्डलनाः कृताः ताश्च शतकपर्यन्तं तथैव स्थिताः। तासां रहस्यं तदा समुद्घाटितम् यदा कैयटेन महाभाष्ये प्रदीपाख्यां व्याख्यां विधाय तद्दुर्बोधता ध्वस्तीकृता। तदानीं महाभाष्याध्ययनदुर्दशां व्यञ्जयता श्रीहर्षेण स्वकीये नैषधीयचरिते महाभाष्ये कुण्डलनाविधानमेव चर्चितमस्ति—

'फणिभाषितभाष्यफक्किका विषमा कुण्डलनामिवार्पिता।'

एवं कैयटसमो महाभाष्यस्य मर्मवेत्ता नाऽन्यो वैयाकरणः प्रतीयते। महाभाष्यप्रदीपो नितान्तप्रौढो ग्रन्थः। एतस्साहाय्यमन्तरा महाभाष्यस्य वास्तविकं स्फुटीकर्तुमशक्यमस्ति। काश्मीरीयवैयाकरणविदुषां वैदुष्यं प्रदीपमाध्यमेनाऽस्माकं समक्षे प्रतिफलितमस्ति। कैयटात् पूर्वं यैराचार्यैर्महाभाष्यं व्याख्यातं तत्सर्वं संगृह्य कैयटेन नैजः प्रदीपः प्रदर्शितः। श्रूयते, कैयटात् पूर्वं भाष्ये स्थले स्थले कुण्डलना कृताऽऽसीत्, परं कैयटः स्वप्रौढपाण्डित्येन तत्र तत्र भाष्यं संयोज्य कुण्डलना दूरीकृता। महाभाष्यप्रदीपस्य महत्त्वादेवाऽनेके वैयाकरणा अत्र व्याख्यां कर्तुं प्रवृत्ताः। तेषु नागेशभट्टः प्रमुखः। अनेन महाभाष्यप्रदीपे उद्योत नाम्नी व्याख्या कृता, या विवरणेति नाम्ना प्रसिद्धाऽतिवैयाकरणनिकाये।

## ३. ज्येष्ठकलशः

ज्येष्ठकलशनामाभिधेयविदुषा व्याकरणमहाभाष्यस्यैका टीका प्रणीतेत्यैतिहासिकानाम्मतम्[१]। किन्तु काशीस्थराजकीयसंस्कृतमहाविद्यालयात् ( गवर्नमेण्ट संस्कृत कालेज* काशी ) प्रकाशितस्य 'विक्रमाङ्कदेवचरित' इत्यभिधेयग्रन्थस्य श्री पं० मुरारिलालशास्त्रिनागरस्य मतमस्ति यद् ज्येष्ठ-कलशेन महाभाष्यस्य काचिदपि टीका न प्रणीता[२]। श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयैरप्येतदेव मत

१. कृष्णमाचार्य कृत हिस्ट्री ऑफ क्लासिकल संस्कृत लिटरेचर, पृ० १६५।

* वर्तमान में—सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी।

२. पं० मुरारिलाल शास्त्री ( सं० )—विक्रमाङ्कदेवचरित, भूमिका, पृ० ११, गवर्नमेण्ट संस्कृत कालेज काशी।

समर्थितम् ।[1]

ज्येष्ठकलशः काश्मीरप्रदेशान्तर्गतं 'प्रवरपुरं' निकषा 'कोनमुख' नामाभिधेयग्रामवास्तव्यः, मूलतो मध्यदेशीयः कौशिकगोत्रीयश्च ब्राह्मण आसीत् । अस्य पितुर्नाम राजकलशः पितामहस्य नाम मुक्तिकलशश्चासीत् । ज्येष्ठकलशस्य कालः सं० १०८५ वैक्रमाब्दतः ११३५ वैक्रमाब्दं यावत् स्वीक्रियते विद्वद्भिः ।

## ४. मैत्रेयरक्षितः

बौद्धवैयाकरणेषु विशिष्टत्वपदभाजा मैत्रेयरक्षितेन महाभाष्यस्य काचिट्टीका प्रणीतेति सीरदेवेन स्वकीयपरिभाषावृत्तौ वर्णितम् । तथाहि—

'एतच्च 'आतो लोप इटि च' (अष्टा० ६।४।६४) इत्यत्र 'टित आत्मनेपदानांटेरे' (अष्टा० ३।४।७९) इत्यत्र च भाष्यव्याख्यानं रक्षितेनोक्तम्[2] ।'

'अत एव 'नाग्लोपिशास्वृदिताम्' (अष्टा० ७।४।२) इत्यत्र रक्षितेनोक्तम्--हलचोरादेशो न स्थानिवदिति, यदि हि स्यात् केवलाग्लोपे प्रतिषेधस्यानर्थक्यादिति भाष्यटीकायां निरूपितम्[3] ।'

अत्र 'भाष्यव्याख्यान' 'भाष्यटीका' शब्दयोर्निर्देशो महत्त्वपूर्णः । अयं वंगदेशीयः, अस्य काल सं० ११४५–११७५ वैक्रमाब्दमध्येऽस्तीति पूर्वमेवातिविस्तरेण वर्णितमस्माभिः ।

---

१. द्र० पं० युधिष्ठिर मीमांसक-संस्कृत व्याकरण शास्त्र का इतिहास, भाग १; पृ० ३९७, सं० २०३० ।

२. सीरदेव–परिभाषावृत्ति, पृष्ठम् ७१, व्रजभूषणदास कम्पनी, काशी, सन् १८८७ ।

३. तदेव, पृष्ठम् १५४ ।

## ९. पुरुषोत्तमदेवः

पुरुषोत्तमदेवेन व्याकरणमहाभाष्यस्य 'प्राणपणा' नाम्नी एका लघ्वी टीका प्रणीता। भाष्यवृत्ति-व्याख्या-टीकाकारेण मणिकण्ठेन पुरुषोत्तमदेवप्रणीतायाः 'भाष्यटीकायाः नाम 'प्राणपणित' इत्यासी[1]दिति लिखितम् पुरुषोत्तमदेवस्य परिचयः पूर्वमेव प्रदत्तः, अत्र केवलं तेन प्रणीताया भाष्यवृत्तेरेव वर्णनं विधीयते। पुरुषोत्तदेवस्य कालः सं० १२०० वैक्रमाब्दोऽस्ति।

पुरुषोत्तमदेवप्रणीतायाः भाष्यवृत्तेः प्रथमपरिचमः पं० दिनेशचन्द्रभट्टाचार्येण विहितः[2]। अस्याः टीकायाः नाम 'प्राणपणा' आसीत्। पुरुषोत्तमदेवप्रणीत-भाष्यवृत्तिव्याख्यात्रा शंकरपण्डितेन लिखितम् यत्—

'अथ भाष्यवृत्तिव्याचिख्यासुर्देवो विघ्नविनाशाय सदाचारपरिप्राप्त-मिष्टदेवतानतिस्वरूपं मङ्गलमाचचार। तत्पद्यं यथा--

नमो बुधाय बुद्धाय यथात्रिमुनिलक्षणम्।
विधीयते प्राणपणा भाषायां लघुवृत्तिका ॥ इति देवः।'

नवद्वीपनिवासिना 'शंकर' नामाभिधेयपण्डितेन पुरुषोत्तमदेवप्रणीतायाः महाभाष्यलघुवृत्तेरेका व्याख्या प्रणीता। तस्याः केचनांशा उपलब्धाः[3]। शंकरकृत

---

१. श्रीदेवव्याख्या प्राणपणितभाष्यग्रन्थस्य ···। इ० हि० क्वार्टर्ली, पृ० ३०३।

२. द्रष्टव्य—इण्डियन हिस्टोरिकल क्वार्टर्ली सेप्टेम्बर १९४३, पृष्ठ २०१। पुरुषोत्तमदेवकी भाष्यवृत्ति और उसके व्याख्याओं का वर्णन इसी लेख के आधार पर किया गया है तथा वारेन्द्र रिसर्च म्यूजियम राजशाही बंगाल ( वर्तमान में बंगला देश ) से मुद्रित पुरुषोत्तमदेवविरचित 'परिभाषावृत्ति' के अन्त में भी ये सब अंश अधिक विस्तार से छपे हैं।

३. इण्यिन हिस्टोरिकल क्वार्टर्ली सेप्टेम्बर १९४३।

लघु वृत्तिव्याख्यामपि पण्डितमणिकण्ठेनैका टीका प्रणीता, तस्या अपि केचनांशा उपलब्धाः[१]।

पुरुषोत्तमदेवप्रणीतभाष्यवृत्तिग्रन्थोपरि केनचिदज्ञातनामाभिधेयविदुषा 'भाष्य-व्याख्यानप्रपञ्च' नाम्न्येका व्याख्या प्रणीता। तस्याः केवलं प्रथमाध्यायप्रथमपाद एवोपलब्धः।

## ६. धनेश्वरः

पण्डितधनेश्वर नामाभिधेयविदुषा व्याकरणमहाभाष्यस्य 'चिन्तामणि' नाम्न्यैका प्रौढा व्याख्या प्रणीता। अस्य 'धनेश' इत्यपि नामान्तरम्। वैयाकरणोऽयं बोपदेवस्य गुरुरस्ति। धनेश्वरप्रणीतः 'प्रक्रियारत्नमणि' नामाभिधो ग्रन्थः अडियार, पुस्तकालये विद्यते। डॉ० वेल्वेलकर महोदयेनाऽस्य ग्रन्थस्य नाम 'प्रक्रिया-मणि' इति लिखितम्[२]।

## ७. शेषनारायणः

शेषवंशावतंसेन श्रीशेषनारायणनामाभिधेय विदुषा व्याकरणमहाभाष्यस्य 'सूक्तिरत्नाकर' नाम्नी प्रौढा व्याख्या प्रणीता। व्याख्याया अस्या अनेके हस्तलेखा अनेकेषु पुस्तकालयेषु विद्यन्ते। बड़ौदानगरस्य राजकीयशोधहस्तलेखपुस्तकालये व्याख्याया अस्या एको हस्तलेखः फिरिंदापभट्टकृतमहाभाष्यटीके' ति नाम्ना विद्यते।

श्रीशेषनारायणेन स्वकीयस्य 'श्रौतसर्वस्व' इत्यभिधेयग्रन्थस्यान्तेऽधोलिखित-प्रकारेण परिचयः प्रदत्तः—

'इति[३] श्रीमद्बोधायनमार्गप्रवर्तकाचार्य श्रीशेषअनन्तदीक्षितसुतश्रीशेष-

---

१. तदेव।

२. डॉ० बेल्वेलकर—सिस्टम आफ संस्कृत ग्रामर, पृ० १००, पं० ३, ओरि-यण्टल बुक एजेन्सी, शुक्रवारपेठ, पूना, सन् १९१५।

३. द्र० इण्डिया आफिस लन्दन का सूचीपत्र भाग १, पृ० ७०, ग्रन्थाङ्क ३६०।

वासुदेवदीक्षिततनूद्भवमहामीमांसकदीक्षितशेषनारायणनिर्णीते श्रौतसर्वस्वेऽव्यङ्गादिविचारो नाम द्वितीयः……।'

अनेन ज्ञायते यत् श्रीशेषनारायणस्य पितुर्नाम श्रीवासुदेवदीक्षितः पितामहस्य च नाम श्रीअनन्तदीक्षित आसीत्।

पाणिनीयव्याकरणनिकाये शेषवंशस्यैकं विशिष्टं स्थानं वर्तते। वंशस्याऽस्याऽनेकैर्विद्वद्भिर्व्याकरणविषयका अनेके ग्रन्थाः प्रणीताः अतोऽस्य वंशस्य पूर्णपरिचायको वंशवृक्षोऽधस्तादुपस्थाप्यते—




एतद्वंशसम्बद्धायाः गुरुशिष्यपरम्परायाः चित्रमप्यधस्तात्

प्रस्तूयते—

गोपालाचार्यः | कृष्णाचार्यः

रामचन्द्रः

कृष्णः

नृसिंहः | रामेश्वरः (वीरेश्वरः)

विट्ठलः | जगन्नाथः | भट्टोजिदीक्षितः | चक्रपाणिदत्तः

उपरि प्रदर्शितशेषवंशोयवंशावल्यनुसारमिदं वक्तुं शक्यते यत् शेषनारायणः शेषकृष्णपुत्रस्य वीरेश्वरस्य समकालिकः, तत ईषत् पूर्ववर्ती वेति प्रतीयते। वीरेश्वरशिष्येण विट्ठलाचार्येण प्रक्रियाकौमुदीप्रसादस्य संवत् १५३६ वैक्रमाब्दीय एको हस्तलेखो लण्डननगरस्य इण्डियाआफिसपुस्तकालये उपलभ्यते[१]। अत एव सं० १५३६ वैक्रमाब्दात् पूर्वमेव श्रीविट्ठलाचार्येण प्रक्रियाकौमुद्याष्टीका प्रणीतेति सुनिश्चितम्। अत एव वीरेश्वरस्य जन्मकालः सं० १५१० वैक्रमाब्दादनन्तरं न भवितुमर्हति। प्रायेणाऽयमेव कालः श्रीशेषनारायणस्याऽप्यवगन्तव्यः।

'सूक्तिरत्नाकरस्य' सर्वप्राचीनः सं० १६७५ वैक्रमाब्दीयो हस्तलेखः लण्डननगरस्य इण्डियाआफिसपुस्तकालये उपलभ्यते।[२] बड़ौदानगरस्य हस्तलेखसंग्रहे फिरदापभट्टनाम्ना यो हस्तलेखो वर्तते, सः षोडशवैक्रमशतकीय इत्यनुमीयते। श्रीशेषनारायणस्य कालः सं० १५०० वैक्रमाब्दात् १५५० वैक्रमाब्दं यावत् स्वीकर्तुं शक्यते।

---

१. इण्डिया आफिस लन्दन सूचीपत्र, भाग २, पृष्ठ १६७, ग्रन्थाङ्क ६१९।

२ इण्डिया आफिस लन्दन सूचीपत्र, भाग १, खण्ड २, ग्रन्थाङ्क ५९०।

## ८. विष्णुमित्रः

'विष्णुमित्र' नामाभिधेयवैयाकरणविदुषा व्याकरणमहाभाष्यस्य 'क्षीरोदर' नाम्नी व्याख्या प्रणीता। व्याख्याग्रन्थस्याऽस्योल्लेखः शिवरामेन्द्रसरस्वतीप्रणीतायां 'महाभाष्यरत्नाकर' इत्यभिधेयायां महाभाष्यटीकायामुपलभ्यते। श्री भट्टोजि-दीक्षितप्रणीते शब्दकौस्तुभग्रन्थे[1]ऽप्यस्याः व्याख्याया उल्लेख उपलभ्यते। एतद्-ग्रन्थद्वयादन्यत्र विष्णुमित्रस्य क्षीरोदरस्य वोल्लेखो न दृश्यते। अतः क्षीरोदरस्य निश्चितः कालो न ज्ञायते। श्री पं० युधिष्ठिरमीमांसकमहोदयमतानुसारं विष्णु-मित्रस्य कालः षोडशवैक्रमशतक इति स्वीकर्तुं शक्यते।

## ९. नीलकण्ठवाजपेयी

श्रीनीलकण्ठवाजपेयिनामाभिधेयविदुषा व्याकरणमहाभाष्यस्य 'भाष्यतत्त्व-विवेक' नाम्नी व्याख्या प्रणीता। अस्या एको हस्तलेखो मद्रासराजकीयहस्तलेख पुस्तकालयसूचीपत्रस्य द्वितीयभागे १ A खण्डे १६१२ पृष्ठे १२८८ ग्रन्थाङ्के निर्दिष्टोऽस्ति। हस्तलेखस्याऽस्यान्ते टीकाकारस्य नाम 'नीलकण्ठ यज्वा' इति लिखितम्। श्रीनीलकण्ठस्य परिचयः पूर्वमेव प्रदत्तः।

## १०. शेषविष्णुः

श्रीशेषविष्णुनामाभिधेयविदुषा महाभाष्यस्य 'महाभाष्यप्रकाशिका' नाम्नी टीका प्रणीता, यस्याः हस्तलेखो बीकानेरनगरस्य 'अनूपसंस्कृतपुस्तकालये' दृश्यते। तस्य ग्रन्थाङ्कः ५७७४ अस्ति। हस्तलेखोऽयं महाभाष्यस्य प्रारम्भिकाह्निकद्वयस्या-ऽस्ति। तस्य प्रथमाह्निकस्यान्तेऽधोलिखितः पाठ उपलभ्यते—

---

१. तदिदं सर्वं क्षीरोदराख्ये त्रैलिङ्गतार्किकविष्णुमित्रविरचिते महाभाष्यटिप्पणे स्पष्टम्। काशी सरस्वती भवन का हस्तलेख, पत्रा ९।

'इति श्रीमन्महादेवसूरिसुतशेषविष्णुविरचितायां महाभाष्यप्रकाशिकायां प्रथमाध्यायस्य प्रथमाह्निकम् ।'

शेषविष्णुरयं वैयाकरणप्रसिद्धेन शेषकुलेन सम्बद्धः । तदनुसारमस्य पितुर्नाम श्रीमहादेवसूरिः, पितामहस्य नाम श्रीकृष्णसूरिः, प्रपितामहस्य च नाम श्रीशेषनारायण आसीत् । अनया वंशपरम्परया ज्ञायते यद् शेषविष्णोः कालः प्रायेण सं० १६००-१६५० वैक्रमाब्दमध्ये स्वीकर्तुं शक्यते ।

## ११. तिरुमल यज्वा

'श्रीतिरुमलयज्वा' नामाभिधेयविदुषा व्याकरणमहाभाष्यस्य 'अनुपदा' नाम्नी व्याख्या प्रणीता । श्रीतिरुमलस्य पितुर्नाम मल्लययज्वा इत्यासीत् । श्रीतिरुमलेन स्वकीयस्य 'दर्शपौर्णमास' इत्यभिधेयग्रन्थस्यान्ते लिखितम्—

'इति [1]श्रीमद्राघवसोमयाजिकुलावतंसचतुर्दशविद्यावल्लभमल्लयसूनुना तिरुमलसर्वतोमुखयाजिना महाभाष्यानुपदाटीकाकृता रचितं दर्शपौर्णमासमन्त्रभाष्यं सम्पूर्णम् ।'

श्री पं० युधिष्ठिरमीमांसकमहोदयमतानुसारं श्रीतिरुमलयज्वा अन्नम्भट्टस्य पिताऽऽसीत्, उभाभ्यां सह 'राघवसोमयाजिवंशावतंस' इति विशेषणं समानरूपेण निर्दिष्टमस्ति । अतः श्रीतिरुमलयज्वनः कालः प्रायेण १५५० वैक्रमाब्दः स्वीकर्तुं शक्यते ।

## १२. शिवरामेन्द्रसरस्वती

श्रीशिवरामेन्द्रसरस्वतीप्रणीतायाः 'महाभाष्यरत्नाकर' इत्यभिधेयायाः टीकायाः हस्तलेखः काशीस्थसम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सरस्वतीभवनग्रन्थालये वर्तते । टीकेयमतीव सरला छात्रोपयोगिनी चास्ति ।

---

१. द्र०, मद्रास राजकीय हस्तलेख पुस्तकालयसूचीपत्र, भाग २, खण्ड १ C, पृष्ठ २३६२, ग्रन्थाङ्क १६६४ ।

ग्रन्थकारस्य परिचयो न ज्ञायते। श्रीआफ्रेक्टमहोदयेन स्वकीये बृहत्सूचीपत्रे शिवरामेन्द्रकृतायाः सिद्धान्तकौमुदीरत्नाकरटीकाया उल्लेखो विहितः। अतः शिवरामेन्द्रसरस्वतीमहोदयस्य कालः सं० १६००–१६७५ वैक्रमाब्दमध्यभागो स्वीकर्तुं शक्यते।

## अन्ये टीकाकाराः

एतदतिरिक्तं श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयेन स्वकीये 'संस्कृत व्याकरण-शास्त्र का इतिहास' इत्यभिधेये ग्रन्थेऽनेकासां टीकानामुल्लेखो विहितः। तथाहि—

| क्र० | टीकाकाराः | समयः | टीकानामानि |
|---|---|---|---|
| १. | गोपालकृष्णशास्त्री | सं० १६१०-१७०० वै० | शाब्दिकचिन्तामणिः |
| २. | प्रयागवेङ्कटाद्रि | अज्ञातः | विद्वन्मुखभूषणम् |
| ३. | कुमारतातय | सं० १७ वैक्रमशतकम् | — |
| ४. | सत्यप्रियतीर्थस्वामी | सं० १७९४-१८०१ वै० | — |
| ५. | राजन्सिंहः | अज्ञातः | शब्दबृहती |
| ६. | नारायणः | ,, | महाभाष्यविवरणम् |
| ७. | सर्वेश्वरदीक्षितः | ,, | महाभाष्यस्फूर्तिः |
| ८. | सदाशिवः | सं० १७२३ वै० | महाभाष्यगूढार्थदीपिनी |
| ९. | राघवेन्द्राचार्य गजेन्द्रगडकर | अज्ञातः | |
| १०. | छलारी नरसिंहाचार्यः | सं० १९ वैक्रमाब्दशतकम् | शाब्दिककण्ठमणिः |
| ११. | अज्ञातः | अज्ञातः | महाभाष्यव्याख्या[१] |

॥ इति संस्कृतव्याकरणशास्त्रैतिह्यविमर्शे व्याकरणमहाभाष्यटीकाकार-वर्णनं नाम दशमोऽध्यायः ॥

अथ एकादशोऽध्यायः

# महाभाष्यप्रदीपस्य प्रमुखटीकाकारवर्णनम्

## १. आचार्यो नागेशभट्टः

व्याकरणमहाभाष्यप्रदीपस्य 'उद्योत' टीकाकारः आचार्यो नागेशभट्टो व्याकरण-साहित्य-धर्मशास्त्र-अलङ्कार-सांख्ययोग-पूर्वोत्तरमीमांसा-ज्योतिषप्रभृतिशास्त्राणां प्रकांड-पण्डित आसीत्। वैयाकरणनिकाये भर्तृहरेरनन्तरं नागेशभट्ट एवैकः प्रामाणिको विद्वान् विवेचकश्च प्रसिद्ध आसीत्। वर्तमानेषु वैयाकरणेषु नागेशभट्टविरचिता महाभाष्यप्रदीपोद्योत-लघुशब्देन्दुशेखर-परिभाषेन्दुशेखरग्रन्था अतिप्रसिद्धाः प्रामाणिकाश्च सन्ति। तेन महाभाष्यप्रदीपोद्योते लघुमञ्जूषाशब्देन्दुशेखरावुद्धृतौ स्तः, तौ च पुत्री-पुत्रावभिमतौ—

"शब्देन्दुशेखरः पुत्रो मञ्जूषा चैष कन्यका।
स्वमतौ सम्यगुत्पाद्य शिवयोरर्पितो मया॥"

तत्र भवान् वैयाकरणकुलशिरोमणिर्नागेशभट्टः स्वजन्मना कतमं देशमलङ्कारेति न ज्ञायते। तथाप्ययं महाराष्ट्रियो ब्राह्मण आसीदित्यत्र नाऽस्ति कश्चित् सन्देहः। एतस्याऽपरं नाम नागोजीभट्टोऽप्यासीत्। अस्य जनकः शिवभट्टः, जननी च सतीदेवी आसीत्। तदुक्तं शब्देन्दुशेखरे —

"शिवभट्टसुतो धीमान् सतीदेव्यास्तु गर्भजः।"

वैद्यनाथपुत्रो नागेशशिष्यो बालशर्मा च १८४०–१८७३ मध्ये भारते वर्तमानस्य कोलब्रुकस्याऽनुरोधेन "धर्मशास्त्रसङ्ग्रह" नामकं ग्रन्थं विरचितवान्, यस्य हस्तलेखो लन्दनस्य भारतकार्यालयपुस्तकालये सुरक्षितो विद्यते। तत्क्रमाङ्कश्च १५०७ अस्ति।

आचार्यस्य नागेशभट्टस्य काऽपि सन्ततिर्न बभूवेति लघुशब्देन्दुशेखरस्याऽन्तिमश्लोकात् स्पष्टीभवति। श्रूयते यद्, नागेशभट्टेनाऽष्टादशबारं गुरुमुखान्महाभाष्यस्याऽध्ययनं कृतम्। मञ्जूषा-शेखरनिर्माणानन्तरमनेन महाभाष्यप्रदीपोद्योतो लिखितः। तथा चोक्तं प्रदीपोद्योते—

"अधिकं[1] मञ्जूषायां द्रष्टव्यम्।"
"शब्देन्दुशेखरे[2] निरूपितमस्माभिः।"

अयं प्रयागपार्श्ववर्तिनः श्रृङ्गवेरपुराधिपते रामसिंहस्य सभापण्डित आसीत्। तत एवाऽस्य भरणपोषणादिकं भवति स्म। तथा चोक्तम् तेन स्वयमेव शब्देन्दुशेखरस्य प्रारम्भे—'श्रृंगवेरपुराधीशाद् रामतो लब्धजीवकः।"

जातयज्ञोपवीतादिसंस्कारो नागेशभट्टः षोडशवर्षपर्यन्तं काश्यामितस्ततोऽध्ययनार्थं परिभ्रममाण एकदा पण्डितसभामेकामुपस्थाय सहसा प्रधानासनमधिष्ठितः। अतस्तत्रत्यैः पण्डितैर्वाग्बाणैर्भर्त्सयद्भिः सार्द्धचन्द्रं स ततो निष्कासितः। तेनाऽपमानेन परमं दुःखमवाप्याऽसौ "सर्वोत्कृष्टां विद्यामधिगम्याऽहमपि अल्पीयसा समयेन सर्वान् जेष्यामीति" प्रतिज्ञाय त्यक्ताहारो वागीश्वरीं देवीं समाराधयत्। कतिपयैरेव दिवसैर्वागीश्वरीकृपातः स निखिलशास्त्रतत्त्वमधिगतवानिति श्रूयते—

यद्यप्यसौ वागीश्वरीकृपात एव सकलशास्त्ररहस्यं ज्ञातवान्, तथापि गुरुसम्प्रदायप्राप्तैव विद्या श्रेष्ठा सम्भवतीत्यनुसन्धाय पण्डितप्रकाण्डात् भट्टोजिदीक्षितप्रपौत्रात् हरिदीक्षिताद् व्याकरणमधीत्य पण्डितमण्डलीमूर्धन्यतामवाप्तवान्।

---

१. नागेशभट्ट—महाभाष्यप्रदीपोद्योत, ४।३।१०१॥
२. तदेव, २।१।२२॥

**कालः**

नागेशभट्टः कदा भारतभूमिं स्वस्थित्या सुशोभितवानिति जिज्ञासार्थं जागृताया-मेतदेव वक्तुमलं यदयं पण्डितराजेन जगन्नाथेन विरचितस्य रसगङ्गाधरस्य "गुरुमर्मप्रकाश" नाम्नीं टीकां कृतवान्। पण्डितराजस्तु दिल्लीश्वरस्य मुगलसम्राजः शाहजहाँ नाम्नोऽधिपतेः सभायां स्वविद्याचमत्कारप्रदर्शनेन पण्डितराजेति पदवी-मवाप्तवान्। शाहजहाँ सम्राजो राज्यकालस्तु १६१८ तः १६२८ पर्यन्तं स्वीकुर्वन्ती-तिहासविदः। अतस्तदनन्तरमेव नागेशस्य सत्ता सम्भवति।

किञ्च १७१४ ईशवीये वर्षे जयपुराधीशः सवाईजयसिंहोऽश्वमेधयागप्रसङ्गे नागेशं सादरमामन्त्रयाम्बभूव, किन्तु "अहं क्षेत्रसन्यासं गृहीत्वा काश्यां तिष्ठामि। अतः काशीं परित्यज्याऽन्यत्र गन्तुं न शक्नोमि" त्युक्त्वा नागेशभट्टेन तदामन्त्रणं नाङ्गीकृतम्।

किञ्च कोलब्रुकमहोदयस्याऽनुरोधेन नागेशशिष्यो बालशर्मा धर्मशास्त्रसंग्रह-ग्रन्थं रचितवान्। भारते कोलब्रुकमहोदयो १८४० वैक्रमाब्दात् १८७२ वैक्रमाब्दं यावदवस्थित आसीत्। अतो नागेशभट्टस्य समयोऽष्टादशशतकप्रारम्भ एव (अर्थात् १८३० वैक्रमाब्दतः १८१० वैक्रमाब्दस्य मध्ये) निश्चीयते।

**कृतयः**

नागेशभट्टेनाऽधोलिखिताः ग्रन्थाः प्रणीताः—

(१) महाभाष्यप्रदीपस्य 'उद्योत' नाम्नी टीका।

(२) लघुशब्देन्दुशेखरः।

(३) बृहच्छब्देन्दुशेखरः।

(४) परिभाषेन्दुशेखरः।

(५) स्फोटवादः।

(६) लघुमञ्जूषा।

(७) परमलघुमञ्जूषा।

(८) महाभाष्यप्रत्याख्यानसंग्रहः ।

(९) दुर्गासप्तशती टीका ( नागोजी भट्टी ) ।

नागेशभट्टेन व्याकरणशास्त्रातिरिक्ता धर्मशास्त्र-दर्शन-ज्योतिषालङ्कारादि-विषयका ग्रन्था अपि प्रणीताः । भानुदत्तकृतरसमञ्जरीग्रन्थोपर्यपि नागेशभट्टस्यैका टीका विद्यते, यस्याः हस्तलेखो लन्दननगरस्थे इण्डियाआफिसपुस्तकालये सुरक्षितो ऽस्ति । तस्य लेखकालः सं१६६९ वैक्रमाब्दः, ग्रन्थाङ्कश्च १२२२ वर्तते ।

एवं नागेशभट्टेन सिद्धान्तकौमुद्याः द्वे एव व्याख्ये लिखिते ··लघुशब्देन्दुशेखरः, बृहच्छब्देन्दुशेखरश्च । नागेशेन प्रदीपोद्योतद्वारा महाभाष्यस्य, लघुशब्देन्दुशेखद्वारा प्रौढमनोरमायाश्च गभीरं रहस्यमनुशीलितम् । परिभाषेन्दुशेखरद्वारा तेन परिभाषाणां स्वरूपं प्रकाशितम् ।

## २. अन्नम्भट्टः

श्रीअन्नम्भट्टनामाभिधेयविदुषा महाभाष्यप्रदीपस्य 'प्रदीपोद्योतना' नाम्नी व्याख्या प्रणीता । 'महाभाष्यप्रदीपोद्योतनस्य' हस्तलेखाः मद्रास-अडियार-पुस्तकालयेषूपलभ्यन्ते । अस्य प्रथमाध्यायप्रथमपादो भागद्वये मुद्रितः । अन्नम्भट्टस्य कालः सं० १५५०—१६०० वैक्रमाब्दोऽस्ति । अस्य परिचयः पूर्वमेवोपवर्णितः ।

## ३. चिंतामणिः

'चिन्तामणि' नाम्ना केनचिद् वैयाकरणेन महाभाष्यप्रदीपस्य 'महाभाष्यकैयटप्रकाश' नाम्नी टीका प्रणीता । अस्या एको हस्तलेखः बीकानेरनगरस्थे अनूपसंस्कृतपुस्तकालये विद्यते । तस्य ग्रन्थाङ्कः ५७७३ इत्यस्ति ।

'महाभाष्यकैयटप्रकाश' स्यैकैकस्याऽऽह्निकस्यान्तेऽधोलिखितः पाठ उपलभ्यते—

"इति श्रीमद्गणेशांघ्रिस्मरणादाप्तसन्मतिः ।
गूढं प्रकाशयच्चिन्तामणिश्चतुर्थं आह्निके ॥"

चिन्तामणि नामानोऽनेके विद्वांसोऽभवन्, अतो ग्रन्थोऽयं केन प्रणीत इति न ज्ञायते। एकश्चिन्तामणिः शेषनृसिंहस्य पुत्रः, प्रसिद्धवैयाकरणस्य शेषकृष्णस्य सहोदरो भ्राता चाऽस्ति। शेषकृष्णस्य वंशः व्याकरणशास्त्रस्य प्रावीण्यार्थमतिशयेन प्रसिद्धः। शेषवंशस्याऽनेकैर्विद्वद्भिर्महाभाष्यस्य महाभाष्यप्रदीपस्य च टीकाः प्राणीताः। अत इदं सम्भाव्यते यदस्याः रचयिता शेषकृष्णस्य सहोदरो भ्राता शेषचिन्तामणिर्भवेत्। यद्येतदनुमानं समीचीनं स्यात्तर्हि चिन्तामणेः कालः सं० १५००-१५५० वैक्रमाब्दमध्ये स्वीकर्तुं शक्यते।

## ४. मल्लय यज्वा

श्रीमल्लययज्वा नामाभिधेयविदुषा कैयटप्रणीतस्य महाभाष्यप्रदीपस्य एका लघ्वी टीका प्रणीतेति श्रीमल्लययज्वापुत्रेण श्रीतिरुमलयज्वामहोदयेन स्वकीय 'दर्शपौर्णमासमन्त्रभाष्य' इत्यभिधेयग्रन्थारम्भे सूचितम्। तथा हि—

'चतुर्दशसु विद्यासु बल्लभं पितरं गुरुम्।
वन्दे कूष्माण्डदातारं मल्लययज्वानमन्वहम्॥
पितामहस्तु यस्येदं मन्त्रभाष्यं चकार च।
श्रीकृष्णाभ्युदयं काव्यमनुवादं गुरोर्मते॥
यत्पिता तु कृता टीका मण्यालोकस्य धीमता।
तथा तत्त्वविवेकस्य कैयटस्थापि टिप्पणी[1]॥

मल्लययज्वनः पुत्रेण श्रीतिरुमलयज्वामहोदयेन महाभाष्यस्य टीका प्रणीतेति पूर्वमेव वर्णितम्। तिरुमलोऽयमन्नभट्टस्य पिता आसीदित्यस्मदनुमानं समीचीनं स्याच्चेन्मल्लयज्वनः कालः प्रायेण सं० १५२५ वैक्रमाब्दे स्वीकर्तुं शक्यते।

---

१. द्र०–मद्रास राजकीय हस्तलेख पुस्तकालय का सूचीपत्र, भाग २, खण्ड १ C, पृष्ठ २३६२, ग्रन्थाङ्क १६६४।

## ५. रामचन्द्रसरस्वती

श्रीरामचन्द्रसरस्वतीनामाभिधेयविदुषा महाभाष्यप्रदीपस्य 'विवरण' नाम्नी लघ्वी व्याख्या प्रणीता। अस्या एको हस्तलेखो मद्रासराजकीयहस्तलेखपुस्तकाल-सूचीपत्रे निर्दिष्टः[1]। अपरश्च हस्तलेखो मैसूर राजकीयपुस्तकालयसूचीपत्रे ३१९ पृष्ठे उल्लिखितः।

श्री आफ्रेक्ट महोदयेन श्रीरामचन्द्रस्यापरं नाम सत्यानन्द इति लिखितम्। यथेतत् समीचीनं स्यात्तर्हि श्रीरामचन्द्रसरस्वती श्रीमत ईश्वरानन्द सरस्वति-महोदयस्य गुरुर्भविष्यति। ईश्वरानन्दप्रणीतस्य 'बृहन्महाभाष्य प्रदीपविवरणस्यैको हस्तलेखो जम्मूस्थररघुनाथपुस्तकालये वर्तते। तत्सूचीपत्रे सं० ४२ लेखनकालः १६०३ निर्दिष्टः।

श्रीभट्टोजिदीक्षितेन शब्दकौस्तुभे (१।१।५७) 'कैयट लघुविवरणस्योल्लेखो विहितः। सममेव तत्र 'बृहद्विवरण'स्याऽपि वर्णनमस्ति[2]। अतः श्रीरामचन्द्र-सरस्वतिमहोदयस्य कालः १५२५-१६०० वैक्रमाब्दमध्ये स्वीकर्तुं शक्यते।

## ६. ईश्वरानन्दसरस्वती

ईश्वरानन्द सरस्वती नामाभिधेयविदुषा महाभाष्यप्रदीपस्य 'महाभाष्य-विवरण' नाम्नी बृहती टीका प्रणीता। ग्रन्थकारः स्वगुरोर्नाम सत्यानन्द सरस्व-तीति निर्दिशति। श्री आफ्रेक्ट महोदयमतानुसारेण सत्यानन्द इति रामचन्द्र-स्यैव नामान्तरम्। टीकाग्रन्थस्य हस्तलेखाः मद्रासराजकीयहस्तलेखपुस्तकालये[3],

---

१. द्र०—मद्रास राजकीय हस्तलेख पुस्तकालय का सूचीपत्र, भाग ४, खण्ड १ C, पृष्ठ ५७३१, ग्रन्थांक ३८६७।

२. कैयटलघुविवरणकारादयोऽप्येवम्। बृहद्विवरणकारस्तु.......... । अचः परस्मिन् सूत्रे १।१।५७, पृष्ठ २९०॥

३. मद्रास राजकीय हस्तलेख पुस्तकालय सूचीपत्र भाग ४, खण्ड १ ( पृष्ठ ५७२९, ५७८* ग्रन्थाङ्क ३८६६, ३८९४।

जम्मूस्थरघुनाथमन्दिर-पुस्तकालये, पूनानगरस्थभण्डारकरप्राच्यविद्याप्रतिष्ठाने[1] च समुपलभ्यन्ते ।

जम्मूस्थपुस्तकालये समुपलब्धहस्तलेखस्यान्ते लेखनकालः १६०३ वैक्रमाब्दो निर्दिष्टः । श्रीभट्टोजिदीक्षितेन शब्दकौस्तुभे ( १।१।५७ ) कैयटबृहद्विवरणं' समुद्धृतम् । अत ईश्वरानन्दस्य कालः सं० १५५०–१६०० वैक्रमाब्दमध्ये स्वीकर्तुं शक्यते ।

## ७. नारायणशास्त्री

श्री आफ्रेक्ट महोदयस्य बृहत्सूचीपत्रानुसारं[2] श्रीनारायणशास्त्रिणा 'महाभाष्यप्रदीपव्याख्या' प्रणीता । अस्या हस्तलेखो मद्रासराजकीयपुस्तकालये[3] समुपलभ्यते तदनुसारं श्री नारायणशास्त्रिणः गुरोर्नाम महामहोपाध्यायधर्मराजयज्वा आसीत् । धर्मराजयज्वा कौण्डिन्यगोत्रीयः नल्लादीक्षितस्य भ्राता, नारायणदीक्षितस्य च पुत्र आसीत् । नारायणशास्त्रिणः कालः सं० १७१०-१७६० वैक्रमाब्दमध्ये स्वीकर्तुं शक्यते ।

## ८. वैद्यनाथपायगुण्डे

नागेशभट्टस्य प्रमुखशिष्येण श्रीवैद्यनाथपायगुण्डेमहोदयेन महाभाष्यप्रदीपोद्योतस्य 'छाया' नाम्नी टीका प्रणीता । अस्याः केचनांशाः पं० शिवदत्तशर्ममहोदयेन बम्बईनगरस्थनिर्णयसागरमुद्रणालयात् प्रकाशिताः । अस्य गुरुः नागेशस्य पुत्रः बालशर्मा तच्छिष्यस्य आसीत् । बालशर्मणा स्वसहाध्ययिनो वसुदेवस्य सहयोगेन संस्कृतानुरागिणा श्रीहेनरीटामसकोलबुकमहोदयस्याऽऽज्ञया 'धर्मशास्त्रसंग्रह' नामाभिधेय एको ग्रन्थः प्रणीतः । अतो वैद्यनाथस्य काल सं० १७५०–१८२५ वैक्रमाब्दमध्ये स्वीकर्तुं शक्यते ।

---

१. भण्डारकर प्राच्य विद्या प्रतिष्ठान पूना, व्याकरण विभागीय हस्तलेख सूचीपत्र नं० ५७, ३७।A १८७२-७३, नं० ९८, १८४।A १८८२-८३ ।

२. आफ्रेक्ट का बृहत् सूचीपत्र भाग २; पृष्ठ ९५ ।

३. मद्रासराजकीयपुस्तकालय सूचीपत्र १, खण्ड १A, पृष्ठ ५७, ग्रन्थाङ्क ९ ।

## ९. प्रवर्तकोपाध्यायः

'प्रवर्तकोपाध्याय' नामाभिधेयेनैकेनाऽज्ञातकालिकेन विदुषा प्रणीतायाः 'महाभाष्यप्रदीपप्रकाशिकायाः' अनेके हस्तलेखाः मद्रास-अडियार-मैसूर-ट्रिवेण्ड्रम्-ग्रन्थालयेषूपलभ्यन्ते । कुत्रचिदस्य टीकाग्रन्थस्य नाम 'महाभाष्यप्रदीपप्रकाश' इत्यपि लिखितम् । सम्भवतोऽयं दाक्षिणात्य आसीत् ।

## १०. नागनाथः

श्रीनागनाथनामाभिधेनविदुषा कैयटकृत 'प्रदीपस्य' 'महाभाष्यप्रदीपोद्योतन' नाम्नी टीका प्रणीता । तस्या एकस्य हस्तलेखस्य[1] प्रारम्भिकादंशाज्ज्ञायते यत् नागनाथोऽयं शेषवंशीय आसीत्, यतो हि ग्रन्थकारः स्वयमात्मानं शेषवीरेश्वर-स्यानुजं शिष्यं च लिखितवान् । एतदतिरिक्तं विट्ठलाचार्यकृतायां 'प्रक्रियाकौमुदी-प्रसाद' टीकायामपि नागनाथो वीरेश्वरस्याऽनुजत्वेन प्रतिपादितः । अत एव स्पष्टम् यत् 'महाभाष्यप्रदीपोद्योतन' प्रणेतुर्नागनाथस्य कालः वीरेश्वरकाले एव षोडशशतकोत्तरार्द्धे स्वीकर्तव्यः ।

## अन्ये व्याख्याकाराः

महाभाष्यप्रदीपस्याऽन्यासां व्याख्यानां विवरणमधोलिखितमस्ति—

| | | |
|---|---|---|
| १. नारायणः | सं० १६५४ वै० | प्रदीपविवरणम् |
| २. रामसेवकः | सं० १६५०–१७०० वै० | महाभाष्यप्रदीपव्याख्या |
| ३. आदेन्न | अज्ञातकालीनः | महाभाष्यप्रदीपस्फूर्तिः |
| ४. सर्वेश्वरसोमयाजी | ,, | महाभाष्यप्रदीपस्फूर्तिः |
| ५. हरिरामः | अज्ञातकालीनः | महाभाष्यप्रदीपव्याख्या |
| ६. अज्ञातकर्ता | अज्ञातकालीनः | प्रदीपव्याख्या |

॥ इति संस्कृतव्याकरणशास्त्रैतिह्यविमर्शे महाभाष्यप्रदीपस्य प्रमुखटीकाकार-वर्णनं नामैकादशोऽध्यायः ॥

---

१. राजकीय पुस्तकालय मद्रास का सूचीपत्र, भाग २, खण्ड १ A, पृ० ४६४८, ग्रन्थाङ्क ३१४१ ।

अथ द्वादशोऽध्यायः

# पाणिनीयव्याकरणस्य प्रक्रियाग्रन्थकार वर्णनम

## १. प्रक्रियाग्रन्थानामितिहासः

यद्यपि वेदकालादारभ्य निर्विच्छिन्ना व्याकरणग्रन्थरचनापरम्परा विलोक्यते, तथापि नासाद्यते साम्प्रतं पाणिनीयाष्टाध्याय्याः प्रक्तनः कश्चिद् व्याकरणग्रन्थः। अष्टस्वध्यायेषु द्वात्रिंशत्पादेषु प्रायेण चतुःसहस्रसंख्याकेषु च सूत्रेषु सन्ति निबद्धाः संस्कृतभाषाव्याकरणनियमाः । यद्यपि चान्द्रादिव्याकरणेभ्यः प्राक् शर्ववर्मणा जैनेन सातवाहनस्याशुसंस्कृतभाषावोधाय प्रक्रियानुसारि कातन्त्रव्याकरणम् विरचितमासीत् तथापि द्वादशख्रीस्तशताब्दीं यावत्, तादृश्याः पद्धतेः पूर्णतो लोकप्रतिष्ठाभावात् पाणिनेरियमध्यायपादसूत्रानुसारिणी सरणिः परवर्तिषु चान्द्र-जैनेन्द्र-शाकटायन-सरस्वतीकण्ठाभरण-हैमादिव्याकरणेषु तत्तद्व्याकरणप्रणेतृभिर्बौद्धजैनादिभिः समाश्रितैव ।

हेमचन्द्रात् प्रागेकादशे द्वादशे च ख्रीस्तशतके प्रकरणपद्धतिमाश्रित्य पञ्चषा व्याकरणग्रन्थाः रचिता अभूवन् । एकादशेशवीयशतकस्य प्रथमचरणे जैनेन दयापालमुनिना 'रूपसिद्धि' नामको लघुप्रक्रियाग्रन्थः ततश्च दशमशतकोत्पन्नस्य गुणनन्दिनो जैनेन्द्रव्याकरणानुसारि शब्दार्णवमाधारीकृत्य केनचिदज्ञातेन सूरिणा 'शब्दार्णवप्रक्रिया' इत्याख्यो ग्रन्थो विरचितः : अभयचन्द्राचार्येण 'शाकटायन-प्रक्रियासंग्रह' इत्यभिधेयः प्रक्रियाग्रन्थः प्रणीतः । एकादशेशवीयशतकस्य तृतीयचरणे श्रुतकीर्तिना जैनेन्द्रव्याकरणमाश्रित्य 'पञ्चवस्तु' इत्याख्यः प्रक्रियाग्रन्थः प्रणीतः ।

अस्मिन्नेव काले वौद्धपण्डितेन धर्मकीर्तिना सर्वतः प्रमम पाणिनीयाऽष्टाध्यायी-माश्रित्य 'रूपावतार' इत्याख्यो ग्रन्थो विरचितः । द्वादशेशवीयशतकस्यान्ते परमवैष्णवेन श्रीकृष्णलीलांशुकमुनिना 'प्रक्रियारत्नम्' इत्याख्यः प्रणीतः। अस्मिन्नेव शतके हेमचन्द्राचार्येण स्वकीयमध्यायपादसूत्रानुसारि व्याकरणमाविर्भावितम् । ततः परं व्याकरणस्य तादृशी रचना शैथिल्यमवाप्ता ।

ततस्त्रयोदशे खीस्तशतके 'सारस्वतप्रक्रिया' अनुभूतिस्वरूपाचार्येण रचिता, वोपदेवगुरुणा श्रीधनेश्वरमिश्रेण च 'प्रक्रियारत्नमणि' इति ग्रन्थमणिराविर्भावितः अस्मिन्नेव शतके वोपदेवः पाणिनीयमपाणिनीयं च व्याकरणं निर्मथ्य बालानां बोधाय स्वतन्त्रं प्रक्रियाधारकं 'मुग्धबोध' इत्याख्यं व्याकरणग्रन्थं व्यरीरचत् चतुर्दशेशवीयशतकस्य द्वितीयचरणे विमलसरस्वती प्रयोगपुष्पैः 'रूपमालां' गुम्फितवान् । इह सर्वत्रोपयोन्येव सूत्राणि व्याख्यातानीति व्याकतणजिज्ञासुभिः कस्यचित् सर्वसूत्रव्याख्यानात्मकस्य प्रक्रियाग्रन्थस्यावश्यकत्त्वमनुभतम् । किन्तु सुपद्मव्याकरणम् पदसिन्धुसेतु चातिरिच्य कश्चित् सर्वाङ्गपूर्णो व्याकरणप्रक्रियाग्रन्थो नाक्षिपथमागतः । चतुर्दशशतकस्यान्ते हैमव्याकरणपद्धतिमनुकुर्वाणेन प्रकरणात्मकेन संक्षिप्तसारव्याकरणेन प्रक्रियाग्रन्थवत् स्वसूत्रग्रन्थे संक्षिप्तता प्रदर्शिता ।

पञ्चदशेशवीयशतकस्य प्रथमचरणे पाणिनीयव्याकरणोपासकेनाऽऽन्ध्रप्रदेशीयेन कौण्डिन्यगोत्रेण श्रीमदनन्ताचार्यप्रपौत्रेण नृसिंहपौत्रेण श्रीकृष्णाचार्यपुत्रेण श्रीरामचन्द्राचार्येण पाणिनीयाष्टाध्यायीमाधारीकृत्य प्राक्तनसकलप्रक्रियाग्रन्थातिशायी 'प्रक्रियाकौमुदी' इत्याख्यो विभावितः प्रक्रियाग्रन्थः । यद्यपि नेह सकलानि सूत्राणि व्याख्यातानि, कानिचिच्च ग्रन्थसंक्षेपधिया समुज्झितानि तथापीयं कौमुदीव चिरान्नाय प्रतीक्षमाणानां जिज्ञासूनां प्राह्लादाय पाकल्पत । अब्धिमन्थनोत्थचन्द्रकौमुदीवदियं प्रक्रियाकौमुदी व्याकरणग्रन्थाब्धिमन्थनोद्भूता कमपि गवेषणाग्रन्थमप्यतिशेते । इह महाभाष्यकाशिकादिग्रन्थैः सह रूपावतार-रूपमाला-मुग्धबोधपभृतयोऽपि व्याकरणग्रन्थाः पर्यालोचिताः सन्ति । पूर्वार्द्धोत्तरार्द्धेति दिशा द्विधा विभक्तोऽयं प्रक्रियाकौमुदीग्रन्थः ।

श्रीशेषकृष्णेन ( सं० १४७५ वै० ) प्रक्रियाकौमुद्याः 'प्रकाश'नाम्नी टीका प्रणीता। श्रीचक्रपाणिदत्तेन: ( सं० १५००-१५५० वै० ) प्रकियाप्रदीप' नाम्नी, श्रीविठ्ठलाचार्येण ( सं० १५२० वै० ) 'प्रसाद' नाम्नी, अप्पननैनार्येण ( सं० १५२०-१६५० वै० ) 'प्रक्रियादीपिका' नाम्नी च टीका प्रणीता।

श्रीभट्टोजिदीक्षितेन ( सं० १५७०-१६५० वैं० ) पाणिनीयव्याकरणस्य प्रयोगक्रमानुसारव्याख्यानभूता 'सिद्धान्तकौमुदी' प्रणीला। ततस्तेन स्वयमेव सिद्धान्तकौमुद्याः 'प्रौढमनोरमा' नाम्नी व्याख्या प्रणीता। सिद्धान्तकौमुद्यामुपरि श्रीज्ञानेन्द्रसरस्वतिमहोध्येन 'तत्त्वबोधिनी', नीलकण्ठवाजपेयिना 'सुखवोधिनी', रामानन्देन 'तत्वदीपिका', रामकृष्णभट्टेन 'रत्नाकरटोका, प्रणीता। श्रीनागेशभट्टेन 'लघुशब्देन्दुक्षेखर' 'वृहच्छब्देन्दुशेखर' नाम्ना द्वौ टीकाग्रन्थौ प्रणीतौ। बासुदेववाजपेयिना 'बालमनोरमा', रङ्गनाथयज्वमहोदयेन 'पूर्णिमा' टीका प्रणीता। अनेका अन्याश्च टीका अनेकैर्विद्वद्भिर्विहिता इति श्री पं० युधिष्ठिरमीमांसकमहोदयेन सूचितम्।

ततः श्रीभट्टोजिदीक्षितशिष्येण दक्षिणात्यदुर्गातनयतनूजेन श्रीवरदराजाचार्येण 'मध्यसिद्धान्तकौमुदी' प्रणीता। स एव मध्यकौमुदीरचनानन्तरं व्याकरणस्य प्रथमसोपानरूपा 'लघुसिद्धान्तकौमुदीं' च प्रणिनाय।

श्रीभट्टोजिदीक्षितप्रणीत 'पौढमनोरमा' ग्रन्थस्य खण्डनायाऽप्यनेके ग्रन्थाः प्रणीताः चक्रपाणिदत्तेन ( सं० १५००-१५५० वै० ) 'परमतखण्डनम्', शेषवीरेश्वरपुत्रेण ( सं० १५९५ वै० ) 'प्रौढमनोरमा खण्डनम्', पण्डितराजेन जगन्नाथेन ( सं० १६१७-१७३३ वै० ) 'मनोरमाकुचमर्दनम्', श्रीनारायणभट्टेन 'प्रक्रियासर्वस्वम्' च प्रणीतम्।

## २. धर्मकीर्तिः

पाणिनीयाष्टाध्याय्या प्रक्रियानुसारेण यावन्तो ग्रन्थाः रचितास्तेषु सर्वप्राचीनः 'रूपावतार' नामाभिधेयो ग्रन्थः सम्प्रत्युपलभ्यते। अस्य ग्रन्थस्य लेखको बौद्धो

विद्वान् धर्मकीर्तिरस्ति। अयं न्यायबिन्दुप्रभृतीनां ग्रन्थानां प्रणेता 'धर्मकीर्ति' नामाभिधेयात् सुप्रसिद्धबौद्धपण्डिताद् भिन्नोऽस्ति। धर्मकीर्तिना पाणिनीयाष्टाध्याय्या एकैकस्य प्रकरणस्योपयोगिसूत्राणां संकलनं विधाय 'रूपावतारः' प्रणीतः।

धर्मकीर्तिना 'रूपावतारे' ग्रन्थलेखनकालोन निर्दिष्टः। अतोऽस्य निश्चितः कालो न ज्ञायते। धर्मकीर्तिमहोदयस्य कालनिर्णये यानि प्रमाणान्युपलभ्यन्ते, तान्यधोलिखितानि सन्ति—

१. शरणदेवेन दुर्घटवृत्तिः शकाब्दे १०९५ तदनुसारं सं० १२३० वैक्रकाब्दे प्रणीता।[1] शरणदेवेन स्वकीयायां दुर्घटवृत्तौ रूपावतारस्य धर्मकीर्तेश्चोभयस्योल्लेखो विहितः।

२. हेमचन्द्रेण लिङ्गानुशासनस्य स्वोपज्ञविवरणे धर्मकीर्तेस्तद्रूपावतारस्य च नामोल्लेखपूर्वकं निर्देशो विहितः।[2] हेमचन्द्रेण स्वीयपञ्चाङ्गव्याकरणम् सं० ११९६-११९९ वैक्रमाब्दमध्ये प्रणीतम्।[3]

३. 'अमरटीकासर्वस्व' ग्रन्थेऽसकृदुद्धृतस्य मैत्रेयरचितस्य १३१ पृष्ठे नामनिर्देशपूर्वकं रूपावतारस्योद्धरणं प्राप्यते।[4] मैत्रेयस्य कालः प्रायेण सं० ११६५ वैक्रमाब्दः स्वीक्रियते। धर्मकीर्तेरियमुत्तरसीमाऽस्ति।

४. धर्मकीर्तिना 'रूपावतारे' पदमञ्जरीप्रणेतुर्हरदत्तस्योल्लेखोविहितः।[5] हरदत्तस्य कालः प्रायेण सं० १११५ वैक्रमाब्दोऽस्ति।

धर्मकीर्तेरियं पूर्वसीमाऽस्तीति कृत्वा रूपावतारस्य काल; प्रायेण सं० ११४० वैक्रमाब्दः स्वीकर्तुं शक्यते।

---

१. शाकमहीपतिवत्सरमाने एकनभोजनपञ्चविमाने। कण्ठविभूषणहारलतेव॥

२. वाः वारि रूपावतारे तु धर्मकीर्तिनास्य नपुंसकत्वमुक्तम्। लिङ्गा० स्वोपज्ञविवरण, पृष्ठ ७१, पंक्ति १५।

३. देखिये—हैम व्याकरण प्रकरण, अ० १७।

४. रूपावतारे तुणिलोपे प्रत्ययोत्पत्तेः प्रागेव कृते सत्येकाच्त्वाद् यङुदाहृतश्चोचूर्यंत इति। द्र०—रूपावतार भाग २, पृष्ठ २०६।

५. दीर्घान्त एवायं हरदत्ताभिमतः। रूपावतार भाग २, पृष्ठ १५७।

श्रीशंकरराम नामाभिधेयविदुषा रूपावतारस्य 'नीवि' नाम्नी टीका प्रणीता। टीकायाः अस्यास्त्रयो हस्तलेखा त्रिवेन्द्रम्राजकीयपुस्तकालये उपलभ्यन्ते।[1] एतदतिरिक्तमन्याश्च टीकाः रूपावतारस्य रचिता इति श्रीपाण्डेतयुधिष्ठिरमीमांसकमहोदयेन सूचितम्।

## ३. कृष्णलीलाशुकमुनिः

श्रीकृष्णलीलाशुकमुनिना 'प्रक्रियारत्न' नामधेय एको ग्रन्थः प्रणीत इति तायणेन स्वकीयायां धातुवृत्तौ बहुधा सूचितम्।[2] उद्धरणानामेतेषामवलोकनेन ज्ञायते यद् ग्रन्थोऽयं पाणिनीयसूत्राणां प्रक्रियानुसारी व्याख्यानग्रन्थोऽस्ति। 'दैवम्' इत्यस्य कृष्णलीलाशुकमुनिप्रणीतायां पुरुषकार व्याख्यायामपि 'प्रक्रियारत्न' मुद्धृतम्[3]। श्रीकृष्णलीलाशुकमुनेः कालः सं० १२५०–१३५० वैक्रमाब्दमध्ये वर्तते।

## ४. विमलसरस्वती

'विमलसरस्वती' नानाभिधेयविदुषा पाणिनीयसूत्राणां प्रयोगानुसारिणी 'रूपमाला' नाम्नी व्याख्या प्रणीता। टीकाग्रन्थेऽस्मिन् सर्वाणि पाणिनीयसूत्राणि न व्याख्यातानि सन्ति। रूपमालायाः कालः सं० १४०० वैक्रमाब्दात् पूर्वं स्वीक्रियते।

## ५. रामचन्द्राचार्यः

श्रीरामचन्द्राचार्यनामाभिधेयविदुषा सरलया पद्धतया पाणिनीयव्याकरणे प्रवेशसौविध्याय सरलैः शब्दैः प्रक्रियाकौमुदी' इत्यभिधेयो ग्रन्थः प्रणीतः।

---

१. द्र०-त्रिवेन्द्रम् राजकीय पुस्तकालय सूचीपत्र, भाग २, ग्रन्थांक ६२, भाग ४, ग्रन्थांक ४९; भाग ६, ग्रन्थांक ३१।

२. सायण–धातुवृत्ति, काशी संस्करण, पृष्ठ ३१,४१९ इत्यादि।

३. प्रपञ्चितं चैतत् प्रक्रियारत्ने।

ग्रन्थस्याऽस्य मुख्यं प्रयोजनं ऋजुमार्गेण प्रक्रियाप्रदर्शनमेवाऽस्ति। यद्यपि ग्रन्थोऽयं रूपावताररूपमालाभ्यां विस्तृतः, तथाप्यष्टाध्याय्याः समस्तसूत्राणां संकलनमत्रापि न जातम्। पाणिनीयव्याकरणप्रवेशकामेभ्यश्छात्रेभ्योऽस्य ग्रन्थस्य रचना जाता। ग्रन्थकर्त्रा ऋजु सरण्या सरलैः शब्दैश्च मध्यमो मार्गोऽवलम्बितः। अस्य ग्रन्थस्य मुख्यं प्रयोजनं संक्षेपतः पाणिनीयव्याकरणस्य प्रक्रियाज्ञानं विद्यते।

रामचन्द्रस्य वंशः शेषवंशः कथ्यते। व्याकरणज्ञानाय शेषवंशोऽतिप्रसिद्धोऽस्ति। एतद्वंशीयैरनेकैर्वैयाकरणैः पाणिनीयव्याकरणे प्रौढा ग्रन्थाः लिखिताः। रामचन्द्रस्य पितुर्नाम कृष्णमाचार्यः, पुत्रस्य च नाम नृसिंह आसीत्, नृसिंहेन 'धर्मसत्त्वालोक' नामको ग्रन्थो विरचितः, तत्रादौ सः स्वपितरं रामचन्द्राचार्यमष्टव्याकरणज्ञातारं साहित्यरत्नाकरञ्चमनुते।[1] रामचन्द्राचार्यो हि स्वपितुः कृष्णमाचार्यात् पितृव्याद् गोपालाचार्याच्च सर्वाः विद्या अधीतवान्। अस्य प्रपौत्रेण विट्ठलाचार्येण प्रक्रियाकौमुद्याः 'प्रसाद' नाम्नी व्याख्या प्रणीता। प्रक्रियाकौमुदीप्रसादस्यैको हस्तलेखः पूनास्थडकनकालेजपुस्तकालये वर्तते, यस्यान्ते ग्रन्थलेखनकालः सं० १५८३ इत्युट्टंकितः। द्वितीयश्च सं० १५६० वैक्रमाब्दीयो हस्तलेखो बड़ौदास्थराजकीयपुस्तकालये वर्तते। तृतीयश्च ततोऽपि लन्दनस्य इण्डिया आफिसपुस्तकालये सुरक्षितोऽस्ति, तस्य लेखनकालः सं० १५३६ इत्युट्टंकितः। तस्य हस्तलेखस्यऽन्तिमभागस्य लेखोऽधोलिखितोऽस्ति—

'सं० १५३६[2] वर्षे माघवदि एकादश्यां रवौ श्रीमदानन्दपुरस्थानोत्तमे आभ्यन्तरनगरजातीयपण्डितअनन्तसुतपण्डितनारायणादीनां पठनार्थं कुठारीव्यवगहितसुतेन विश्वरूपेण लिखितम्।'

---

१. द्र०, इण्डिया आफ़िस लन्दन के संग्रह का सूचीपत्र ग्रन्थाङ्क १५६६।

२. इण्डिया आफिस लन्दन के पुस्तकालय सूचीपत्र, भाग २, पृष्ठ १६७, ग्रन्थाङ्क ६१९।

अनेन स्पष्टरीत्या प्रतीयते यद् विठ्ठलाचार्येण सं० १५३६ वैक्रमाब्दात् पूर्वं प्रकियाकौमुशाष्टीकाऽवश्यमेव प्रणीताऽऽसीत् । श्रीकृष्णविरचितायाः प्रक्रियाकौमुदी-वृत्तेरेको हस्तलेखः पूनास्थभण्डारकर ओरियण्टलरिसर्चसोसाइटीपुस्तकालये वर्तते । तस्य लिपिकालः सं० १५१४ वैक्रयाब्दोऽस्ति ।[१] अनेन निश्चीयते यत् सं० १५१४ वैक्रमाब्दात् पूर्वमेव प्रक्रियाकौमुद्याः प्रणयनं सज्जातभासीत् । वृत्तेरस्याः लेखकः श्रीकृष्णः रामचन्द्रशिष्यः तज्येष्ठभ्रातुर्नृसिंहस्य पुत्रः सुप्रसिद्धो वैयाकरणः शेषकृष्ण एवाऽस्ति । तदनुसारं विठ्ठलस्य कालश्चतुर्दशशतकस्याऽन्त भागः, पञ्चदशशतकस्याऽऽरम्भभागो वा मन्तव्यः ।

प्रक्रियाकौमुद्याः सम्पादकेन लिखितमस्ति यद् हेमाद्रिणा स्वीयरघुवंशटीकायां प्रक्रियाकौमुद्यास्तत्प्रसादटीकायाश्चोद्धरणद्वयं समुद्धृतम् । तदनुसारं रामचन्द्रा-चार्यस्य, विट्लस्य च कालः चतुर्दशेशवीयशतकमस्ति ।[२] श्री पं० युधिष्ठिरमीमां-सकमहोदयमतानुसारं श्रीरामचन्द्राचार्यस्य कालः सं० १४५० वैक्रमाब्दः स्वीकर्तव्यः ।

## ६. प्रक्रियाकौमुद्याः व्याख्यातारः

गङ्गायमुजयोरन्तरालवर्तिनः पत्रपुञ्जस्य राज्ञः कल्याणस्याऽऽज्ञया नृसिंहपुत्रेण श्रीशेषकृष्णेन प्रक्रियाकौमुद्याः 'प्रकाश' नाम्नी व्याख्या प्रणीता । तथा चोक्तम्—

'कल्याणस्य[३] तनूद्भवस्य नृपतिः कल्याणमूर्तेस्ततः
कल्याणीमतिमाकलय्य विषमग्रन्थार्थसंवित्तये ।
कृष्णं शेषनृसिंहसूरितनयं श्रीप्रक्रियाकौमुदी-
टीकां कर्तुमसौ विशेषविदुषा प्रीत्यै समाजिज्ञपत् ।।'

---

१. सन् १९२५ में प्रकाशित भण्डारकर ओरियण्टलरिसर्च सोसाइटी पूना का सूचीपत्र, पृ० २, ग्रन्थाङ्क ३२८ ।

२. प्रक्रियाकौमुदी भाग १, भूमिका, पृष्ठ ४४, ४५, भण्डारकर ओरियण्टल रिसर्च इन्स्टीट्यूट, पूना ।

३. तदेव, भाग १, भूमिका, पृष्ठ ४५ ।

अयं श्रीरामचन्द्राचार्यस्य शिष्यः, श्रीरामचन्द्राचार्यपुत्रस्य नृसिंहस्य च गुरुरासीत्। प्रक्रियाकौमुद्याः प्रकाशटीकाया अपरंनाम 'प्रक्रियाकौमुदीवृत्ति' रित्यप्यस्ति। अस्याः सं० १५१८ वैक्रमाब्दीय एको हस्तलेखः पूनास्थ भण्डारकार ओरियण्टलरिसर्चसोसाइटीपुस्तकालये चेपलभ्यन्ते। श्रीशेषकृष्णस्य कालः प्रायेण सं० १४७५ वैक्रमाब्दः स्वीकर्तुं शक्यते।

श्रीरामचन्द्राचार्यपौत्रेण नृसिंहस्य च पुत्रेण श्रीविट्ठलाचार्येण प्रक्रियाकौमुद्याः 'प्रसाद' नाम्नी टीका प्रणीता। श्रीविट्ठलाचार्येण रामेश्वरात् (वीरेश्वराद्) व्याकरणशास्त्रस्याऽध्ययनं विहितमासीत्। प्रसादटीकायाः सं० १५८३, १५६०, १५३६ वैक्रमाब्दानां हस्तलेखाः पूनास्थडक्कनकालेजपुस्तकालये, बड़ौदास्थराजकीयपुस्तकालये लन्दनस्थइण्डियाआफिसपुस्तकालये च समुपलभ्यन्ते, तत्र सं० १५३६ वैक्रमाब्दीयोहस्तलेखः प्राचीनतमः। श्रीविट्ठलाचार्यस्य कालः प्रायेण सं० १५२० वैक्रमाब्दः स्वीकर्तुं शक्यते।

श्रीशेषकृष्णपुत्रश्रीवीरेश्वरशिष्येण, अतः प्रायेण सं० १५००–१५५० वैक्रमाब्दमध्ये समुत्पन्नेन श्रीचक्रपाणिदत्तेन प्रक्रियाकौमुद्याः 'प्रक्रियाप्रदीप' नाम्नी व्याख्या प्रणीता। ग्रन्थोऽयं सम्प्रति नोपलभ्यते।

श्रीवारणवनेश नामाभिधेयविदुषा प्रक्रियाकौमुद्याः 'अमृतसृति' नाम्नी टीका विलिखिता। अस्या एको हस्तलेखस्तञ्जौरस्थराजकीयपुस्तकालयेऽस्ति।[1] अस्यकालो न ज्ञायते।

श्रीदामोदरविज्ञपुत्रेण श्रीविश्वकर्माशास्त्रिनामाभिधेयविदुषा प्रक्रियाकौमुद्याः 'प्रक्रियाव्याकृति' नाम्नी व्याख्या प्रणीता। अस्य कालो न ज्ञायते। तञ्जोरसूचीपत्रे टीकाया अस्या नाम 'प्रक्रियाप्रदीप' इत्युल्लिखितम्[2]।

---

१. द्र०, तञ्जर राजकीय पुस्तकालय, भाग १०, ग्रन्थाङ्क ५७५५।

२. द्र०, तञ्जौर राजकीय सूचीपत्र, भाग १०, पृष्ठ ४३०४।

केनचित् श्रीनृसिंह नामाभिधेयविदुषा प्रक्रियाकौमुद्याः 'व्याख्यान'[१] नाम्नी टीका प्रणीता। अस्या एको हस्तलेखः उदयपुरस्थराजकीयपुस्तकालये,[२] अपरश्च हस्तलेखो मद्रासराजकीयपुस्तकालये[३] समुपलभ्यते।

केनचिदज्ञातनामाभिधेयविदुषा प्रक्रियाकौमुद्याः 'निर्मलदर्पण' नाम्नी टीका प्रणीता। अस्या एको हस्तलेखो मद्रासराजकीयपुस्तकालये संगृहीतोऽस्ति।[४]

केनचित् तापतीतटवर्ति 'प्रकाशपुरी' नगरीवास्तव्येन श्रीमधुसूदनपुत्रेण[५] श्रीजयन्तनामाभिधेयविदुषा प्रक्रियाकौमुद्याः 'तत्त्वचन्द्र' नाम्नी व्याख्या प्रणीता। टीकाग्रन्थस्याऽस्यैको हस्तलेखो लन्दननगरस्थइण्डियाआफिसग्रन्थालये उपलभ्यते।[६] जयन्तेन टीकेयं शेषकृष्णप्रणीतां प्रक्रियाकौमुदीवृत्तिमाश्रित्य प्रणीता अस्य कालः प्रायेण षोडशवैक्रमशतकस्य मध्यभागः स्वीकर्तुं शक्यते।

श्रीविद्यानाथ नामाभिधेयविदुषा प्रक्रियाकौमुद्याः 'प्रक्रियारञ्जन' नाम्नी टीका प्रणीता। श्रीआफ्रेख्टमहोदयेन बृहत्सूचीपत्रे अस्याः टीकाया उल्लेखो विहितः।

श्रीवरदराज नामाभिधेयविदुषा प्रक्रियाकौमुद्याः 'विवरण' नाम्नी टीका

---

१. उदयपुर राजकीय पुस्तकालय सूचीपत्र, पृष्ठ ८०।

२. मद्रास राजकीय हस्तलेख पुस्तकालय सूचीपत्र, भाग २, खण्ड १ सी, पृष्ठ २२९३।

३. मद्रास राजकीय हस्तलेख पुस्तकालय सूचीपत्र भाग ४, खण्ड १८ पृष्ठ ५५८६, ग्रन्थाङ्क ३७७५।

४. भूपीठे तापतीतटे विजयते तत्र प्रकाशापुरी। तत्र श्रीमधुसूदनो विरुरुचे विद्वद्विभूषामणिः। तत्पुत्रेण जयन्तकेन विदुषामालोच्य सर्वं मतम्, तत्त्वे संकलिते समाप्तिमगमत् सन्धिस्थिता व्याकृतिः॥

५. इण्डिया आफिस लन्दन सूचीपत्र, भाग १, पृष्ठ १७०, ग्रन्थाङ्क ६२५।

६. श्रीकृष्णपण्डितवचोम्बुधिमन्थनोत्थम् सार निपीय फणि सम्मतयुक्तिमिष्टम्। अर्थ्यामविस्तरयुतां कुरुते जयन्तः सत्कौमुदीविवृतिमुत्तमसंमदाय॥

प्रणीता। टीकाया अस्या एको हस्तलेखः उदयपुरस्य राजकीयपुस्तकालये वर्तते।[१]

श्रीकाशीनाथ नामाभिधेयेन केनचिद् विदुषा प्रक्रियाकौमुद्याः 'प्रक्रियासार' नाम्नी टीकाप्रणीता। अस्या एको हस्तलेखः पूनास्थभण्डारकरप्राच्यविद्याप्रतिष्ठान-संग्रहे उपलभ्यते[२]।

## . सिद्धान्तकौमुदीकारो भट्टोजिदीक्षितः

आचार्येण भट्टोजिदीक्षितेन पाणिनीयव्याकरणे प्रक्रियानुसारिणी अत्युपयोगिनी टीका प्रणीता या 'सिद्धान्तकौमुदी' नाम्ना प्रसिद्धाऽस्ति। एतन्निर्माणात् पूर्वं धर्मकीर्तिना कृते रूपावतारे, विमलसरस्वतीकृतरूपमालायाम्, रामचन्द्रस्य प्रक्रियाकौमुद्यादिषु पाणिनीयाष्टाध्याय्याः समस्तसूत्राणां सन्निवेशो नासीत्। एतन्नैन्यूनपरिहाराय भट्टोजिदीक्षितेन सिद्धान्तकौमुद्या रचना कृता। साम्प्रतं समस्ते भारते पाणिनीयव्याकरणस्याध्ययनाध्यापनादिकं सिद्धान्तकौमुद्या आधारेणैव प्रचलति।

प्रक्रियाग्रन्थेषु सर्वोच्चं स्थानं विभर्ति, श्रीभट्टोजिदीक्षितकृता सिद्धान्तकौमुदी। अत्र ग्रन्थे पाणिनीयाष्टाध्याय्याः सर्वाण्यपि सूत्राणि प्रयोगसिद्धिदृष्ट्या सुव्यवस्थितानि तथा दृश्यन्ते यथा मालाकारो नैकविधपुष्पाणि यथायथं मालारूपेण ग्रथ्नाति। अत्र श्रीदीक्षितमहोदयेन ग्रन्थान्तरेषु प्रसृतानां प्रयोगाणां विचाराः प्रयोगसाधनावसरे कृताः साधु विजृम्भन्ते येषां परिशीलनेन भाषाविषयकः समस्तः सन्देहसमूहो दूरीभवति। अद्य तु पाणिनीयव्याकरणस्य सम्पूर्णमपि क्षेत्रं सिद्धान्तकौमुद्या क्रोडीकृतम्, तदनन्तरं तत्र बहुभिर्विद्वद्भिर्विविधाष्टीकाः कृताः।

---

१. द्र० उदयपुर राजकीय पुस्तकालय सूचीपत्र, पृष्ठ ८०, ग्रन्थाङ्क ७९१।

२. भण्डारकर प्राच्य विद्या प्रतिष्ठान, पूना, व्याकरणविभागीय संग्रह सूचीपत्र संख्या ११९।२४२।A१८९५-९८।

## ८. सिद्धान्तकौमुद्याः व्याख्यातारः

श्रीभट्टोजिदीक्षितमहोदयेन स्वयं सिद्धान्तकौमुद्याः व्याख्या प्रणीता, या 'प्रौढमनोरमा' इति नाम्ना प्रसिद्धाऽस्ति। अत्र तेन प्रक्रियाकौमुद्यास्तट्टीकानाञ्च स्थाने-स्थाने खण्डनं विहितम्। श्रीभट्टोजिदीक्षितेन 'यथोत्तरं मुनीनां प्रामाण्यम्' इत्यत्र महद् बलं प्रदत्तमस्ति। प्राचीनग्रन्थकारा अन्यवैयाकरणानां मतानामपि संग्रह कुर्वन्ति स्म, किन्तु श्रीभट्टोजिदीक्षितेन प्रक्रियाया अस्या उच्छेद एव विहितः। अत आधुनिककालस्य पाणिनीया वैयाकरणा अर्वाचीनव्याकरणानां तुलनात्मकज्ञानेन सर्वथा वञ्चिताः सञ्जाताः।

श्रीभट्टोजिदीक्षितप्रणीतायाः 'प्रौढमनोरमायाः' संवत् १७०८ वैक्रमाब्दस्यैको हस्तलेखः पूनास्थभण्डारकरप्राच्यविद्याप्रतिष्ठाने वर्तते।

प्रौढमनोरमायां श्रीभट्टोजिदीक्षितपौत्रेण श्रीहरिदीक्षितेन 'बृहच्छब्दरत्न' नाम्नी 'लघुशब्दरत्न' नाम्नी च व्याख्या प्रणीता। तत्र लघुशब्दरत्नं मुद्रितम् सर्वत्र प्राप्यते, परं बृहच्छब्दरत्नमिदानीं यावदमुद्रितमेवास्ति। केचन विद्वांसो मन्यन्ते यन्नागेशभट्ट एव लघुशब्दरत्नं स्वयं विलिख्य स्वगुरोर्नाम्ना प्रकाशितवान्। लघुशब्दरत्नेऽप्यनेकैर्विद्वद्भिष्टीकाः विलिखिताः।

सं० १५५०-१६०० वैक्रमाब्दमध्यकालसमुत्पन्नेन श्रीवामनेन्द्रसरस्वति-शिष्येण श्रीज्ञानेन्द्रसरस्वतिमहोदयेन सिद्धान्तकौमुद्याः 'तत्त्वबोधिनी' नाम्नी व्याख्या प्रणीता। ग्रन्थकारेणाऽत्र प्रायः प्रौढमनोरमाया एव संक्षेपो विहितः।

सं० १६००-१६७५ वैक्रमाब्दमध्यकालिकेन श्रीज्ञानेन्द्रसरस्वतिशिष्येण श्रीनीलकण्ठवाजपेयिमहोदयेन तत्त्वबोधिन्याः 'गूढार्थदीपिका' नाम्नी टीका, सिद्धान्तकौमुद्याश्च 'सुखबोधिनी' नाम्नी व्याख्या प्रणीता।

सं० १६८०-१७२० वैक्रमाब्दमाध्यकालिकेन तात्कालिकोत्कृष्ट शैवविदुषा श्रीमधुकरत्रिपाठिनस्तनूजेन श्रीरामानन्द नामाभिधेयविदुषा सिद्धान्तकौमुद्याः 'तत्त्वदीपिका' नाम्नी टीका प्रणीता। सा सम्प्रति हलन्तस्त्रीलिङ्गं यवदुपलभ्यते।

प्रायेण सं० १७१५ वैक्रमाब्दीयेन श्रीवेङ्कटाद्रि भट्टात्मजश्रीतिरुमलभट्ट-तनूजेन श्रीरामकृष्णभट्टनामाभिधेयविदुषा सिद्धान्तकौमुद्याः 'रत्नाकर' नाम्नी टीका प्रणीता। अस्याः हस्तलेखाः तञ्जौरराजकीयपुस्तकालये, जम्मूस्थरघुनाथ-मन्दिरपुस्तकालये वर्तन्ते। जम्मूस्थहस्तलेखेष्वेकस्यलेखनकालः सं० १७४४ वर्तते।[1] भण्डारकरप्राच्यविद्याप्रतिष्ठानपूनासंग्रहे टीकाग्रन्थस्याऽस्य चत्वारो हस्तलेखाः प्राप्यन्ते।[2]

सं० १७३०-१८१० वैक्रमाब्दमध्यकालिकेन श्रीनागेशभट्टनामाभिधेयविदुषा सिद्धान्तकौमुद्याः 'बृहच्छब्देन्दुशेखर' 'लघुशब्देन्दुशेखर' इत्याख्ये द्वे टीके प्रणीते। लघुशब्देन्दुशेखरेऽनेकाष्टीकाः विलिखिताः।

सं० १७४५ वैक्रमाब्दीयेन चोलदेशान्तर्गतकरण्डमाणिक्यग्रामनिवासिना श्रीरङ्गनाथयज्वा नामाभिधेयविदुषा सिद्धान्तकौमुद्याः 'पूर्णिमा' नाम्नी टीका प्रणीता।[3]

सं० १७४०-१८०० वैक्रमाब्दमध्यकालिकेन, चोल (तञ्जौर)-देशस्य भोसल-वंशीयशाहजीशरभजी-तुक्कोजीत्याख्य त्रयाणां राज्ञां मन्त्रिणः विदुषः सार्वभौम-आनन्दरायस्याऽध्वर्युणा, श्रीमहादेववाजपेयिसूनुना, श्रीविश्वेश्वरवाजपेयिशिष्येण श्रीवासुदेववाजपेयि नामाभिधेयविदुषा सिद्धांतकौमुद्याः 'बालमनोरमा' नाम्नी टीका प्रणीता। टीकेयमतीवसरलेति कृत्वा छात्राणां कृतेऽतीवोपयोगिनी।

श्रीदेवीदत्तात्मजश्रीरामसेवकपुत्रेण श्रीकृष्णमित्रनामाभिधेयविदुषा सिद्धान्त-कौमुद्याः 'रत्नार्णव' नाम्नी टीका प्रणीता, यस्या उल्लेखः श्रीआफ्रेक्टमहोदयेन स्वकीये बृहत्सूचीपत्रे विहितः।

---

१. जम्मू रघुनाथमन्दिर पुस्तकालय सूचीपत्र पृष्ठ, ५०।

२. भण्डारकर प्राच्य विद्या प्रतिष्ठान पूना, व्याकरणविषयकसूचीपत्र नं० १७०, १७१, १७२, १७३।

३. मद्रास राजकीय हस्तलेख पुस्तकालय सूचीपत्र भाग १, खण्ड १ C खण्ड C पृ० ८०८, ग्रन्थाङ्क ६३४ C।

सं० १८४७ वैक्रमाब्दीयेन शेषकुलोत्पन्नेन श्रीनागोजीपण्डितानां पुत्रेण श्रीरामचन्द्रपण्डितेन सिद्धांतकौमुद्याः स्वरप्रक्रियांशस्य व्याख्या प्रणीता। जम्मूस्थ-रघुनाथमन्दिरपुस्तकालये उपलब्धे हस्तलेखेऽन्तिमभागेऽधोलिखितः पाठ उपलभ्यते—

'इति शेषकुलोत्पन्नेन नागोजीपण्डितानां पुत्रेण रामचन्द्रपण्डितेन विरचिता स्वरप्रक्रियाव्याख्या समाप्ता। सं० १८४७ वैशाखमासे शुक्ल-पक्षे ४ वार शनैश्चर।'

प्रायेण सं० १७०० वैक्रमाब्दीयेन श्रीवेङ्कटाद्रिपुत्रेण श्रीतिरुमलद्वादशाहयाजि-महोदयेन सिद्धान्तकौमुद्याः 'सुमनोरमा' नाम्नी टीका प्रणीता। सुमनोरमाया एको हस्तलेखस्तञ्जौरपुस्तकालये उपलभ्यते।[1]

एतदतिरिक्तम्, सिद्धान्तकौमुद्या अधोलिखितानां टीकानां हस्तलेखाः तञ्जौर-पुस्तकालये[2] उपलभ्यन्ते—

१—तोप्पलदीक्षितकृता—प्रकाशटीका
२—अज्ञातकर्तृकी लघुमनोरमा
३— ,, शब्दसागर
४— ,, शब्दरसार्णव
५— ,, सुधाञ्जन

एतदतिरिक्तम्, श्रीलक्ष्मीनृसिंह नामाभिधेयविदुषा प्रणीतायाः 'विलास' नाम्न्याष्टीकाया हस्तलेखो मद्रासराजकीयपुस्तकालये समुपलभ्यते।[3]

श्रीआफ्रेख्टमहोदयेन स्वकीये बृहत्सूचीपत्रे सिद्धान्तकौमुद्या अधोलिखितानां टीकानामुल्लेखो विहितः—

१. शिवरामचन्द्र सरस्वती रत्नाकरटीका
२. इन्द्रदत्तोपाध्याय फक्किकाप्रकाशटीका

---

१. तञ्जौरपुस्तकालय सूचीपत्र, भाग १०, पृष्ठ ४२११, ग्रन्थाङ्क ५६४९।
२. तञ्जौरपुस्तकालय सूचीपत्र, भाग १०, ग्रन्थाङ्क ५६६०-५६६३, ५६६६।
३. मद्रासराजकीय हस्तलेख पुस्तकालय सूचीपत्र, भाग २९, पृष्ठ १०५७५, ग्रन्थाङ्क १६२३४।

३. सारस्वतव्यूढमिश्र बालबोधटीका
४. वल्लभ मानसरञ्जनी

## . प्रौढमनोरमाखण्डनकर्तारः

अनेकैर्वैयाकरणैर्भट्टोजिदीक्षितप्रणीतायाः प्रौढमनोरमायाः खण्डने ग्रन्थाः प्रणीताः, तत्राऽनेकेषाम्महत्त्वपूर्णग्रन्थप्रणेतॄणामुल्लेखोऽत्र विधीयते—

१. शेषवीरेश्वरपुत्रः (सं० १५७५ वै०)

श्रीशेषवीरेश्वर ( रामेश्वर ) पुत्रेण 'प्रौढमनोरमा' खण्डने एको ग्रन्थः प्रणीतः। अस्योल्लेखः पण्डितराजेन जगन्नाथेन "प्रौढमनोरमाखण्डने" विहितः। तेनोक्तम्—

शेषवंशावतंसानां[१] श्रीकृष्णाख्यपण्डितानां चिरायार्चितयोः पादुकयोः प्रसादादासादितशब्दानुशासनास्तेषु च पारमेश्वरं पदं प्रयातेषु कलिकालवशंवदी भवन्तस्तत्र भवद्भिरुल्लासितं प्रक्रियाप्रकाशमाशयानवबोधनिबन्धनैर्दूषणैः स्वयं निर्मिताया मनोरमायामाकुल्यमकार्षुः। सा च प्रक्रियाप्रकाशकृतां पौत्रैरखिलशास्त्रमहार्णवमन्थाचलायमानमानसानामस्मद्गुरुवीरेश्वरपण्डितानां तनयैर्दूषिता अपि।"

श्रीशेषवीरेश्वरपुत्रस्य, तद्ग्रन्थस्य नाम न ज्ञायते। तेन प्रौढमनोरमाखण्डने यो ग्रन्थः प्रणीतः, स. सम्प्रति न प्राप्यते।

२. चक्रपाणिदत्त ( सं० १५००-१५५० वै० )

चक्रपाणिदत्तेन भट्टोजिदीक्षितप्रणीतायाः प्रौढमनोरमायाः खण्डने "परमतखण्डनम्" इत्यभिधेय एको ग्रन्थः प्रणीतः। चक्रपाणिदत्तप्रणीतं प्रौढमनोरमाखण्डनन् सम्पूर्णरूपेण सम्प्रति नोपलभ्यते। अस्य केचनांशा वाराणस्या "लाजरसकम्पनीतः प्रकाशिताः। अस्य हस्तलेखद्वयं पूनास्थभण्डारकरप्राच्यविद्याप्रतिष्ठानसंग्रहे उपलभ्यते।[२]

---

१. चौखम्बा संस्कृत सीरीज काशी से सं० १९९१ में प्रकाशित प्रौढमनोरमा भाग ३ के अन्त में मुद्रित प्रौढमनोरमाखण्डन, पृष्ठ १।

२. द्र०, भण्डारकर प्राच्यविद्या प्रतिष्ठान पूना, व्याकरणविषयक सूचीपत्र नं० १४९,१५०॥

चक्रपाणिदत्तस्य खण्डनोद्धारः श्रीभट्टोजिदीक्षितपौत्रेण श्रीहरिदीक्षितेन प्रौढमनोरमायाः शब्दरत्नव्याख्यायां विहितः।

३. पण्डितराजो जगन्नाथः ( सं० १६१७-१७३३ वै० )

पण्डितराजेन जगन्नाथेन भट्टोजिदीक्षितप्रणीतायाः प्रौढमनोरमायाः खण्डने 'कुचमर्दन' नामा ग्रन्थः प्रणीतः। ग्रन्थोऽयं सम्प्रति सम्पूर्णरूपेण नोपलभ्यते अस्य केचनांशाः सं० १९९१ वैक्रमाब्दे चौखम्बासंस्कृतसीरिजकाशीतः प्रकाशितस्य प्रौढमनोरमातृतीयभागस्यान्ते मुद्रिताः।

पण्डितराजेन जगन्नाथेन शब्दकौस्तुभस्य खण्डनेऽपि कश्चन ग्रन्थः प्रणीतः इत्युक्तम् मनोरमाकुचमर्दने—

'इत्थं च ओत् सूत्रगतकौस्तुभग्रन्थाः सर्वोऽप्यसंगत इति ध्येयम्। अधिकं कौस्तुभखण्डनादवसेयम्[1]।'

सम्प्रति ग्रन्थोऽयं नोपलभ्यते। पण्डितराजजगन्नाथस्य भट्टोजिदीक्षितेन सहाऽहिनकुलवैरवद् सहजवैर उद्भूतः। तथा चोक्तम् केनचित् कविना—

'दृप्यद् द्राविड[2] दुर्ग्रहवशाम्लिष्टं गुरुद्रोहिणा
यन्म्लेच्छेति वचोऽविचिन्त्य सदसि प्रौढेऽपि भट्टोजिना।
तत्सत्यापितमेव धैर्यनिधिना यत्स व्यमृद्नात् कुचम्
निर्बध्यास्य मनोरमामवशयन्नप्पयाद्यान् स्थितान्॥'

पण्डितराजजगन्नाथस्तैलङ्गब्राह्मण आसीत्। अस्याऽपरं नाम वेल्लनाडू इत्यासीत् तं जनाः 'त्रिशूली' ति नाम्नाऽपि सम्बोधयन्ति स्म। अस्य पितुर्नाम पेरम्भट्टः, मातुर्नाम च "लक्ष्मी" त्यासीत्। पण्डितराजो जगन्नाथो दिल्लीश्वरस्य शाहजहाँ-सम्राजः, दाराशिकोहस्य च प्रेमभाजन आसीत्। "शाहजहाँसम्राजाऽयं 'पण्डितराज' इत्युपाधिना विभूषितः पण्डितराजेन शेषकृष्णपुत्राद् वीरेश्वराद् (रामेश्वराद्)

१. चौखम्बा संस्कृत सीरीज काशी से सं० १९९१ में प्रकाशित प्रौढमनोरमा भाग ३ के अन्तमें मुद्रित, पृष्ठ २१।

२. रसगंगाधर हिन्दी टीका (काशी) में उद्धृत।

विद्याध्ययनं विहितमासीत्।[1] अस्य कालः सं० १६१७—१७३३ वैक्रमाब्दः स्वीकर्तुं शक्यते।

## १०. वरदराजाचार्यः

आचार्यो वरदराजो दाक्षिणात्यो ब्राह्मण आसीत्। तस्य पूज्यः पिताश्रीदुर्गातनयनामा, गुरुश्च श्रीभट्टोजिदीक्षित आसीत्। आचार्यो वरदराज अध्ययनसमाप्त्यनन्तरं स्वगुरोराज्ञया सिद्धान्तकौमुदीपथप्रदर्शकं ''लघुसिद्धान्तकौमुदी'' त्याख्यं ग्रन्थं रचयामास। वरदराजाचार्यस्याऽयं प्रथमः प्रयासः प्रारम्भिकछात्राणां कृते संस्कृतस्य सर्वोत्तमं सोपानं सिद्धम्।

लघुसिद्धान्तकौमुद्याः प्रणयनानन्तरं वरदराजः सं० १६५० वैक्रमाब्दे स्वगुरोः सिद्धान्तकौमुदीं लघुरूपेण संकलनद्वारेण मध्यसिद्धान्तकौमुदीं' प्रणिनाय। मध्यकौमुद्या अन्ते वरदराजेनोक्तम्—

'कृतिर्वरदराजस्य　　मध्यसिद्धान्तकौमुदी।
तस्याः संख्या तु विज्ञेया खबाणकरवह्निभिः॥'

वरदराजाचार्यस्य मध्यसिद्धान्तकौमुदोमवलोक्य श्रीभट्टोजिदीक्षितः क्षुब्धः सञ्जातः वरदराजस्याऽनया रचनया स्वसिद्धान्तकौमुद्याः ह्रासस्य निश्चयमवगत्य सः मध्यसिद्धान्तकौमुद्या विकासं शशाप; येन सिद्धान्तकौमुद्यपेक्षयाऽत्यन्तसारल्यसुबोधोपादेयत्वगुणयुक्तत्वेऽपि ''मध्यकौमुदी'' नामा ग्रन्थो खद्योतवदप्रतिभः संवृत्तः—लोकप्रियो भवितुं न शशाक। किन्त्वयापि वरदराजस्य मध्यसिद्धान्तकौमुदी सारल्येन संस्कृतव्याकरणशास्त्रस्य त्वरितं पूर्णं च ज्ञानं कारयति।

## ११. नारायणभट्टः

केरलप्रदेशवास्तव्येन श्रीनारायणभट्टेन ''प्रक्रियासर्वस्व'' इत्यभिधेयः प्रक्रियाग्रन्थः प्रणीतः। ग्रन्थेऽस्मिन् विंशतिप्रकरणानि सन्ति।[2] प्रक्रियासर्वस्वग्रन्थाव-

---

१. अस्मद्गुरुवीरेश्वरपण्डितानां……प्रौढमनोरमाखण्डनम्, पृ० १।

२. इह संज्ञा परिभाषा सन्धिः कृत्तद्धिताः समासाश्च। स्त्रीप्रत्ययाः सुबर्थाः सुपांविधिश्चात्मनेपदविभागः तिङापि च लार्थविशेषाः सन्नन्तयङ्लुकश्च सुब्धातुः। न्याय्यो धातुरुणादिरछान्दसमिति सन्तु विंशतिखण्डाः॥
॥ प्रक्रियासर्वस्व, भाग १, पृष्ठ ३॥

लोकनेन ज्ञायते यत् श्रीनारायणभट्टेन कस्यचन देवनारायणना-ाभिधेयस्य भूपतेराज्ञया ग्रन्थोऽयं प्रणीतः[१]। 'प्रक्रियासर्वस्व' ग्रन्थस्य टीकाकारेण श्रीकेरलवर्मदेवमहोदयेन लिखितम् यत् श्रीनारायणभट्टेन ग्रन्थोऽयं षष्टिमितैर्दिवसैः प्रणीतः।[२] ग्रन्थेऽस्मिन् पाणिनीयाष्टाध्याय्यासकलान्यपि सूत्राणि यथास्थानं सन्निविष्टानि। प्रकरणानां विभागः क्रमश्च सिद्धान्तकौमुदीतोभिन्नोऽस्ति। ग्रन्थकारेण भोजदेवप्रणीतात् सरस्वतीकण्ठाभरणात्, तद्वृत्तेश्च महती सहायता गृहीतेति प्रतीयते।

श्रीनारायणभट्टप्रणीत 'अपाणिनीयप्रामाणिकता' ग्रन्थसम्पादक श्री ई० बी० रामशर्ममहोदयमतानुसारं श्रीनारायणभट्टः केरलप्रदेशान्तर्गत 'नावा' क्षेत्रं निकषा 'निला' नदीतीरवर्त्तिनि 'मेल्युत्तूर' ग्रामे जनिं लेभे। श्रीभट्टस्य पितुर्नाम 'मातृदत्त' आसीत्। श्रीनारायणभट्टेन मीमांसकमूर्धन्यात् माधवाचार्याद् वेदा अधीताः। तेन स्वपितृसन्निधौ पूर्वमीमांसाशास्त्रमधीतम्, श्रीदामोद्रात् तर्कशास्त्रम्, श्रीअच्युताच्च व्याकरणशास्त्रमधीतम्।

कालः—श्रीपण्डित ई०वी० रामशर्मणा 'अपाणिनीयप्रामाणिकता' इत्यभिधेयग्रन्थस्य रचनाकालः सन् १६१८–९१ ईशवीयः स्वीकृतः। 'प्रक्रियासर्वस्व' ग्रन्थस्य सम्पादकेन श्रीसाम्बशास्त्रिणा श्रीनारायणभट्टस्य कालः सन् १५६०-१६७६ अर्थात् सं० १६१७-१७३३ वैक्रमाब्दः स्वीकृतः।[३] 'प्रक्रियासर्वस्व' ग्रन्थस्य टीकाकारेण श्रीकेरलवर्मदेवेन लिखितम—'श्रीभट्टोजिदीक्षितः श्रीनारायणभट्टं साक्षात्कर्तुं केरलप्रदेशं प्रस्थितः, किन्तु मार्गे श्रीनारायणमृत्युवृत्तमाकर्ण्य प्रत्यावर्तितः।[४] दि लेखोऽयं प्रामाणिकत्वेन स्वीक्रियेत तर्हि श्रीनारायणभट्टस्य

१. प्रक्रियासर्वस्व, प्रारम्भिक श्लोक २, ४, ८॥

२. ……… ……प्रक्रियासर्वस्वं स मनीषिणामचरमः षष्टिदिनैर्निर्ममे। प्रक्रियासर्वस्य भूमिका, भाग २, पृष्ठ २।

३. प्रक्रियासर्वस्व (सम्पादक—श्रीसाम्बशास्त्री) अंग्रेजी भूमिका भाग १, पृष्ठ ३।

४. प्रक्रियासर्वस्व, भूमिका भाग २, पृष्ठ २

कालः षोडशवैक्रमशतकम् स्वीकर्तव्यम्भविष्यति। मतस्याऽस्य पुष्टिरनेन तथ्येनाऽपि भवति यत् श्रीनारायणभट्टेन कुत्रचिदपि श्रीभट्टोजिदीक्षितस्य ग्रन्थात् साहाय्यं न गृहीतम्। परन्तु प्रक्रियासर्वस्वग्रन्थस्य सम्पादकेन श्रीसाम्बशास्त्रिणा लिखितम् यदनेके जनाः पूर्वोक्तवृत्तं विपरीतं वर्णयन्ति, अर्थात् श्रीनारायणभट्टः श्रीभट्टोजिदीक्षितं साक्षात्कर्तुं केरलप्रदेशात् प्रास्थितः, किन्तु पथि श्रीभट्टोजिदीक्षितस्य मृत्युवृत्तान्तमाकर्ण्य प्रत्यावर्तितः।[१] श्रीनारायणभट्टस्य गुरुः मीमांसकमूर्द्धन्यो माधवाचार्यो यदि सायणाचार्यस्य ज्येष्ठो भ्राता भवेत्तर्हि श्रीनारायणभट्टस्य कालः वैक्रमाब्दस्य पञ्चदशशतकं स्वीकर्तव्यम्भविष्यति। अतः श्रीनारायणभट्टस्य कालो विमर्शार्हः।

कृतयः—श्रीनारायणभट्टेन "प्रक्रियासर्वस्व-क्रियाक्रम-चमत्कारचिन्तामणि-धातुकाव्य-अपाणिनीयप्रामाणिकताप्रभृतयोऽष्टत्रिंशत् मिता ग्रन्था सुरगिरा प्रणीताः।

'प्रक्रियासर्वस्व' ग्रन्थस्य सम्पादकेन श्रीसाम्बशास्त्रिणा त्रयाणां टीकाकाराणामुल्लेखो विहितः। एका टीका केरल कालिदासेन श्रीकेरलवर्मदेवेन लिखितम्। श्रीकेरलवर्मदेवस्य कालः सं० १९०७-१९७१ वै० स्वीक्रियते।[२] द्वयोरन्ययोष्टीकाकारयोर्नामनी न ज्ञायेते। त्रिवेन्द्रम् नगरात् प्रकाशितस्य प्रक्रियासर्वस्वस्य प्रथमभागे 'प्रकाशिका' व्याख्या मुद्रिताऽस्ति।[३]

॥ इति संस्कृतव्याकरणशास्त्रैतिह्यविमर्शे पाणिनीयव्याकरणस्य प्रक्रियाग्रन्थकारवर्णनं नाम द्वादशोऽध्यायः॥

१. द्र०, तदेव।

२. प्रक्रियासर्वस्व, द्वितीय भागकी भूमिका, पृष्ठ १।

३. तदेव, भूमिका, भाग १, पृष्ठ ४।

## अथ त्रयोदशोऽध्यायः

# शब्दानुशासनखिलपाठवर्णनम्

पञ्चाङ्गव्याकरणम् संस्कृतभाषायां केवलं वेदा एव षडङ्गेषु विभक्ताः, अन्यानि चोपलब्धानि शास्त्राणि प्रायेण पञ्चाङ्गेषु विभक्तानि। वैयाकरणनिकाये व्याकरणशास्त्रस्य कात्स्न्र्यद्योतनार्थं "पञ्चाङ्गव्याकरण" शब्दो व्यवह्रियते। तथा हि—

'हेमचन्द्राचार्यैः[1] श्रीसिद्धहेमाभिधानाभिधं पञ्चाङ्गमपि व्याकरणं सपादलक्षपरिमाणं संवत्सरेण रचयाञ्चक्रे।'

व्याकरणशास्त्रस्याऽधोलिखितानि पञ्चाङ्गानि—

शब्दानुशासन ( सूत्रपाठ ) धातुपाठ–गणपाठोणादिपाठ–लिङ्गानुशासनभेदात्। एतेषु पञ्चस्वङ्गेषु शब्दानुशासनमेव मुख्यम्, अन्यानि चाङ्गानि शब्दानुशासनोपकारकत्वाद् गौणानि। अत एव धातुपाठादीन्यङ्गानि शब्दानुशासनस्य "खिल" संज्ञया व्यवह्रियन्ते।

**खिलशब्दस्याऽर्थाः**—खिलशब्दोऽनेकेष्वर्थेषु प्रयुज्यते। शतपथब्राह्मणे[2], शाङ्खायनब्राह्मणे[3], सायणाचार्यप्रणीतशतपथब्राह्मणव्याख्याने[4] च खिलशब्दो

---

१. प्रबन्धचिन्तामणि, पृष्ठ ४६०।

२. यद्वा उर्वरयोरसंभिन्नं भवति खिल इति वै तदाचक्षते। शतपथब्राह्मणम् ८।३।४।१॥

३. शांखायनब्राह्मणम् ३०।८॥

४. उर्वरयोः सर्वसस्याढ्योः क्षेत्रयोः असम्भिनमसस्पृष्टं भवति स्वयमसस्यं भवति, तत्क्षेत्रं खिल इत्युच्यते इति शतपथव्याख्याने सायणः।

ऽकृष्टक्षेत्र ( ऊषर भूमि ) वाचको दृश्यते। गोपथब्राह्मणे[1] मनुस्मृति[2] प्रभृतिग्रन्थेषु च परिशिष्टभागार्थे खिलशब्दः प्रयुज्यते। वैदिकवाङ्मये खिलशब्दः स्वशाखाऽनधीतस्वशाखीयकर्मोपयोगिपरशाखीयमन्त्रसंग्रहेऽर्थे प्रयुक्तः[3]।

खिलशब्दोऽवयवेऽर्थेऽपि प्रयुज्यते। कार्त्स्न्यार्थवाचिनि नञ्समासघटिते "अखिल" शब्दे खिलशब्दोऽवयववाचक एव। यथा—नास्ति खिलं शून्यं यस्मिस्तत् अखिलम्।

**खिलशब्दप्रयोगः**—धातुपाठादीनामङ्गानां कृते खिलशब्दस्य प्रयोगः काशिकायामुपलभ्यते। पाणिनीयाष्टाध्याय्याः 'उपदेशेऽजनुनासिक इत्" (१।३।२) व्याख्यायां काशिकाकारेणोक्तम्—

'उपदिश्यते ऽनेनेत्युपदेशः शास्त्रवाक्यानि सूत्रपाठः खिलपाठश्च।'

काशिकाव्याख्यायां न्यासकारेण श्रीजिनेन्द्रबुद्धिनोक्तम्

'खिलपाठो धातुपाठः चकारात् प्रातिपदिकपाठश्च[4]।'

काशिकायाः पदमञ्जरीव्याख्यटीकायां हरदत्तेनोक्तम्—

'खिलपाठो धातुपाठः प्रातिपदिकपाठो वाक्यपाठश्च[5]।'

अत्र 'वाक्यपाठ' पदेन वार्तिकपाठनिर्देशः। परन्त्वन्यत्र वार्तिककृते खिल शब्दप्रयोगो नोपलब्धः।

॥ इति संस्कृतव्याकरणशास्त्रैतिह्यविमर्शे शब्दानुशासनखिलपाठवर्णनं नाम त्रयोदशोऽध्यायः ॥

---

१. सामवेदे खिलश्रुतिः। गोपथब्राह्मणम् १।१।२९ ॥

२. स्वाध्यायं श्रावयेत् पित्र्ये धर्मशास्त्राणि चैव हि। आख्यानानीतिहासांश्च पुराणानि खिलानि च ॥ मनुस्मृति, ३।२३२ ॥

३. परशाखीयं स्वशाखायामपेक्षावशात् पठ्यते तत् खिलमुच्यते। महाभारत नीलकण्ठीटीका शान्तिपर्व, ३२३।१० ॥

४. जिनेन्द्रबुद्धि—न्यास १।३।२ ॥

५. हरदत्त—पदमञ्जरी १।३।२ ॥

### अथ चतुर्दशोऽध्यायः

# धातुपाठप्रवक्तृव्याख्यातृवर्णनम्

## १. धातुस्वरूपम्

वैयाकरणानां मतानुसारेण शब्दास्त्रिविधाः—धातुजाऽधातुजनामजभेदात्। धातुजशब्दा अपि द्विविधाः—पचति-पठतिप्रभृतयः क्रियाशब्दाः, पाचक-पाठकप्रभृतयो नाम शब्दाश्च। वृक्षादिनामोपसर्गनिपाता व्ययशब्दाः अधातुजाः अर्थात् रूढाः मन्यन्ते। तद्धितप्रत्ययान्ताः शब्दाः नामजाः भवन्ति। समासयुक्ताः शब्दा उक्तानां त्रिविधशब्दानां समुदायरूपा एव भवन्ति, अतस्तेषां पृथक् गणना न विधीयते।

वैयाकरणनिकाये धातुशब्दस्य लक्षणमेव विधियते—

'दधाति विविधं शब्दरूपं यः स धातुः।'

अर्थात् यः शब्दानां विविधानि रूपाणि धारयति निष्पादयति वा स एव "धातु" शब्देनाऽभिधीयते।

अत्रेदं तत्त्वम्—नानाविधशब्दरूपाणां धारणकर्ता यो मूलशब्दः स एव धातुरिति कथ्यते। यः शब्दः आवश्यकतानुसारं नामविभक्तियुक्तोभूत्वा नाम सम्पद्येत, आख्यातविभक्तियुक्तो भूत्वा क्रियां द्योतयेत्, उभयविधविभक्तिविर्जितः सन् स्वार्थमात्रं द्योतयेत् सः त्रिषु रूपेषु परिवर्तनशीलो मूलशब्द एव 'धातु' पदवाच्यो भवति। एतादृशा आवश्यकतानुसारं विविधरूपेषु परिणमनशीलाः शब्दा एव आदिभाषायाः संस्कृतभाषायाः मूलशब्दा आसन्। यतो ह्येते मूलभूतशब्दा एव नामाऽऽख्याताऽव्ययरूपनानाविधशब्दरूपेषु परिणमन्ते, अतः सर्वे शब्दाः धातुजा इति भारतीयप्राचीनविद्वद्वृन्दराद्धान्तः सर्वथा सत्यमेव। अतिप्राचीनकालीना भारतीया भाषाविदो ऽप्येवंविधान् मूलभूतान् शब्दानेव "धातु" नाम्ना व्यवहरन्ति स्म।

## २. पाणिनिपूर्ववर्तिनो धातुपाठप्रवक्तारः

प्राचीनकाले सम्पूर्णाः शब्दाः धातुजा मन्यन्ते स्मेति पूर्वमेवाऽभिहितम्। यस्मिन् काले शब्दानां भूयानंशः रूढः स्वीकृतः तस्मिन्नपि काले नैरुक्ताः वैयाकरणेषु शाकटायनश्च नामशब्दानाख्यातजानेव स्वीकुर्वन्ति स्म[1]। अत एव तत्कालिकैर्वैयाकरणैः रूढरूपेण स्वीकृतानां वृक्षादिशब्दानां यौगिकं पक्षं प्रदर्शयितुमुणादिपाठस्य खिलरूपेण प्रवचनं विहितम्। समेषां योगिकानां, योगरूढानां, रूढानाञ्च शब्दानां प्रकृत्यंशकल्पनार्थं धातूनामस्ति महानुपयोगः। अत एव वैयाकरणैः स्वस्वशब्दानुशासनेभ्यः धातूनां खिलपाठे संग्रहो विहितः। अयमेव संग्रहो वैयाकरणनिकाये 'धातुपाठ' नाम्ना व्यवह्रियते।

पाणिनेः पूर्ववर्तिवैयाकरणेषु शब्देषु प्रकृतिप्रत्ययरूपविभागप्रकल्पनमिन्द्र एव चकार। अतः इन्द्रेण तदुत्तरवर्तिवैयाकरणैश्च धातुपाठस्याऽपि प्रवचनं विहितमिति सामान्यतया वक्तुं शक्यते। अत्र संक्षेपेण तेषां धातुपाठप्रवक्तॄणां वर्णनं विधीयते, येषां धातुपाठप्रवक्तृत्वं सर्वथा स्पष्टरूपेण विज्ञातम्।

**(क) इन्द्रः** शब्देषु प्रकृतिप्रत्ययांशस्य प्रथमः प्रकल्पकः इन्द्रः प्रकृतिभूतं धात्वंशं कल्पयामास। श्रीउपमन्युप्रणीततत्त्वविमर्शिनीत्याख्यटीकायामुक्तम्—

'तथा चोक्तमिन्द्रेण—

'अन्त्यवर्णसमुद्भूता धातवः परिकीर्तिताः।'

श्लोकेऽस्मिन् इन्द्रप्रकल्पितधातूनां स्पष्टनिर्देशात् इन्द्रः धातुपाठप्रथमवक्तृत्वेन स्वीकर्तुं शक्यते। इन्द्रप्रकल्पितधातूनां किं स्वरूपमासीदिति न सम्प्रति ज्ञायते।

**(ख) वायुः** तैत्तिरीयसंहितायाम् ( ६।४।७ ) लिखितम् यद् वाचो व्याकृतिकरणे शब्दशास्त्रविशारदो वायुरिन्द्रस्य साहाय्यमकरोत्। इन्द्रस्य धातुपाठप्रवक्तृत्वन्तु साधितमेव, अत एव तत्सहयोगित्वाद् वायोरपि धातुपाठप्रवक्तृत्वं स्पष्टमेव।

अस्य परिचयः पूर्वमेव प्रदत्तः।

**(ग) भागुरिः** आचार्यो भागुरिः श्लोकबद्धं व्याकरणशास्त्रं प्रणिनाय तत्र—

---

१. तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च। निरुक्तम् १।१२॥

'गुपूधूपविच्छिपणिपनेरायः कमेस्तु णिङ्।
ऋतेरियङ् चतुर्लेषु नित्यं स्वार्थे परत्र वा॥
(इति भागुरिस्मृतेः[1])

'गुपो वधेश्च निन्दायां क्षमायां तथा तिजः।
प्रतीकाराद्यर्थकाच्च कितः स्वार्थे सनो विधिः॥

(इति भागुरिस्मृतेः[2])

इत्युभयोः सूत्रयोरनेकेषां धातूनामुल्लेख उपलभ्यते। 'गुपू' इत्यत्र दीर्घस्य ऊकारस्याऽनुबन्धरूपेण निर्देशोऽपि दृश्यते। अतः आचार्येण भागुरिणाऽपि स्वीयधातुपाठस्य प्रवचनं विहितमित्यत्र नास्ति संशयावसरः।

**(घ) काशकृत्स्नः** आचार्यंकाशकृत्स्नेन व्याकरणशास्त्रस्य प्रवचनं विहितमिति पूर्वमेव साधितम्। तत्र काशकृत्स्नप्रोक्तशब्दानुशासनस्य प्रथमं सूत्रमासीत्—

'धातुः साधने दिशि पुरुषे चिति तदाख्यातम्।'

अनेन प्रतीयते यत् काशकृत्स्नेन धातुपाठस्य प्रवचनं विहितमासीदिति। सौभाग्यात् काशकृत्स्नस्य सम्पूर्णोऽपि धातुपाठः समुपलब्धः। पूनास्थदक्खनकालेज सत्प्रयासेन धातुपाठोऽयं चन्नवीरकृतकन्नडटीकया सह कन्नडलिप्यां पुनश्च रोमनलिप्यां प्रकाशितः। तत्र १३७ मितानि सूत्राण्युपलब्धानि।

काशकृत्स्नधातुपाठस्य प्रथमपृष्ठे 'काशकृत्स्नशब्दकलाप धातुपाठ' इति नाम निर्दिष्टमस्ति। अनेन प्रतीयते यत् 'शब्दकलाप' इति काशकृत्स्नधातुपाठस्य नामान्तरमस्ति।

**(ङ) शाकटायनः** वैदिकवाङ्मये वैयाकरणनिकाये चेदं सुप्रसिद्धम् यद् आचार्यः शाकटायनः सम्पूर्णानपि नामशब्दान् धातुजान् स्वीकरोति स्म। तथा चोक्तं यास्काचार्येण निरुक्ते—

---

१. जगदीश तर्कालङ्कार—शब्दशक्तिप्रकाशिका, पृ० ४४७, चौखम्बा संस्करणम्।
२. तदेव, पृ० ४४७।

'तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च ।'[1]

उक्तञ्च भगवता पतञ्जलिना महाभाष्ये—[2]

'व्याकरणे शकटस्य च तोकम् । वैयाकरणानां च शाकटायन आह—धातुजं नामेति ।'

यद्यपि शाकटायनप्रोक्तधातुपाठस्योद्धरणानि साक्षाद्रूपेण प्राचीनग्रन्थेषु नोपलब्धानि, तथापि यास्काचार्यस्य पतञ्जलेराचार्यस्य चोपर्युक्तोल्लेखात् स्पष्टम् यत् शाकटायनाचार्येण । धातुपाठस्याऽपि प्रवचनं विहितमासीत् ।

**(च) आपिशलि :** यद्यप्यापिशलेराचार्यस्य धातुपाठः सम्प्रति नोपलभ्यते, तथापि तत्प्रोक्तधातुपाठस्योद्धरणानि महाभाष्य-काशिका-न्यास-पदमञ्जरीप्रभृतिषु ग्रन्थेषु बाहुल्येनोपलभ्यन्ते । अतो ज्ञायते यदापिशलिनाऽऽचार्येण धातुपाठस्य प्रवचनमवश्यं विहितमासीत्, यत्राऽनेकेषां धातूनां स्वरूपं पाणिनीयपाठापेक्षया भिन्नमासीत्, धातुस्वरूपवैभिन्नत्वादापिशलव्याकरणप्रक्रियायामपि कश्चन भेद आसीत्, आपिशलधातुपाठे छान्दसधातूनामपि समावेश आसीत्, तथा चाऽऽपिशलधातुपाठे अनेके धातवः पाणिनीयधातुपाठादधिका आसन् ।

## . आचार्यः पाणिनिस्तत्प्रोक्तो धातुपाठश्च

सकलेऽपि संस्कृतवाङ्मये पाणिनेराचार्यस्य शब्दानुशासनमेवैकमात्रमेतादृशमार्षतन्त्रमस्ति, यत् पञ्चाङ्गपूर्णं सुसमृद्धञ्चोपलभ्यते । यस्य प्रशंसां देशिकाः वैदिशिकाश्च विद्वांसः सोल्लासं कुर्वन्तो नात्मनि सन्तोषपोषं भजन्ते । अत एव पाणिनीयशब्दानुशासनस्य महत्त्वं सर्वातिशायि वर्तते ।

महर्षिणाऽनेन स्वकीयशब्दानुशासनपूर्णतायै लोकोत्तरेण कौशलेन सूत्रपाठेन सह येषामङ्गानाम्प्रवचनं विहितम्, तत्र धातुपाठो मुख्यः । पाणिनीयवैयाकरणेषु यः धातुपाठेऽध्ययनाध्यापनपरम्परायां दृश्यते, सः पाणिनिप्रोक्त एवेत्यत्र नास्त्यैकमत्यम् सर्वेषाम् ।

पाणिनीयवैयाकरणेषु न्यासकारो जिनेन्द्रबुद्धिर्विवदन्नाह—

---

१. यास्क—निरुक्तम् १।१२ ॥

२. पतञ्जलि—व्याकरणमहाभाष्यम्, ३।३।१॥

'प्रतिपादितं[1] हि पूर्वं गणकारः पाणिनिर्न भवतीति। तथा चाऽन्यो गणकारोऽन्यश्च सूत्रकारः।'

अपरत्र तेनैव पाणिनेर्गणकारत्वम् (धातुपाठप्रवक्तृत्वं) स्वीकृतम्।

'न तस्य[2] पाणिनेरिव 'अस भुवि' इति गणपाठः'

न्यासकारस्य वचसामेवं परस्परविरोधप्रदर्शनात्तस्यवचनं प्रमाणरूपेण न स्वीकर्तुं शक्यते।

भगवता पाणिनिना शब्दानुशासनप्रवचनकाले 'भूवादयो धातवः' (१।३।१) सूत्रविज्ञापितस्य खिलरूपधातुपाठस्याऽपि प्रवचनं विहितम्। तत्राऽनेकानि प्रमाणानि सन्ति। तथा हि—

१—पाणिनिना 'पुषादिद्युताद्यलृदितः परस्मैपदेषु' (३।१।५५), 'किरश्च पञ्चभ्यः' (७।२।७५), 'शमामष्टानां दीर्घः श्यनि' (७।३।७४) इत्यादिष्वनेकेषु सूत्रेषु धातुपाठन्तर्गतधातुविषयककार्याणां विधानं विहितम्। एवमेव पाणिनिना धातुपाठस्थधात्वनुबन्धैः स्वशब्दानुशासनेऽनेकानि कार्याणि प्रदर्शितानि। तथाहि—

अनुदात्तङित आत्मनेपदम् (१।३।१२), स्वरितञितः कर्त्रभिप्राये क्रियाफले (१।३।७२), ड्वितः क्त्रिः (३।३।८८), ट्वितोऽथुच् (३।३।८९)

इत्यादिसूत्रपाठे स्मृतैर्धात्वनुपूर्विभिः, धातुपाठस्थानुबन्धैश्च तत्तत्कार्यविधानेन स्पष्टम् यत् यथा पाणिनिना सूत्रपाठात् पूर्वं सर्वादिप्रातिपदिकगणस्य प्रवचनं विहितम्, तथैव धातुपाठस्याऽपि प्रवचनं सूत्र पाठात् पूर्वं प्रवचनं कृतम्।

तथा च महाभाष्यकारस्य पतञ्जलेराचार्यस्य—

'एवं तर्हि[3] सिद्धे सति यदादिग्रहणं करोति तज्ज्ञापयत्याचार्यः अस्ति च पाठो बाह्यश्च सूत्रात्'

इति वचनेन स्पष्टम् यद् भगवान् पतञ्जलिरपि सूत्रपाठवद् धातुपाठमपि

---

१. जिनेन्द्रबुद्धि—न्यास ७।४।३, भाग २, पृ० ८४०॥

२. जिनेन्द्रबुद्धि—न्यास १।३।२२, भाग २, पृष्ठ २२६।

३. पतञ्जलि—व्याकरणमहाभाष्यम्, १।३।१॥

पाणिनीयं स्वीकरोति। एवमेव छायाव्याख्याकारो वैद्यनाथपायगुण्डे महोदयः, पदमञ्जरीकारो हरदत्तः, क्षीरस्वामी, वामनश्चैते धातुपाठं सूत्रपाठवत् पाणिनीयं स्वीकुर्वन्ति।

धातुपाठस्य द्विविधं प्रवचनं विहितम्पाणिनिना।—लघुपाठवृद्धपाठभेदात्। अर्थनिर्देशमन्तरेण धातूनां पाठो लघुपाठः अर्थनिर्देशयुक्तश्च पाठो वृद्धपाठः। कात्यायनीयवार्तिकपाठस्याऽऽश्रयभूतो लघुपाठः, पाणिनीयाष्टाध्यायी सूत्रपाठस्याऽऽश्रयभूतो धातुपाठस्य वृद्धपाठ आसीत्।

पाणिनीयधातुपाठस्य वृद्धपाठो देशभेदेन त्रिधा विभज्यते—प्राच्यऔदीच्यदाक्षिणात्यभेदात्।

प्राच्यपाठः—धातुपाठस्य प्राग्देशीयाः मैत्रेयप्रभृतयो व्याख्यातारः यं पाठं समाश्रयन्ति स प्राच्यपाठः। न्यासकारोऽपि प्राच्यपाठमेव समुद्धरति।

औदीच्यपाठः—औदीच्याः क्षीरस्वामिप्रभृतयो यं पाठमाश्रित्य स्व-स्व वृत्तीन् प्रणीतवन्तः, स औदीच्यपाठः।

दाक्षिणात्यपाठः—धातुपाठस्य दाक्षिणात्यपाठऽसाक्षान्नोपलब्धः, परन्तु दाक्षिणात्येन पाल्यकीर्तिनाऽऽचार्येण पाणिनेरचार्यस्य यो धातुपाठः समाश्रितः, सः सम्भवतः दाक्षिणात्यपाठ आसीत्।

सम्प्रति पाणिनीयैर्वैयाकरणैरध्ययनाध्यापनपरम्परायां धातुपाठस्य यः पाठो व्यवह्रियते स पूर्वनिर्दिष्टपाठापेक्षया विलक्षणः। पाठोऽयं सायणाचार्येण परिष्कृतोऽस्ति।

## ४. धातुपाठस्य व्याख्यातारः

अतः परं येषां वृत्तिग्रन्थाः ज्ञातास्तेषां धातुपाठव्याख्यातॄणां वर्णनं विधीयते।

**(क) पाणिनिः**—शब्दानुशासनस्य प्रवचनं कुर्वता भगवता पाणिनिना अष्टाध्याय्याः सूत्राणां वृत्तिरवश्यं निर्मिता, तथैव तेन धातुपाठप्रवचनकाले तस्याऽपि काचिद् वृत्तिरुपदिष्टा शिष्येभ्य इत्यनुमानं स्वत एवोत्पद्यते।

आचार्येण पाणिनिना अष्टाध्याय्याः प्रवचनकाले यथा शिष्येभ्यः केभ्यश्चित्

अन्यः सूत्रपाठ उपदिष्टः, अन्यस्मिन् कालेऽन्येभ्यः शिष्येभ्य अन्यद्विधः सूत्रपाठ उपदिष्टः; तथैव तेन केभ्यश्चिद् शिष्येभ्यः कस्यचित् सूत्रस्य कचिद् वृत्तिरुपदिष्टा, अन्येभ्यश्च शिष्येभ्यस्तस्यैव सूत्रस्याऽन्या वृत्तिरुपदिष्टा। एवमेव धातुपाठ-प्रवचनकाले पाणिनिना केभ्यश्चित् शिष्येभ्यः तप ऐश्वर्ये वावृत्तु वर्णने इति सूत्रविच्छेद उपदिष्टः, अन्येभ्यश्च तप ऐश्वर्ये, वावृतुवर्णने इत्येवं प्रकारेणो-पदिष्टम्। परम्परामिमामेवाश्रित्य सायणाचार्येण लिखितम्—

'अस्माकं[१] तूभयमपि प्रमाणम् उभयथा शिष्याणां प्रतिपादनात्।'

**(ख) सुनागः**—व्याकरणमहाभाष्ये सौनागानि वार्तिकानि बहुत्रोपलभ्यन्ते।[२] श्रीहरदत्तवचनानुसारमेतेषां वार्तिकानां प्रवक्ता सुनागनामा आचार्योऽस्ति[३]। अयं वार्तिककारात् कात्यायनादर्वाचीन इति कैयटलेखाज्ज्ञायते।[४]

वार्तिकानां प्रवचनकर्त्रा सुनागाचार्येण पाणिनीयधातुपाठस्याऽपि काचिद् वृत्तिः प्रणीतेति काशिका[५]-माधवीयाधातुवृत्ति[६]-क्षीरतरङ्गिणी[७] ग्रन्थेषूपलब्धैः, प्रमाणैरवगम्यते।

---

१. सायण–माधवीया धातुवृत्ति, पृष्ठ २९२ ॥

२. पतञ्जलि-महाभाष्य, २।२।१८, ३।२।५६: ४।१।७८,८७, ४।३।१५६; ६।१।९५ ॥

३. सुनागस्याचार्यस्य शिष्याः सौनागाः (हरदत्त-पदमञ्जरी भाग २, पृ० ७६१)

४. कात्यायनाभिप्रायमेव प्रदर्शयितुं सौनागैर्विस्तरेण पठितमित्यर्थः। (कैयट-भाष्यप्रदीप, २।२।१८॥)

५. सौनागाः कर्मणि निष्ठायां शकेरियमिच्छन्ति विकल्पेन अस्यतेर्भावे।

(काशिका, ७।२।१७)

६. सायण–माधवीया धातुवृत्ति–शकधातु, पृ० ३०१, असधातु पृ० ३०७, शक्लृधातु पृ० ३१९ ॥

७. धातूनामर्थनिर्देशोऽयं निदर्शनार्थ इति सौनागाः'। यदाहुः–

क्रियावाचित्वमाख्यातुमेकोऽत्रार्थः प्रदर्शितः।

प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः॥ (क्षीतरङ्गिणी पृ० ३,३२३)

**(ग) भीमसेनः**—भीमसेननाम्ना वैयाकरणेन पाणिनीयधातुपाठस्य काचिद् वृत्तिः प्रणीतेत्यनेकेषां ग्रन्थकाराणां वचनैः स्पष्टं ज्ञायते।

१—क्रियारत्नसमुच्चयग्रन्थप्रणेत्रा श्रीगणरत्नसूरिणा ( सं० १४६६ वैक्रमाब्दीयेन ) लिखितम्—

'अर्चि-अर्दि-तर्पि-वदि-मृषयः परस्मैपदिन इति भीमसेनीयः।'[1]

२—श्रीसर्वानन्देन ( सं० १२१५ वैक्रमाब्दीयेन) स्वकीये अमरटीकासर्वस्वग्रन्थे लिखितम्—

'अर्ब पर्ब बर्ब कर्ब खर्ब गर्ब मर्ब सर्ब चर्ब गतौ इत्ययमपि भूवादौ भीमसेनेन पवर्गान्तप्रकरणे पठितः।'[2]

**(घ) नन्दिस्वामी**—क्षीरस्वामिना 'क्षीरतरङ्गिणी' इत्यभिधेये ग्रन्थे अनेकत्र स्थलेषु नन्दीति नाम्ना धातुपाठविषयकाः पाठाः समुदधृताः। क्षीरतरङ्गिण्या धातुसूत्रे (१।२२६। पृ० ५६) 'नन्दिस्वामिनौ' इत्यपि पाठ उपलभ्यते। अस्य 'नन्दिस्वामी' त्यपि पाठान्तरमस्ति।

अयं नन्दिस्वामी जैनेन्द्रव्याकरणप्रवक्तुर्देवनन्दीतो भिन्नः स्याच्चेत् निश्चितरूपेणाऽयं पाणिनीयधातुपाठव्याख्याता भवितुमर्हति।

**(ङ) क्षीरस्वामी**—क्षीरस्वामी नाम्ना वैयाकरणेन पाणिनीयधातुपाठस्यौदीच्यपाठमाश्रित्य 'क्षीरतरङ्गिणी' नामा वृत्तिग्रन्थः प्रणीतः। ग्रन्थस्याऽस्य सर्वंप्रथमं प्रकाशनस्य श्रेयांसि जर्मनीदेशीयविदुषां श्रीलिबिशमहोदयानां सन्ति। तेन ग्रन्थोऽयं रोमनलिप्यां प्रकाशितः। ततः श्रीरामलालकपूरट्रस्ट द्वारा ग्रन्थस्याऽस्याऽन्यत् संस्करणं प्रकाशितम्।

क्षीरतरङ्गिण्यां भ्वादिगणस्य, अदादिगणस्य चान्ते—

'भट्टेश्वरस्वामिपुत्रक्षीरस्वाम्युत्प्रेक्षितायां..........।'

इत्युपलब्धपाठेन ज्ञायते यत् श्रीक्षीरस्वामिनः पितुर्नाम 'भट्ट ईश्वरस्वामी' त्यासीत्।

---

१. क्रियारत्नसमुच्चय, पृ० २८४

२. सर्वानन्द-अमरटीकासर्वस्व, १।१।७, भाग १, पृ० ८।

क्षीरस्वामी सम्भवतः यजुर्वेदस्य काठकशाखाध्यायी आसीत्। क्षीरतङ्गिण्या अन्ते समुपलब्धेन श्लोकेन[1] प्रतीयते यत् क्षीरस्वामी सम्भवतः काश्मीरप्रदेश-वास्तव्य आसीत्। क्षीरस्वामिनः कठशाखाध्यायित्वमप्यस्याऽनुमानस्य पोषकम्, यतो हि कठशाखाध्यायिनो ब्राह्मणाः काश्मीरेष्वेव समुपलभ्यन्ते। क्षीरस्वामिनः कालः सं० ११९० वैक्रमाब्दपूर्वमिति श्रीपं० युधिष्ठिरमीमांसक महोदयैः स्वीकृतम् क्षीरस्वामिना अमरकोषोद्‌घाटनम् निपाताव्ययोपसर्गवृत्ति-गणवृत्तिअमृततरङ्गिणी प्रभृतयोऽन्ये ग्रन्था अपि प्रणीताः।

**(च) मैत्रेयरक्षितः**—'मैत्रेयरक्षित' नामाभिधेय बौद्धविदुषा पाणिनीयधातु-पाठस्य 'धातुप्रदीप' नाम्नो लघुवृत्तिः प्रणीता। वृत्तिरियं वंगप्रदेशीय वीरेन्द्र रिसर्चसोसाइटी राजशाही त्याख्यसंस्थातः प्रकाशिता।

**(छ) हरियोगी**–हरियोगी नामाभिधेयविदुषा पाणिनीयधातुपाठस्य 'शाब्दिकाभरण' नाम्नी व्याख्या प्रणीता। अस्या एको हस्तलेखो मद्रासराजकीयहस्तलेख संग्रहे विद्यते।[2] अस्या अपरो हस्तलेखः त्रिवेन्द्रमनगरस्थराजकीयपुस्तकालये वर्तते।[3]

श्रीहरियोगिनो वंशादिवृत्तं न ज्ञायते। मद्रासराजकीयपुस्तकालस्य पूर्वनिर्दिष्ट-हस्तलेखस्यान्ते—

'इति हरियोगिनः प्रोलनाचार्यस्य कृतौ शाब्दिकाभरणे शब्विकरण-भूवादयो धातवः समाप्ताः।'

इत्युपलब्धपाठानुसारं श्रीहरियोगिनः पितुर्नाम श्रीप्रोलनाचार्यं आसीत्। किन्तु मद्रासराजकीयहस्तलेखसंग्रहस्य सूचीपत्रेऽग्यभागे खण्डे १ ए०, संख्या १२८९, पृष्ठे १६१७ अस्याः व्याख्याया एकोऽपरोहस्तलेखो निर्दिष्टः तस्याऽन्ते—

---

१. काश्मीरमण्डलभुवं जयसिंहनाम्नि विश्वम्भरापरिवृढे दृढदीर्घदोष्णि।
शासत्यमात्यवरसूनुरिमां लिलेख भक्त्या स्वयं द्रविणवानपि धातुपाठम्॥

२. मद्रास राजकीय हस्तलेख संग्रह सूचीपत्र, भाग ५, खण्ड १ ए, संख्या ४३१४, पृष्ठ ६३४५।

३. त्रिवेन्द्रम् राजकीय पुस्तकालय सूचीपत्र, भाग १, संख्या ६५, सन् १९१२।

'इति हरियोगिनः शैलवाचार्यस्य कृतौ शाब्दिकाभरणे धातुप्रत्ययपञ्जिकायां सौत्रधातवः समाप्ताः ।'

इति पाठ उपलभ्यते । तत्राऽस्य पितुर्नाम शैलवाचार्य इति लिखितम् । अतो द्विविधपाठस्योपलब्धिकारणेन श्रीहरियोगिनः पितुर्नाम किमासीदिति निश्चितरूपेण न वक्तुं शक्यते ।

श्रीहरियोगी पुरुषकारात् लीलाशुकमुनेः पूर्ववर्ती । लीलाशुकमुनेः कालः प्रायेण सं० १२०० वैक्रमाब्दः स्वीकर्तुं शक्यते ।

**(ज) देव:**--केनचिद् 'दैव' नामाभिधेयवैयाकरणविदुषा पाणिनीयधातुपाठस्य 'दैव' नामा श्लोकात्मको वृत्तिग्रन्थः प्रणीतः । ग्रन्थेऽस्मिन् अनेकेषु गणेषु पठितानां सरूपाणां धातूनां विभिन्नेषु गणेषु पाठप्रयोजनं व्याख्यातम् । ग्रन्थकारेण स्वयमेवोक्तम्

'इत्यनेकविकरणसरूपधातुव्याख्यानं देव नाम्ना विदुषा विरचितं दैवं समाप्तम् ।'

ग्रन्थोऽयं श्लोकात्मकः । अत्र २०० श्लोकास्सन्ति । देवो मैत्रेयरक्षितादुत्तरकालीनोऽस्ति । अत एव देवस्य कालः सामान्यतया सं० ११५०-१२०० वैक्रमाब्दमध्ये स्वीकर्तुं शक्यते ।

**(झ) कृष्णलीलाशुकमुनि:**—श्रीकृष्णलीलाशुकमुनिना देवविरचितस्य पाणिनीयधातुपाठव्याख्यानभूतस्य 'दैव' ग्रन्थस्य 'पुरुषकार' संज्ञको वार्तिकग्रन्थः प्रणीतः । ग्रन्थस्यान्ते लिखितम्—

'कृष्णलीलाशुकेनैव कीर्तितं दैववार्तिकम्'

कृष्णलीलाशुकमुनिना सरस्वतीकण्ठाभरणव्याख्या-सुप्पुरुषकार, केनोपनिषद्व्याख्या-कृष्णलीलामृत-अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवप्रभृतयोऽन्ये ग्रन्था अपि प्रणीताः ।

**(ञ) सायण:**—संस्कृतवाङ्मये सायणाचार्यस्य नामाऽत्यन्तं प्रसिद्धमस्ति । सायणेन स्वज्येष्ठभ्रातुर्माधवस्य नाम्नि पाणिनीयधातुपाठस्यैका वृत्तिः प्रणीता । सा वैयाकरणनिकाये 'माधवीया धातुवृत्ति' नाम्ना, 'धातुवृत्ति' नाम्ना वा प्रसिद्धा ।

सायणाचार्येण स्वविरचितेषु विविधग्रन्थेषु स्वकीयः परिचयः प्रदत्तः। तदनुसारं सायणस्य पितुर्नाम नायणः, मातुर्नाम श्रीमती, ज्येष्ठस्य भ्रातुर्नाम माधवः कनिष्ठस्य भ्रातृश्च नाम भोगनाथ आसीत्। सायणाचार्यस्य जन्म सं० १३७२ वैक्रमाब्दे जातम्, स्वर्गवासश्च सं० १४४४ वैक्रमाब्दे जातः।

माधवीयधातुवृत्तेरादावन्ते[१] चोपलभ्यमानपाठाभ्यां ज्ञायते यत् सायणाचार्येण संगमनृपतेः राज्यकाले धातुवृत्तिः प्रणीता। धातुवृत्तेर्लेखनकालः सं० १४१५-१४२० वैक्रमाब्दमध्ये आसीत्।

## ५. प्रक्रियाग्रन्थान्तर्गतं धातुव्याख्यानम्

वैक्रमद्वादशशतकात् पाणिनीयव्याकरणस्य पठनपाठने पाणिनीयशब्दानुशासनस्य सूत्रक्रमं परित्यज्य प्रक्रियाक्रमेण व्याकरणशास्त्राध्ययनाध्यापनप्रवृत्तिरारब्धा। प्रक्रियाग्रन्थकारैर्धातुपाठोऽपि तत्रैवाऽन्तःसमावेशितः। अत एव धातुपाठव्याख्यान-सत्त्वेऽपि ते स्वतन्त्ररूपेण धातुव्याख्यानग्रन्थाः भवितुं नार्हन्ति।

प्रक्रियाग्रन्थकारैः स्वप्रक्रियाग्रन्थेषु न केवलं पाणिनीयशब्दानुशासनसूत्रक्रमो भग्नः, अपितु, पारम्परिकी धातुपाठपठनपाठनप्रक्रियाऽप्युच्छिन्ना। प्राचीनपठन-पाठनप्रक्रियानुसारमेकैकस्य धातोर्दशप्रक्रियाणां दशानां लकाराणां सर्वेषां रूपाणां ज्ञानं छात्रेभ्यः कार्यते स्म। परन्तु प्रक्रियाग्रन्थकर्तृभिः केवलं सामान्यतया कर्तृ-प्रक्रियामात्रस्य कतिपयानामेव रूपाणां निदर्शनं धातुव्याख्यानप्रसङ्गे विहितम्, अवशिष्टानां भाव-कर्म-णिजन्त सन्नन्तादीनां सर्वासामपि प्रक्रियाणां निरूपणमन्ते कतिपयैरेव धातुभिर्विहितम्। तेन सर्वेषां धातूनां सर्वासां प्रक्रियाणां रूपाणां सम्यगवबोधः कदापि न भवितुमर्हति। लेट् लकारस्य तु "छन्दोमात्रगोचर"

---

१. आदौ—अस्ति श्रीसंगमक्ष्मापः पृथिवीतलपुरन्दरः।
यत्कीर्तिमौक्तिकमादर्शे त्रिलोक्यां प्रतिबिम्बते॥

अन्ते—इति पूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसंगममहाराजमन्त्रिणा मायणसुतेन माधवसहोदरेण सायणाचार्येण विरचितायां धातुवृत्तौ चुरादयः सम्पूर्णाः॥

इत्यभिधाय निदर्शनमेव न विहितम् तैर्ग्रन्थकारैः। पुनश्च स्वामिदयानन्द सरस्वति महाभागैः सर्वाङ्गपूर्णं धातुप्रक्रिया पठनपाठनपरम्परासंरमाणाय "वेदाङ्गप्रकाश" नाभाभिधग्रन्थरचना द्वारा महीयान् प्रयत्नो विहितः।

येषु प्रक्रियाग्रन्थेषु धातुपाठस्य प्रसङ्गतो व्याख्यानं जातम् तेषां विवरणमत्र प्रस्तूयते—

| क्रमाङ्कः | ग्रन्थाकारनामानि | कालः | ग्रन्थनामानि |
|---|---|---|---|
| १ | धर्मकीर्तिः | सं० ११४० वै० | रूपावतारः |
| २ | अज्ञातः | सं० १३०० वै० तः पूर्वम् | प्रक्रियारत्नम् |
| ३ | विमलसरस्वती | सं० १४०० वै० तः पूर्वम् | रूपमाला |
| ४ | रामचन्द्रः | सं० १४५० वै० | प्रक्रियाकौमुदी |
| ५ | भट्टोजिदीक्षितः | सं० १५७०-१६५० वै० | सिद्धान्तकौमुदी |
| ६ | नारायणभट्टः | सं० १६१७-१७३३ वै० | प्रक्रियासर्वस्वम् |
| ७ | वरदराजः | सं० १६५० वै० | लघुसिद्धान्तकौमुदी |
| ८ | ,, | ,, | मध्यसिद्धान्तकौमुदी |

एतेषु रूपावतार-प्रक्रियारत्न-रूपमाला-प्रक्रियाकौमुदीष्वभिधेषु ग्रन्थेषु पाणिनीयधातुपाठस्य समेषां धातूनां व्याख्यानं नास्ति। यद्यपि सिद्धान्त-कौमुदी-प्रक्रिया-सर्वस्वे व्यभिधयोर्ग्रन्थयोः सर्वेषां धातूनां रूपाणि प्रदर्शितानि, तथापि तत्र केवलं शुद्धकर्तृप्रक्रियारूपाण्ये सन्ति, भावकर्मादिप्रक्रियासु केवलं कतिपयानामेव धातूनां रूपाणि प्रदर्शितानि। अत एव नास्ति किञ्चिद् वैशिष्ट्यमेतेषु ग्रन्थेषु।

## ६. पाणिनेरुत्तरवर्तिनो धातुपाठप्रवक्तारः

**(क) कातन्त्रधातुपाठप्रवक्ता**—कातन्त्रव्याकरणं लोके कलाप-कलापक-कौमारप्रभृतिभिर्नामभिः प्रसिद्धम्। कातन्त्रव्याकरणस्यैकः स्वतन्त्रो धातुपाठोऽस्ति श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयमतानुसारेण कातन्त्रधातुपाठः काशकृत्स्न-धातुपाठस्य संक्षेपोऽस्ति।

**(ख) चन्द्रगोमी**—आचार्यचन्द्रगोमि महोदयेन स्वप्रोक्तशब्दानुशासनस्य

कृतेऽत्युपयोगी धातुपाठोऽपि प्रणीतः धातुपाठोऽयं सम्प्रत्युपलब्धः। श्रीब्रुनोलिबिश-महोदयेन चान्द्रव्याकरणेन सह धातुपाठोऽयंप्रकाशितः।

**(ग) क्षपणकः**—वैक्रमप्रथमशतकीयेत क्षपणकनामाभिधेनाऽऽचार्येण व्याकरण-शास्त्रस्य प्रवचनं विहितम्। अत एवानुमीयते यत् प्राचीनवैयाकरणाननुसृत्य तेन धातुपाठस्याऽपि प्रवचनं विहितम्। क्षपणकेन स्वधातुपाठस्य काचिद्वृत्तिरपि प्रणीतेति, उज्ज्वलदत्तेनोणादिवृत्त्युल्लेखादनुमीयते।

**(घ) देवनन्दी**—सं० ५००-५५० वैक्रमाब्दपूर्वजातेन जैनाचार्येण देवनन्दिना जैनेन्द्रव्याकरणप्रवचनेन सह तदङ्गभूतो धातुपाठोऽपि प्रणीतः। अस्य धातुपाठस्य मूलपाठः सम्प्रति नोपलब्धः। आचार्येण गुणनन्दिना (सं० ९१०-९६० वै०) जैनेन्द्रव्याकरणस्यैकं विशिष्टं प्रवचनं विहितम्। तस्य नाम 'शब्दार्णव' इत्यस्ति। वर्तमाना वैयाकरणास्तददाक्षिणात्यसंस्करणनाम्ना स्मरन्ति काशीतः प्रकाशितस्य 'शब्दार्णव' ग्रन्थस्याऽन्ते यो जैनेन्द्रधातुपाठो मुद्रितः, स आचार्येण गुणनन्दिना परिष्कृतः।

**(ङ) वामनः**—सं० ४०० वैक्रमाब्दपूर्वजातेन वामनाचार्येण विश्रान्तविद्या-धर' इत्यभिधेयं व्याकरणम्प्रणीतम्। तेन स्वव्याकरणसम्बद्धो धातुपाठोऽपि प्रोक्तः, किन्त्वस्य किमपि साक्षादुद्धरणं क्वचिदपि नोपलभ्यते।

**(च) पाल्यकीर्तिः (शाकटायनः)**—आचार्येण पाल्यकीर्तिना (सं० ८७१-९२४ वै०) स्वीयशाकटायनव्याकरणसम्बद्धस्य धातुपाठस्याऽपि प्रवचनं विहितम्। धातुपाठोऽयं काशीतः प्रकाशितायाः लघुवृत्तेरन्ते मुद्रितः।

**(छ) शिवस्वामी**—आचार्येण शिवस्वामिना (सं० ९१४-९४० वै०) स्वव्याकरणशास्त्रसम्बद्धः स्वतन्त्रधातुपाठः प्रोक्तः, तस्य वृत्तिश्च प्रणीतेति क्षीरतरङ्गिण्यां माधवीयधातुवृत्तौ च शिवस्वामिनो धातुपाठविषयकमतावलोकनेन ज्ञायते।

**(ज) भोजदेवः**—महाराजेन भोजदेवेन स्वतन्त्ररूपेण धातुपाठस्य प्रवचनं विहितम्। भोजदेवीय धातुपाठस्योद्धरणानि क्षीरतरङ्गिणी-माधवीयधातुवृत्ति-प्रभृतिषु ग्रन्थेषूपलभ्यन्ते।

**(झ) बुद्धिसागरसूरिः**—आचार्येण बुद्धिसागरेण ७, ८ सहस्रश्लोकपरिमाणं पञ्चग्रन्थिव्याकरणं प्रणीतम् । तेन धातुपाठस्य तद्वृत्तिग्रन्थस्य च प्रवचनं विहितम्, किन्त्वस्य साक्षादुल्लेखः क्वचिदपि नोपलब्धः ।

**(ञ) भद्रेश्वरसूरिः**—आचार्येण भद्रेश्वरसूरिणा दीपकव्याकरणम्, प्रोक्तम् ततश्च धातुपाठस्य प्रवचनं विहितम् । धातुवृत्तौ श्रीसायणेन श्रीभद्रनाम्ना कानिचिदुद्धरणानि प्रदर्शितानि, येभ्यो भद्रेश्वरसूरिमहोदयस्य धातुपाठप्रवक्तृत्वं, धातुवृत्तिकर्तृत्वञ्च स्पष्टं परिज्ञायते—

१—'एवं च 'लक्षन्' इति पठित्वा 'ञित्करणादन्येभ्यश्चुरादिभ्यो णिचश्च इति तङ् न भवति' इति च श्रीभद्रवचनमपि प्रत्युक्तम् ।'

२—'अत्र श्रीभद्रादयो दीर्घोच्चारणसामर्थ्यात् पक्षे णिङ् न' इति ।'

**(ट) हेमचन्द्रसूरिः**—आचार्येण हेमचन्द्रसूरिणा स्वव्याकरणसम्बद्धानां सर्वेषामङ्गानां प्रवचनं विहितम्, तत्र धातुपाठप्रवचनमपि वर्तते । हैमधातुपाठे काशकृत्स्नवद् जुहोत्यादिगणस्याऽदादिगणेऽन्तर्भावात् नवगणाः सन्ति । तथा च परस्मैपदाऽऽत्मनेपदोभयपदविभागा अपि प्रतिगणं काशकृत्स्नवत् संगृहीताः । हैमधातुपाठः प्रतिगणमन्त्यस्वरवर्णानुक्रममुक्तोऽस्ति ।

एतदतिरिक्तम्, मलयगिरि-क्रमदीश्वर-सारस्वतकार-वोपदेवपद्मनाभदत्तप्रभृतिभिर्वैयाकरणैः स्वप्रक्रियाग्रन्थान्तर्गताः धातुपाठाः प्रोक्ताः । तत्र सारस्वतधातुपाठस्य हर्षकीर्तिनामाभिधेयविदुषा व्याख्या प्रणीता । तस्या हस्तलेखो होशियारपुरस्थविश्वेश्वरानन्दशोधसंस्थानसंग्रहे उपलभ्यते । तत्र गोपदेवेन 'कविकल्पद्रुम' नामा' श्लोकबद्धो धातुपाठः प्रणीतः ।

## ७. पाणिनेरुत्तरवर्तिनो धातुपाठव्याख्यातारः

कातन्त्रधातुपाठस्योपरि शर्ववर्मणा[1], दुर्गसिंहेन, आत्रेयेण[2] रमानाथेन[3]

---

१, विशेषः पाणिनेरिष्टः सामान्य शर्ववर्मणाः । (दुर्गादास—कविकल्पद्रुमस्य धातुदीपिका नाम्नी व्याख्या, पृ० ८)

२. आत्रेयस्तु कातन्त्रे मूर्धन्यान्तोऽयम् (मुष) । तथा च 'राघवस्यामुषः कान्तम्' इति भट्टिकाव्ये प्रयोगश्चेति पाठान्तरमप्याह । (सायण-माधवीयधातुवृत्तिः, पृ० ३०८)

३. भरणं पोषणं पूरणं वा इति कातन्त्रधातुवृत्तौ रमानाथः ।
(दुर्गादास-धातुदीपिका, पृ० ४८)

च वृत्तयः प्रणीताः।

चान्द्रधातुपाठस्योपरि स्वयमाचार्येण चन्द्रगोमिना स्वोपज्ञवृत्तिः प्रणीता।[१] एतदतिरिक्तं पूर्णचन्द्राचार्येण 'धातुपारायण' नाम्नी धातुवृत्तिः,[२] कश्चपभिक्षुणा च चान्द्रधातुपाठे काचिद्वृत्तिः प्रणीता।

जैनेन्द्रधातुपाठस्योपरि आचार्येण देवनन्दिना 'धातुपारायण' नाम्नी स्वोपज्ञवृत्तिः प्रणीता,[३] तथा च श्रुतपाल-श्रुतकीर्ति-वंशीधर-नामभिर्विद्वद्भिः स्वस्वधातुवृत्तयः प्रोक्ताः।

पाल्यकीर्ति (शाकटायन) प्रोक्तधातुपाठस्योपरि स्वयं पाल्यकीर्तिना स्वोपज्ञा अमोघावृत्तिः[४] प्रणीता, तस्या नाम 'धातुविवरण' मित्यासीत्। तथा च धनपालेन शाकटायनधातुपाठस्य वृत्तिः प्रणीता। अभयचन्द्राचार्येण प्रक्रियासंग्रहे, भावसेनत्रैविद्यदेवेन शाकटायनटीकायाँ, दयापालमुनिना च रूपसिद्धि इत्यभिधेय-प्रक्रियाग्रन्थे शाकटायनधातुपाठोऽपि व्याख्यातः।

हेमचन्द्रप्रोक्तधातुपाठस्योपरि स्वयं हेमचन्द्रसूरिणा ५६०० मितश्लोक-

---

१. चन्द्रस्तु गुणाभावं न सहते। यदाह-अर्णोतीत्युसहृत्य क्षिणेर्धातोर्लघोरुपान्त्यस्ये गुणो नेष्यत इति। (सायण-माधवीया धातुवृत्ति, पृ० ३५७)

चन्द्रस्त्वत्राप्युभयपदित्वमाम्नासीत् णिज्विकल्पं च। (क्षीरस्वामी-क्षीरतरङ्गिणी १०।१॥)

२. ऋभुक्षो वज्र इति धातुपारायणे पूर्णचन्द्रः। (सर्वानन्द-अमरटीकासर्वस्व, १।१४४ भाग १, पृ० ३४॥)

३. वावदूकः—यदेयंङन्ताद् यजजपदशां यङः इति बहुवचननिर्देशादन्यतोऽपि ऊक इति धातुपारायणम्॥ (सर्वानन्द-अमरटीकासर्वस्व, भाग ४, पृ० १८)

४. शाकटायनक्षीर स्वामिभ्यःमयं धातुर्न पठ्यते।……शाकटायनः पुनस्तत्र (स्वादौ) छान्दसमेवाह। (सायण-माधवीय धातुवृत्तौ, तनदिगणे क्षिणुधातौ, पृ० ३५६)

तवेतदमोघायां शाकटायनधातुवृत्तौ अर्थनिर्देशरहितेऽपि गणपाठे ………।
(सायण-माधवीयधातुवृत्तौ, पृ० ४०४)

प्रमाणा स्वोपज्ञा 'धातुपारायण' नाम्नी विस्तृता व्याख्या प्रणीता । मुद्रिताऽपिसतो सा सम्प्रति न प्राप्यते । तेन धातुपारायणस्य संक्षेपोऽपि प्रणीतः । अयं 'लघुपारायण' नाम्नाऽपि वक्तुं शक्यते । श्रीगुणरत्नसूरिणा 'क्रियारत्नसमुच्चय' नाम्नी श्रीजयवीरगणिना 'अवचूरी' नाम्नी व्याख्या, श्रीहर्षकुलगणिना च ( षोडशावैक्रमशतकीयेन) कविकल्पद्रुम' नाम्नी व्याख्या च प्रणीता । श्रीहर्षकुलगणिना स्वकीयकविकल्पद्रुमस्योपरि 'धातुचिन्तामणि' नाम्नी टीकाऽपि प्रणीता ।

बोपदेवप्रोक्तस्य कविकल्पद्रुमाख्यधातुपाठस्योपरि स्वयं बोपदेवेन 'कविकामधेनु' नाम्नी व्याख्या प्रणीता । श्रीरामनाथेन बोपदेवीयधातुपाठस्योपरि टीका प्रणीता । तस्याः हस्तलेखः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयसरस्वती भवनसंग्रहालये उपलभ्यते । हस्तलेखस्याऽस्यान्ते लेखनकालः १७८३ शकाब्द अङ्कितः श्रीवासुदेवसार्वभौमभट्टाचार्यात्मजदुर्गादासविद्यावागीशेन बोपदेवीयधातुपाठस्य 'धातुदीपिका' नाम्नी टीका प्रणीता । श्रीदुर्गादासस्य कालः सप्तदशेशवीयशतकं स्वीक्रियते ॥

॥ इति संस्कृतव्याकरणशास्त्रेतिह्यविमर्शे धातुपाठप्रवक्तृव्याख्यातृवर्णनं नाम चतुर्दशोऽध्यायः ॥

## अथ पञ्चदशोऽध्याय:

# गणपाठप्रवक्तृव्याख्यातृवर्णनम्

### १. गणपाठस्वरूपम्

पञ्चाङ्गव्याकरणे सूत्रपाठधातुपाठाभ्यामनन्तरं गणपाठस्य तृतीयं स्थानं वर्तते। किन्तु सूत्रपाठप्रधाने व्याकरणे अवशिष्टाश्चत्वारो ग्रन्थाः खिलपदवाच्याः पृथक् पृथक् ते महत्वपूर्णाः। एवंरीत्या खिलपाठेषु गणपाठस्य द्वितीयं स्थानमस्ति।

गणयतीति गणः इति व्युत्पत्त्या गण संख्याने इत्यस्माच्चौरादिकाद्धातोः नन्दिग्रहिपचादिभ्यो[1] ल्युणिन्यचः' इति सूत्रेण अच्प्रत्ययान्तः गणनार्थको निष्पद्यतेऽयं 'गण' शब्दः। पठ्यतेऽनेनेति पाठः, गणानां पाठो गणपाठ इयि व्युत्पत्त्या 'गणपाठ' शब्दो निष्पन्नः।

गणानाम्—क्रमविशेषेण पठितानां शब्दसमूहानां पाठो यत्र ग्रन्थे विधीयते, स गणपाठ इत्यभिधीयते। इति रीत्या धातुपाठेऽपि गणपाठत्वापत्तिः, किन्तु वैयाकरणनिकाये गणपाठो न यौगिकः, अपितु, तादृशग्रन्थावबोधरूपेऽर्थे योगरूढः यत्र केवलं प्रातिपदिकशब्दसमूहानां सङ्कलनम्भवति।

### २. पाणिनिपूर्ववर्तिनो गणपाठप्रवक्तारः

पाणिनेराचार्यात् पूर्ववर्तिनां वैयाकरणानां शब्दानुशासनानि सम्प्रति नोपलब्धानि, अतः केन केन वैयाकरणेन स्वशब्दानुशासनेन सह गणपाठस्य प्रवचनं विहितमासीदिति न सम्यग् ज्ञायते। अत्रोपलब्धप्रमाणानुसारेण पाणिनेः पूर्ववर्तिनां गणपाठप्रवक्तॄणां परिचयः संक्षेपेण प्रस्तूयते।

**(क) भागुरिः**—वैक्रमाब्दात् चतुःसहस्रमितवर्षपूर्ववर्तिना भागुरिणाऽऽचार्येण

---

१. पाणिनि—अष्टाध्यायी, ३।१।१३४॥

गणपाठस्य पृथक् प्रवचनं विहितमिति श्रीजगदीशतर्कालङ्कारकृतशब्दशक्तिप्रकाशिकाग्रन्थावलोकनेन ज्ञायते । तथा हि—

'मुण्डादेस्तत्करोत्यर्थे[१] गृह्णात्यर्थे कृतादितः ।
वक्तीत्यर्थे च सत्यादेरङ्गादेस्तन्निरस्यति ॥'
'तूस्ताद्विधाते संछादेर्वस्त्रात् पुच्छादितस्तथा ।'
'सेनातश्चाभियाने णिः श्लोकादेरप्युपस्तुतौ ।'

उद्धरणेष्वेतेषु मुण्डादि—कृतादि-गत्यादि-पुच्छादि--श्लोकादिप्रभृतीनां पञ्चगणानां निर्देशोऽस्ति । गणपाठस्य पृथक् प्रवचनमन्तरेणैवं विधाऽऽदिपदघटितनिर्देशानां किञ्चिदौचित्यं न सिध्यति । अतो भागुरेर्गणपाठप्रवक्तृत्वं स्पष्टमेव ।

भाषावृत्तिकारेण श्रीपुरुषोत्तमदेवेन ४।१।१० सूत्रं व्याचक्षाणेनोक्तम्—'नप्तेति भागुरिः ।' अर्थाद् भागुरेर्मते नप्तृशब्दोऽपि स्वस्रादिगणे पठित आसीत् अत एव ततो ङीप् न भवति, किन्तु 'नप्ता' इत्येव प्रयोगो भवति स्म ।

**(ख) शन्तनुः**—शान्तनोराचार्यस्य शब्दानुशासनसम्बद्धेषु फिट्सूत्रेषु केषाञ्चिद् गणानां निर्देश उपलभ्यते, तत्र घृतादि—ग्रामादिप्रभृतयः प्रमुखाः । नैते नियतपठिता गणाः, किन्त्वाकृतिगणा इत्याधुनिकानां व्याख्यातॄणाम्मतमस्ति । मतमिदं स्वीक्रियेत चेद् शन्तनोर्गणपाठप्रवक्तृत्वं तच्छब्दानुशासने गणपरम्परा च स्वीकरणीया भविष्यति ।

**(ग) काशकृत्स्नः**—सं० ३००० वैक्रमाब्दप्राचीनेन श्रीकाशकृत्स्नाचार्येण धातुपाठेन सह गणपाठस्याऽपि प्रवचनं बिहितमासीदित्यनुमीयते । श्रीचन्नवीरकविप्रणीतधातुपाठकन्नडटीकायां काशकृत्स्नव्याकरणस्य १३५ मितानि सूत्राण्युपलब्धानि, तत्रैकं सूत्रम्—

'क्षिप्नादीनां नो णः ।'

अत्र क्षिप्नादिगणस्योल्लेखः । क्षिप्नाप्रभृतिषु शब्देषु नकारस्य णत्वं न

---

१. जगदीश तर्कालङ्कार—शब्दशक्तिप्रकाशिका, काशीसंस्करणम्, पृ० ४४४, ४४५, ४४६ ॥

भवति। यथा—क्षिप्नाति। पाणिनिनाऽपि 'क्षुभ्नादिषु च' इति सूत्रं पठितमष्टाध्याय्याम् (८।४।३९)।

**(घ) आपिशलिः**—सं० २१०० वैक्रमाब्दप्राचीनेन आपिशलिनाऽऽचार्येण स्वशब्दानुशासनसम्बद्धस्य गणपाठस्य पृथक् प्रवचनं विहितमासीत्। भर्तृहरेराचार्यस्येदं वचनमापिशलेः सर्वादिगणं निर्दिशति—

'इह त्यदादीन्यापिशलेः[१] किमादीन्यसमत्पर्यन्तानि, ततः पूर्वापराधरेति ...... ...... ......।'

कैयटोऽपि भर्तृहरेराचार्यस्येदं वचनं पुष्णाति—

'त्यदादीनि पठित्वा[२] गणे कैश्चित् पूर्वादीनि पठितानि।'

एताभ्यामुद्धरणाभ्यामपि शलेर्गणपाठप्रवक्तृत्वं स्पष्टमेव।

## ३. आचार्यः पाणिनिस्तत्प्रोक्तो गणपाठश्च

पाणिनेराचार्यस्य गणपाठः सम्प्रत्युपलब्ध इत्यस्माकं महत्सौभाग्यम्। यद्ययमुपलब्धो नाऽभविष्यत् तर्हि शब्दानुशासनस्य गणविषयकसूत्राणां पूर्णतात्पर्यविबोधः कथमपि नाऽभविष्यत्। पाणिनीया वैयाकरणा पठनपाठनपरम्परायां यं गणपाठं स्वीकुर्वन्ति, तस्य पाणिनीयत्वाऽपाणिनीयत्वविषये प्राचीनेषु ग्रन्थकारेषु मतवैभिन्न्यमुपलभ्यते।

काशिकाव्याख्यात्रा श्रीजिनेन्द्रबुद्धिपादेन स्वन्यासग्रन्थे बहुत्र गणपाठस्य पाणिनीयत्वम्प्रत्याख्यातम्। तथा हि—

'अथ गण[३] एव कौशिकग्रहणं कस्मान्न कृतम्? कः पुनरेवं सति गुणो भवति सूत्रे पुनर्बभ्रुग्रहणं न कर्त्तव्यं भवति। सत्यमेतत्। अपाणिनीयत्वाद् गणस्य नैवं चाकरणे पाणिनिरुपालम्भमर्हति॥'

न्यासकारमतिरिच्य प्रायोऽन्ये समेऽपि पाणिनीया वैयाकरणाः गणपाठस्याऽस्य पाणिनीयत्वं स्वीकुर्वन्ति। अस्मन्मतेऽपि गणपाठः पाणिनिप्रणीत एव स्वीकर्तव्यः। तथा हि—

---

१. भर्तृहरि—महाभाष्यदीपिका।
२. कैयट—महाभाष्य प्रदीप, १।१।३॥
३. जिनेन्द्रबुद्धि—न्यास, ४।१।१०६॥

(क) गणशैलीसमाश्रितः कश्चिदपि वैयाकरणो गणपाठनिर्धारणमन्तरेण स्वशब्दानुशासनस्य प्रवचनं कर्तुं नार्हति। यतो हि पाणिनिः स्वशब्दानुशासने सर्वत्र गणशैलीं समाश्रितवान्, अतः पाणिनेः कृते स्वशब्दानुशासनप्रणयनात् पूर्वं तत्तद्गणविषयकसूत्रोपदेशद्वारेण तत्तद्गणानां निर्धारणमत्यावश्यकमासीत्। अतो गणपाठस्य पाणिनीयत्वं स्वीकर्तव्यम्।

(ख) भगवता पतञ्जलिना महाभाष्ये बहुत्र सूत्रपठितैर्विशिष्टशब्दैर्विविधज्ञापनार्थं, तथैव गणपाठे पठितैरनेकैर्विशिष्टैश्च शब्दैः ज्ञापयति क्रियया सह 'आचार्य' पदनिर्देशो विहितः। तथा हि—

'यदयं युक्तारोह्यादिषु[१] एकशितिपाच्छब्दं पठति तज्ज्ञापयत्याचार्यो निमित्तस्वरान्निमित्तिस्वरो बलीयानिति॥'

'यदयं कस्कादिषु[२] भ्रातुष्पुत्रशब्दं पठति तज्ज्ञापयत्याचार्यो नैकादेशनिमित्तात् षत्वं भवतीति॥'

'एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति[३] नोदात्तनिवृत्तिस्वरः शुन्यवतरति यदयं श्वन्शब्दं गौरादिषु पठति, अन्तोदात्तार्थं यत्नं करोति, सिद्धं हि स्याङ्ङीपैव॥'

एतैरुद्धरणैः स्पष्टम् यन्महाभाष्यकारः पतञ्जलिः सूत्रपाठवत् गणपाठस्याऽपि पाणिनीयत्वं स्वीकरोति।

गणपाठस्य द्विधा पाठ आसीत्-लघुपाठो वृद्धपाठश्च। तत्र लघुपाठः सम्प्रत्यनुपलब्धः, वर्तमानश्च पाठो वृद्धपाठः। गणपाठस्य गणाः द्विधा विभक्तुं युज्यन्ते-नियमित-आकृतिगणभेदात्। तादृशाः गणाः यत्र यावन्तः शब्दा पठिताः, तेभ्य एव शब्देभ्यस्तस्य गणस्य कार्यं सेत्स्यति, ते नियमिता गणाः। यथा-सर्वादिगणः तादृशाः गणाः, यत्र शब्दानां नियता संख्या नाभीष्टा, अन्येभ्यश्च शब्देभ्यस्तद्गणकार्यं सम्पद्यते, ते वैयाकरणदृष्टया आकृतिगणा उच्यन्ते।

---

१. पतञ्जलि—महाभाष्य, २।१।१॥

२. तदेव, ८।३।११॥

३. तदेव, १।४।२७, ६।४।२२॥

येषु गणेषु शब्दानां संकलनं सीमितम्भवति, तस्यान्ते शब्दसङ्कलनपरिसमाप्तिद्योतनाय समाप्त्यर्थको वृत् शब्दः पठ्यते। ये चाऽऽकृतिगणाः तेषामन्ते वृत् शब्दो न पठ्यते। तथाहि--

'अवृत्करणाद्[१] आकृतिगणोऽयम्॥'

क्वचिद् नियतरूपेण पठितो गणोऽपि 'च' शब्दपाठद्वारेणाऽऽकृतिगणो मन्यते। तथा चोक्तम्—

(क) 'आकृतिगणश्च[२] प्रवृद्धादिर्द्रष्टव्य इति। कुत एतत्? आकृतिगणतां तस्य सूचयितुमनुक्तसमुच्चयार्थस्य चकारस्येह करणात्॥'

(ख) 'चकारोऽनुक्तसमुच्चयार्थः।[३] स चाकृतिगणतां सुषामादेर्बोधयतीत्याहअविहितलक्षण इत्यादि॥'

## ४. पाणिन्युत्तरवर्तिगः प्रमुखाः गणपाठप्रवक्तार :

(क) **कातन्त्रकार** :—सं० २००० वैक्रमाब्दप्राचीनः शर्ववर्मा कातन्त्र व्याकरण शास्त्रे निर्ममे। तत्र त्रयो भागाः सन्ति—आख्यातान्तभाग-कृतन्तभाग-छन्दः प्रक्रिया भाग भेदात तत्र कृदन्तभागं श्रीवररुचिकात्यायनः पूरितवान्, परिशिष्टभागः (छन्दः प्रक्रिया) च विजयानन्दः पूरितवान्।

कातन्त्रव्याकरणकारेण गणपाठस्याऽपि प्रवचनं विहितमासीत्। आख्यातान्तभागे—सर्वादि-त्यदादि-मर्गादि-यस्कादि-विदादि-कुञ्जादि-बाह्लादि-गवादि-शरत्प्रभृत्येते गणाः पठिताः। कृदन्तभागे—पचादि-नन्द्यादि-ग्रहादि-भिदादि-भीमादि-न्यङ्क्वादि-गम्यादि प्रभृतयो गणाः पठिताः। छन्दप्रक्रियाभागे—केवसादि-कद्र्वादि-छन्दोगादि-सोमादि प्रभृतयो गणाः पठिताः।

(ख) **चन्द्रगोमी**—सं० १००० वैक्रमाब्दप्राचीनेन श्रीचन्द्रगोमिनाऽऽचार्येण स्वशब्दानुशासनसम्बद्धस्य गणपाठस्याऽपि प्रवचनं विहितमासीत्। चन्द्राचार्यप्रोक्तगणपाठस्तस्य स्वोपज्ञवृत्तौ समुपलभ्यते।

---

१. काशिका २।१।४८॥

२. जिनेन्द्रबुद्धि—न्यास, ६।२।१४७॥

३. तदेव, ८।३।१०॥

चन्द्राचार्येण गणपाठप्रवचने न केवलं पाणिनेरेवाऽनुसरणं विहितम्, अपितु, तेन सर्वेषामाचार्याणां समुपलब्धसामग्रीणामुपयोगो विहितः। चान्द्रगणपाठे-व्यासादिः, कम्बोजादिः, क्षीरपुत्रादिः, देवासुरादिः, स्वर्गादिः, पुण्याहवाचनादिः, ज्योत्स्नादिः, नवयज्ञादिश्चेति गणाश्चर्चिताः।

अनेकेषु स्थलेषु चन्द्रगोमिनाऽऽचार्येण पाणिनीयसूत्राणां वार्तिकानां च सम्मेलनेन नवीनाः गणाः कल्पिताः। तथाहि—उषादिः, कृष्यादिः, केशादिः, ऋत्वादिः, हिमादिः, वेणुकादिः, सिन्ध्वादिः, कथादिश्चेति।

चन्द्राचार्येण लाघवार्थमनेके पाणिनीयगणाः रूपान्तरिताः। तथाहि—

| **पाणिनीयगणाः** | **चान्द्रगणाः** |
|---|---|
| अपूपादिः (५।१४) | यूपादिः (चान्द्र ४।१।३) |
| इन्द्रजननादिः (४।३।८९) | शिशुक्रन्दादिः (चान्द्र ४।१।३) |
| अनुप्रवचनादि (५।१।१११) | उत्थापनादिः (चान्द्र ४।१।१३२) |

एतादृशं लाघवं चान्द्रगणपाठे बहुत्र समुपलभ्यते।

**(ग) देवनन्दी**—सं० ५०० वैक्रमाब्दप्राचीनेन आचार्येण देवनन्दिना स्वशब्दानुशासनसम्बद्धस्य गणपाठस्याऽपि प्रवचनं विहितमासीत्। गणपाठोऽयम् अभयनन्दिप्रणीतायाम्महावृत्तौ सम्प्रविष्ट उपलभ्यते।[1] जैनेन्द्रगणपाठेऽधोलिखितानि वैशिष्ट्यानि सन्ति—

१—अनेकत्र पूर्वाचार्यप्रोक्त गणसूत्राणां स्वतन्त्रसूत्ररूपेण प्रतिष्ठापनम्।

२—अनेकेषां विभिन्नानां गणानामेकीकरणम्। यथा–पिच्छादेः, तुन्दादेश्च।[2]

३—आकृतिगणेषु प्रयोगानुसारं कतिपयशब्दानां वृद्धिः।

४—काशिकायाश्चान्द्रवृत्तेश्चोभयोर्भिन्नाभिन्नपाठानां संग्रहः। यथा कुर्वादि-

---

१. जैनेन्द्र गणपाठ के अनेक पाठ वर्धमान ने अभयनन्दी के नाम से उद्धृत किये हैं।

यथा—'गोभिलचक्रवाकाशोकच्छगलकुशीरकयमलमुखमन्मथशब्दान् अभयनन्दी गणेऽस्मिन् ददर्श।' ( गणरत्नमहोदधि, पृ० १७२ )

२. अभयनन्दी-महावृत्ति ४।१।४३॥

गणे काशिकाया 'अभ्र' इति पाठः, चान्द्रवृत्तेश्च शुभ्र इति पाठः। जैनेन्द्रगणपाठे उभावपि पाठावुपलभ्येते।[1]

५—जैनेन्द्रगणपाठे प्रायः सर्वत्र तालव्यशकारो दन्त्यसकाररूपेण पठितः। यथा 'शंकुलाद' स्थाने 'संकुलादः',[2] 'सर्वकेश' स्थाने 'सर्वकेस' इति पाठः।[3]

**(घ) वामनः**—सं० ३५०-६०० वैक्रमाब्दप्राचीनेन श्रीवामनाचार्येण 'विश्रान्तविद्याधर' इत्यभिधेयव्याकरणसम्बद्धस्य गणपाठस्याऽपि प्रवचनं विहितमासीत्। वामनप्रोक्तगणपाठस्य निर्देशः वर्धमानप्रणीतगणरत्नमहोदधौ बहुत्रोपलभ्यते।

वामनेन स्वगणपाठेऽनेकेषां गणानां संग्रहो विहितः, यथा-केदारादिः। वर्धमानेनोक्तम्—

'केदारादौ राजराजन्यवत्सा[4] उष्ट्रोरभ्रौ वृद्धयुक्तो मनुष्यः।
उक्षा ज्ञेयो राजपुत्रस्तथेह केदारादौ वामनाचार्यदृष्टे॥

पाणिनि प्रोक्तस्य शण्डिकादिगणस्य (४।३।९२) वामनाचार्यमते 'शुण्डिकादि' रिति नाम वर्तते। तथा चोक्तं वर्धमानेन—

'शुण्डिका'[5] ग्रामोऽभिजनोऽस्य शौण्डिक्यः। अयं वामनमताभिप्रायः, पाणिन्यादयस्तु शाण्डिकस्य ग्रामजनपदवाचिनः शाण्डिक्य इत्युदाहरन्ति।[6]

**(ङ) पाल्यकीर्ति**—सं० ८७१-९२४ वैक्रमाब्दप्राचीनेव पाल्यकीर्तिना शाकटायन' इत्यभिधेयस्वप्रोक्तशब्दानुशासनसम्बद्धस्य गणपाठस्याऽपि प्रवचनं विहितम्। शाकटायनगणपाठोऽपि स्वतन्त्ररूपेण लघुवृत्तेरन्ते मुद्रित उपलभ्यते।

---

१. तदेव, ३।१।१३८॥

२. तदेव, ३।२।९३॥

३. तदेव, ३।२।९६॥

४. वर्धमान-गणरत्नमहोदधि, श्लोक २५८॥

५. तदेव, पृ० २०४॥

६. वर्धमान-गणरत्नमहोदधि, पृ० ९८॥

पाल्यकीर्तिना स्वगणपाठेऽनेकेषां गणनाम्नां स्थाने लघूनि नामानि निर्दिष्टानि। यथा—'अहिताग्न्यादि'स्थाने 'भार्योढादिः' 'लोहितादि'स्थाने 'निद्रापिः' 'अश्वपत्यादि'स्थाने 'धनादि'श्चेत्यादयः।

पाल्यकीर्तिनाऽनेकेषां नवीनानां गणानामपि रचना विहिता। यथा—देवादि-श्रितापिगणप्रभृतयः।

पाल्यकीर्तिना पाणिनिप्रोक्ताननेकान् गणान् सम्मेल्य लाघवकरणस्य प्रयत्नो विहितः। यथा—भिक्षादिगणस्य खण्डिकादिगणस्य च सम्मिश्रणेनैकस्य भिक्षादि-गणस्य निर्माणानित्यादयः।

पाल्यकीर्तिना स्वगणपाठेऽनेकेषु चान्द्रगणनामानि परित्यज्य नवीनानि गण-नामानि निर्दिष्टानि। यथा—चान्द्रसूत्रे ( ४।२।१३६ ) हिमादिगणस्य नाम 'गुणादि' इति निर्दिष्टम्।

**(च) भोजदेवः**—पूर्वाकार्यैर्गणपाठस्य शब्दानुशासनात् पृथक् खिलपाठरूपेण पठनादध्ययनाध्यापने व्याप्तामुपेक्षां, तद्दुष्परिणामांश्चावलोक्य महाराजेनभोज-देवेन स्वशब्दानुशासने गणपाठः समाविष्टः।

भोजदेवेन पूर्वाचार्यैराकृतिगणरूपेण निर्दिष्टगणानां तत्तद्गणेषु समाविष्ट-शब्दानां यथासम्भवपाठप्रदर्शनपूर्वकमन्ते आदिपदनिर्देशोविहितः। तेन कात्याय-नीयवार्तिकेषु निर्दिष्टगणानामपि स्वगणपाठे समावेशो विहितः। तेन स्वशब्दा-नुशासनान्तर्गतगणपाठे किंशुकादि-वृन्दारकादि-मतल्लिकादि-खसूच्यादि-जपादि-प्रभृतीनां नवीनानां गणानामपि सन्निवेशो विहितः। भोजदेवेन चन्द्राचार्यमनुसरता अपूपादिगणस्य "यूपादि" रिति, बह्वादिगणस्य च "शोणादि" रिति नामान्तरं विहितम्।

**(छ) भद्रेश्वरसूरिः**—सं० १२०० वैक्रमाब्दात् प्राचीनेन श्री भद्रेश्वर-सूरिणा स्वशब्दानुशासनसम्बद्धस्य कस्यचिद् गणपाठस्य प्रणयनं विहितमिति गण-रत्नमहोदधिग्रन्थावलोकनेन ज्ञायते। तथाहि—

भद्रेश्वराचार्यस्तु—

किं च स्वा दुर्भगा कान्ता रक्षान्ता निचिता समा।
सचिवा चपला भक्तिर्बाल्येति स्वादयो दश॥

**(ज) हेमचन्द्रसूरिः** सं० ११४५-१२२९ वैक्रमाब्दमध्यजातेन श्री हेमचन्द्रसूरिणा प्रणीतो गणपाठस्तस्य स्वोपज्ञवृहद्वृत्तौ समुपलभ्यते पाल्यकीर्तिगणपाठमनुसरताऽपि हेमचन्द्रेण स्वगणपाठेऽनेके स्वोपज्ञा अंशा उद्भाविताः। हेमचन्द्रेण स्वगणपाठे सायाह्नादि-भेषजादि प्रभृतयोऽनेके नवीनाः गणाः कल्पिताः। हेमचन्द्रेणानेकेषु स्थलेषु पूर्वाचर्यैर्निर्धारितानि गणनामान्यपि परिवर्तितानि। उदाहरणार्थम् पाल्यकीर्तिनिर्धारितस्य अर्थादिगणस्य स्थाने हेमचन्द्रेण हितादिगणः कल्पितः। हेमचन्द्रेण एकस्य गणस्य द्विधा विभागकरणस्याऽपि प्रयत्नो विहितः। यथा—तेन पाणिनेः पुष्करादिगणः पुष्करादि-अब्जादिरित्याख्यगणद्वये विभक्तः।

**(झ) वर्धमानः** गणपाठप्रवक्तृषु सं० ११६०-१२१० वैक्रमाब्दमध्ये समुत्पन्नस्य वर्धमानस्य महत्त्वपूर्णं स्थानं वरीवर्ति। सम्पूर्णे गणपाठवाङ्मये वर्धमानप्रणीतगणपाठस्य स्वोपज्ञा गणरत्नमहोदधिर्व्याख्यैवैतादृशोग्रन्थोऽस्ति येन वयं गणपाठविषये किञ्चिज्ज्ञातुं शक्तुमः।

वर्धमनेन स्वीयव्याकरणसम्बद्धस्य गणपाठस्य श्लोकबद्धं संकलनं तस्य विस्तृता व्याख्या च प्रणीता। वर्धमानेन तत्र गणरत्नमहोदवे रचनाकालोऽपि निर्दिष्टः[1]। तदनुसारं ११९७ वैक्रमाब्दानन्तरं गणरत्नमहोदधिग्रन्थः प्रणीतः।

गणरत्नमहोदधिग्रन्थे वर्धमानेन पाणिनीयगणपाठस्य स्वरवैदिकप्रकरणातिरिक्तानां समेषामपि गणानां प्रायेण समावेशो विहितः। तथैव कात्यायनीयवार्तिकगणा अप्यत्र समाविष्टाः। तेन पाणिनेः दीर्घसूत्राणि, एकस्य प्रकरणस्य द्वित्रसहस्रपठितसूत्राणि, कतिपयकात्यायनीयवार्तिकानि चाश्रित्याऽनेके नवीना गणा अपि कल्पिताः।

वर्धमानः चन्द्राचार्य-पाल्यकीर्ति-हेमचद्राचार्यैर्निधारितान् गणान् प्रायस्तद्रूपेणैव स्वीचकार, तथापि तेन केषाञ्चिद् गणानां नामान्यवश्यं परिवर्तितानि।

एतादृशवैशिष्ट्यविशिष्टत्वकारणेन वर्धमानस्य गणरत्नमहोदधिग्रन्थः स्वविषस्याऽत्युत्कृष्टो ग्रन्थः संवृत्तः सम्प्रति गणपाठशब्दानामर्थपाठभेदप्रज्ञानार्थमयमेव ग्रन्थः

---

१. सप्तनवत्यधिकेष्वेकादशसु शतेष्वतीतेषु।
वर्षाणां विक्रमतो गणरत्नमहोदधिर्विहितः॥

साहाय्यग्रन्थः । भट्टयज्ञेश्वरप्रणीताया, गणरत्नावल्या अप्ययमेवाऽऽधारग्रन्थोऽस्ति ।

(ञ) **क्रमदीश्वरः**—क्रमदीश्वरप्रोक्त 'संक्षिप्तसार' ( जौमर व्याकरण ) सम्बद्धस्य गणपाठस्य प्रवचनं क्रमदीश्वरेणैव विहितमथवा, संक्षिप्तसारपरिष्कर्त्रा जूमरनन्दिनेति न सम्यग् ज्ञायते । गणपाठेऽस्मिन्ननेकेषां प्रधानभूतानां गणानामेव संकलनमस्ति ।

(ट) **सारस्वतव्याकरणकारः** सारस्वतव्याकरणस्य प्रणेत्रा श्रीनरेन्द्राचार्येण ( अनुभूतिस्वरूपाचार्येण वा ) स्वसूत्रेष्वनेकेषां गणानां निर्देशो विहितः। अस्मिन् गणपाठे पाणिनीयस्वरादि-चादिगणयोरेकत्र समावेशोऽस्ति । अस्मिन् गणपाठे कात्यायनेनोपसंख्यातयोः श्रत् अन्तर् शब्दयोः प्रादिगणे समावेशः, 'सम्भस्त्राजिन-शणपिण्डेभ्यःफलात्' प्रभृतिवार्तिकोदाहरणानामजादिगणे समावेशश्चाऽस्ति ।

गणपाठेऽस्मिन् क्वचिद्-गौरादेः-नद्यादि, बाह्वादेः- पद्धत्यादि, सपत्न्यादेः-पत्न्यादि, शुभ्रादेः-अग्न्यादिरूपेण पाणिनीयगणनाम्नां परिवर्तनम्, क्वचिच्च इन्द्रापि-जानपदादि-मन्वादि-पितृष्वसादिप्रभृतीनां नवीनानां गणानां विर्धारणमपि दृश्यते ।

(ठ) **बोपदेवः**—सं० १३००-१३५० वैक्रमाब्दमध्यजातेन बोपदेवेन स्वकीय-'मुग्धबोध' व्याकरणसम्बद्धस्य गणपाठस्याऽपि प्रवचनं विहितम् । तत्राऽनेके पाणिनीया अपरिवर्तितरूपेणाऽवलोक्यन्ते । केषाञ्चिद् गणानां नामानि बोपदेवेन परिवर्तितानि । कल्याण्यादि-शरत्प्रभृति-द्वारादिसदृशकतिपयगणस्थशब्दानां सूत्रेष्वेव पाठो विहितः । बोपदेवस्य गणपाठे निर्धारितः तन्वादिगण एव तस्य मौलिकगण-त्वेन स्वीकर्तुं शक्यते ।

एतत्परिक्तमनेकेषां गणपाठप्रवक्तृणां वर्णनं श्रीपं० युधिष्ठिरमीमांसकेन स्वग्रन्थे विहितम् ।

## ५. गणपाठव्याख्यातारः

पाणिनीयगणपाठस्योपरि स्वयं पाणिनिना स्वोपज्ञवृत्तिः प्रणीता । क्षीरस्वामिना निपाताव्ययोपसर्गवृत्तिः गणवृत्तिरिति वृत्तिग्रन्थद्वयम्प्रणीतम् । तथा च पुरुषोत्तमदेवेन ''गणवृत्ति'' नाम्नी, नारायणन्यायपञ्चाननेन 'गणप्रकाश' नाम्नी, यज्ञेश्वरभट्टेन च पाणिनीयगणपाठस्य 'गणरत्नावली' नाम्नी वृत्तिः प्रणीता ।

भोजदेवप्रणीतसरस्वतीकण्ठाभरणस्य व्याख्यात्रा श्रीदण्डनाथेन शब्दानुशासन-व्याख्यानप्रसङ्गे तद्गणसूत्राण्यपि व्याख्यातानि।

वर्धमानप्रणीतगणरत्नमहोदधिग्रन्थस्य गङ्गाधरेण, गोवर्धनेन च टीका प्रणीता। श्रीन्यायपञ्चाननेन जौमरगणपाठस्य 'गणप्रकाश' नाम्नी टीका प्रणीता।

॥ इति संस्कृतव्याकरणशास्त्रैतिह्यविमर्शे गणपाठप्रवक्तृव्याख्यातृवर्णनं नाम पञ्चदशोऽध्यायः ॥

अथ षोडशोऽध्यायः

# उणादिसूत्राणां प्रवक्तृव्याख्यातृवर्णनम्

## १. उणादिपाठस्वरूपम्

किञ्चिदपि शब्दानुशासनं कियदपि विशालं कथं न भवेत्, तदनन्तशब्दराशेः सकलानां शब्दानां संग्राहकं न भवितुमर्हति । अत एव शब्दानुशासनम् विस्तृतमपि सन्निदर्शकमात्रमेव भवति । तथैवोणादिसूत्राणि अतिसूक्ष्मानि, अत एव कारणाद् विशेषतः रूढशब्दानां प्रकृतिप्रत्ययविभागनिदर्शकान्येव सन्ति । तथा चोक्तम् भगवता पतञ्जलिना—

बाहुलकं प्रकृतेस्तनुदृष्टेः[1] प्रायः समुच्चयनादपि तेषाम् ।
कार्यसशेषविधेश्च तदुक्तं नैगमरूढिभवं हि सुसाधु ॥
नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् ।
यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥
कार्याद्विद्यादनूबन्धम्.......... ॥'

प्राचीनैर्ग्रन्थकारैरुणादिपाठस्य कृते उणादिकोश-उणादिगण-उणादिनिघण्टु-उणादिगणसूत्रशब्दानां प्रयोगो विहितः । पञ्चपाद्युणादिपाठव्याख्यात्रा श्रीमहादेववेदान्तिना[2],स्वामींदयानन्दसरस्वतीप्रभृतिभिर्वैयाकरणैः[3], शिवराम-रामशर्मभ्याञ्चोणादिपाठस्य कृते 'उणादिकोश' शब्दो व्यवहृतः । श्रीवेङ्कटेश्वरनामाभिधेयेन वृत्तिकारेणोणादिपाठस्य कृते 'उणादिनिघण्टु' शब्दो व्यवहृतः । श्रीस्वामिदयानन्द

---

१. पतञ्जलि--व्याकरणमहाभाष्यम्, ३।३।१॥

२. 'इत्युणादिकोशे निजविनोदाभिधेये वेदान्तिमहादेवविरचिते पञ्चमः पादः सम्पूर्णः ।'

३. 'इति श्रीमत्स्वामीदयानन्दसरस्वतीकृतोणादिव्याख्यायां वैदिकलौकिककोषे पञ्चमः पादः समाप्तः ।'

सरस्वतीमहाभागेनोणादिसूत्राणां कृते 'उणादिगण' शब्दोऽपि व्यवहृतः ।[1] हैमोणादिवृत्तेः सम्पादकेन श्रीजोहनकिर्स्टेमहोदयेन स्वभूमिकायामेकस्य हस्तलेखस्यान्तिमः पाठ उद्धृतो यत्रोणादिसूत्राणां कृते 'उणादिगणसूत्र' शब्दोव्यवहृतः । तथाहि—

'इत्याचार्यहेमचन्द्रकृतं स्वोपज्ञोणादिगणसूत्रविवरणं समाप्तम् ।'

## २. प्राचीना उणादिसूत्रप्रवक्तारः

अनेकैः प्राचीनैर्वैयाकरणैः खिलपाठत्वेनोणदिसूत्राणामपि प्रवचनं विहितमासीदित्यत्र नास्ति मनागपि सन्देहलेशः । परन्तु सम्प्रति न तु पाणिनेः पूर्ववर्तिवैयाकरणानामुणादिपाठा एवोपलब्धाः, न वा तद्विषये किञ्चिद् विवरणमेवोपलभ्यते । अतः येषाम्प्राचीनवैयाकरणानामुणादि,प्रवक्तृत्वसङ्केताः, तदुणादिपाठा वोपलभ्यन्ते तेषां परिचयोऽत्र समुपस्थाप्यते ।

### (१) काशकृत्स्नः—

सं० ३१०० वैक्रमाब्दप्राचीनेन काशकृत्स्नेनोणादिसूत्रप्रवचनं विहितम् किन्तु सम्प्रति काशकृत्स्नप्रोक्त उणादिपाठो नोपलभ्यते । काशकृत्स्नप्रोक्तधातुपाठस्य या चन्नवीरकविप्रणीता टीका प्रकाशिता, तस्याः सम्पादकेन स्वभूमिकायां लिखितम् यत् श्रीचन्नवीरेण पुरुषसूक्तस्याऽपि प्रणीता । तस्याः कतिपयपाठान् समुद्धरता तेन पुरुषसूक्तव्याख्यायाः १८ पृष्ठे 'ब्राह्मये' पद साधुत्वप्रतिपादनार्थं 'बृहो ममन्मणिश्च' इति सूत्रं समुद्धृतम्, अन्ते च लिखितम् यत् सूत्रमिदं काशकृत्स्नस्य दशपाद्युणदिपाठे पठितमस्ति ।

सम्पादकमहोदयेन काशकृत्स्नस्य यो दशपाद्युणादिपाठ उल्लिखितः, तस्य स्रोतस्तेन न सङ्केतितम् । यदि काशकृत्स्नस्य प्रोक्तोणादिपाठस्य दशपादित्वं स्वीक्रियेत, तथापि स पाठः सम्प्रति दशपादी नास्तीति सुनिश्चतम् ।

---

१. '········पानीविषिभ्यः पः इति पः पानीयम् इत्युणादिकोषः ।'
(शब्दकल्पद्रुम, पृ० ५०६)

इस उणादिगणकी एक वृत्ति भी छपी है ।' (उणादिकोष, भूमिका, पृ० ४)

'भूयात् सोऽयमुणादिरुत्तमगणोऽध्येतुर्यशोवृद्धये ? (उणादिकोष व्याख्या के अन्त में ।)

**(२) शन्तनुः—**

श्री आफ्रेरण्टमहोदयेन स्वबृहद्हस्तलेखानुक्रमणिकायां डॉ० कीलहार्नमहोदयेन सम्पादितां मध्यप्रदेशहस्तलेखसूचिमाश्रित्य शन्तनोराचार्यस्योणादिसूत्रस्य हस्तलेखः सङ्केतितः ।

शन्तनुप्रोक्तस्योणादिसूत्रस्य सूचना अन्यत्र कुत्रचिदपि नोपलभ्यते। सम्प्रत्युपलभ्यमानां शान्तनवं फिट्सूत्रं शान्तनवशब्दानुशासनस्यैकमङ्गमस्ति । अतोऽनुमीयते यत् शन्तनुनाऽऽचार्येण स्वशब्दानुशसनसम्बद्धस्योणादिपाठस्य प्रवचनं विहितमासीत् ।

**(३) पञ्चपाद्युणादिपाठस्य प्रवक्ता-आपिशलिः—**

सं० २९०० वैक्रमाब्दप्राचीनेन 'आपिशलि' नाम्ना आचार्येण स्वव्याकरणसम्बद्धस्योणादिपाठस्याऽप्यवश्यं प्रवचनं विहितमासीदित्यत्र नास्ति मनागपि सन्देहलेशः । तथाप्यापिशलोणादिपाठविषयकं किञ्चिदपि साक्षादुद्धरणमद्यावधि नोपलब्धम् ।

पञ्चपाद्युणादिसूत्रेषु धातवः, प्रत्ययास्तत्सम्बन्धिनश्च येऽनुबन्धा उपलभ्यन्ते तेभ्यश्च विषयेऽस्मिन् न किञ्चिज्ज्ञायते यत् पञ्चपाद्युणादिः केन शब्दानुशासनेन सह सम्बध्यते । यतो ह्यापिशल धातु-प्रत्यय-तत्सम्बद्धानुबन्धानाम्प्रायेण पाणिनीधातु-प्रत्यय-तत्सम्बद्धानुबन्धैः सह साम्यमस्ति । केवलमुणादिसूत्रेषूपलब्ध-'ञमन्ताड्डः' ( पञ्चपादी १।१०७ ।। दशपादी ५।७ ) सूत्राधारेण किञ्चिदनुमातुं शक्यते ।

आपिशलेराचार्यस्य 'ञमङणनाः स्वस्थानाः नासिकास्थानाश्च' इति शिक्षासूत्रस्य (१।२४) पाणिनेराचार्यस्य च 'ङञणनमाः स्वस्थाननासिकास्थानाः' इतिशिक्षासूत्रस्य (१।२४) अनुनासिकवर्णानां पाठक्रमः सम्यग् विचार्येत चेत् स्पष्टं भविष्यति यत् प्रत्याहारसूत्रस्य ञ म ङ ण न इति वर्णक्रमः आपिशलाभिप्रेतः, अत एव तेन स्वशिक्षायामप्येष एव क्रम आश्रितः ।

कस्तावत् पञ्चपाद्युणादिपाठस्य प्रवक्तेति विषये प्राचीनग्रन्थेषु मतद्वयमुपलभ्यते । तत्राऽनेकेवैयाकरणाः कैयट-श्वेतवनवासी-नागेशभट्टवासुदेवप्रभृतयः 'व्याकरणे[1] शकटस्य च तोकम्' इति महाभाष्यवचनमाश्रित्य पञ्चपाद्युणादि-

---

१. पतञ्जलि—व्याकरणमहाभाष्यम्, ३।३।१।।

पाठस्य शाकटायन प्रोक्तत्वं स्वीकुर्वन्ति । तथा हि—

१. कैयटाचार्येण प्रदीपे उक्तम्—

उणादय[१] इत्येव सूत्रमुणादीनां शास्त्रान्तपठितानां साधुत्वज्ञापनार्थमस्त्विति भावः ।'

२. पञ्चपाद्युणादिपाठस्य वृत्तिकारेण श्रीश्वेतवनवासिनोक्तम्—

'येयं[२] शाकटायनादिभिः पञ्चपादी रचिता ।'

३. श्रीनागेशभट्टेनोक्तम्—

एवं च[३] कृवापेति उणादिसूत्राणि शाकटायनस्येति सूचितम् ।'

४. श्रीवासुदेवदीक्षितेन बालमनोरमायामुक्तम्—

'तानि[४] चेमानि सूत्राणि शाकटायनमुनिप्रणितानि, न तु पाणिनिना प्रणीतानि ।'

कतिपयाः प्राचीना ग्रन्थकाराः पञ्चपाद्युणादिपाठस्य पाणिनीयत्वमपि स्वीकुर्वन्ति । प्रक्रियासर्वस्वकारेण श्रीनारायणभट्टेन[५], शिशुपालवधमहाकाव्यप्रणेत्रा महाकविना माघेन,[६] महर्षिदयानन्दसरस्वतिमहाभागेन[७] च पञ्चपाद्युणादिपाठस्य पाणिनीयत्वं स्वीकृतम् ।

१. कैयट–प्रदीप, ३।३।१॥

२. श्वेतवनवासी–पञ्चपादी वृत्ति, पृ० १, २।

३. नागेशभट्ट–भाष्यप्रदीपोद्योत, ३।३।१॥

४. वासुदेव दीक्षित–बालमनोरमा, भाग ४, पृ० १३८, लाहौर संस्करण ।

५. अकारं मुकुरस्यादौ उकारं दर्दुरस्य च ।
बभाण पाणिनिस्तौ तु व्यत्ययेनाह भोजराट् ॥ प्रक्रियासर्वस्व, उणादिप्रकरण ॥

६. निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलम् ।
पाणिनीयमिवालोचि धीरैस्तत्समराजिरम् ॥ शिशुपालवधम् १९।७५॥

७. 'वह अष्टाध्यायी, धातुपाठ, आदिगण (? उणादिगण) शिक्षा और प्रतिपदिकगण यह पाँच पुस्तक पाणिनि मुनिकृत……। ( ऋषि दयानन्द के पत्र और विज्ञापन, पृ० २० द्वि० संस्करण ।

द्र० उपर्युक्त, पृ० २६, द्वि० संस्करण तथा पूना प्रवचन ( उपदेशमञ्जरी ) दसवाँ व्याख्यान पृ० ११२, रालाकट्र संस्करण ।

यद्यपि 'अमन्ताड्डः' इति सूत्रम् पञ्चपाद्युणादिपाठे दशपाद्युणादिपाठे च समानरूपेणपठितम्, तथापि दशपाद्युणादिपाठस्य प्रवचनं पञ्चपादिपाठाधारेण जातम्, अतोमूलत्वात् पञ्चपाद्युणादिपाठः प्राचीनः।

यद्यप्यनेके वैयाकरणाः पञ्चपाद्युणादिपाठस्य शाकटायनाचार्यप्रोक्तत्वम्, अनेके च तस्य पाणिनिप्रोक्तत्वं स्वीकुर्वन्ति, किन्तु 'ञमङणनम्' इति प्रत्याहारसूत्रस्य, 'ञमङणनाः स्वस्थाना नासिकास्थानाश्च' इत्यापिशलशिक्षासूत्रस्य, 'अमन्ताड्डः' इत्युणादिसूत्रस्य च तुलनया प्रतीयते यद् दशपाद्युणादिपाठस्य मूलाधारभूतस्य पञ्चपाद्युणादिपाठस्य प्रवक्ता आचार्य आपिशलिरेव भवितुमर्हति।

**(४) दशपाद्युणादिपाठस्य प्रवक्ता-पाणिनिः—**

पाणिनिनाऽऽचार्येण स्वपञ्चाङ्गव्याकरणपूर्त्यर्थं, 'उणादयो बहुलम्' (अष्टा० ३।३।१) इति सूत्रसङ्केतितानामौणादिकप्रत्ययानां निदर्शनाय कस्यचिदुणादिपाठस्य प्रवचनं विहितमिति तु निश्चप्रचमेव। उणादिपाठस्य द्वौ पाठावुपलभ्येते दशपादी पञ्चपादी चेति। तत्र पञ्चपाद्युणादिपाठस्य प्रवक्ता आपिशलिराचार्य इति पूर्वमेव संसाधितम्।

अतः कस्तावद् दशपाद्युणादिपाठस्य प्रवक्तेति सम्प्रत्यपि न सुनिश्चितम् प्रक्रियाकौमुद्याः टीकाकारेण विठ्ठलाचार्येण उणादिप्रकरणे दशपाद्युणादिपाठो व्याख्यातः पाणिनीयव्याकरणसमाश्रयणशीलैरनेकैर्वैयाकरणैरस्य वृत्तयोऽपि प्रणिताः। एतदतिरिक्तं अधोलिखितानि प्रमाणान्यपि दशपाद्युणादिपाठस्य पाणिनीयत्वं संसाधयन्ति—

१. महाभाष्यकारेण पतञ्जलिना 'हयवरट्' इति प्रत्याहारसूत्रस्य भाष्ये एकं प्राचीनं सूत्रम् 'जीवेरदानुक्' इति समुद्धृतम्, यत् केवलं दशपादिपाठ एव (१।१६३) समुपलभ्यते।
२. वामनेन काशिकावृत्त्यां (६।२।४३) यूप शब्दस्यकृते 'कुसुयुभ्यश्च' इति सूत्रं समुद्धृतम्, तत् दशपाद्युणादिपाठ एव (७।५) समुपलभ्यते।
३. श्रीहरदत्तमिश्रेण काशिकावृत्तेः पदमञ्जर्यां (७।४।४८) वार्तिकस्य 'उषस्' शब्दस्य सिद्धयर्थं 'वसेः कित्' इति सूत्रं समुद्धृतम्, तत् दशपाद्युणादिपाठ एव (९।९४) उपलभ्यते।

४. पाणिनीयव्याकरणसमाश्रयणकर्तृभिरनेकैर्ग्रन्थकारैरनेकान्येतादृशानि सूत्राणि समुद्धृतानि, यानि दशपाद्युणादिपाठ एवोपलभ्यन्ते । यथा श्रीदेवराजयज्वना 'वहुष' पदस्य व्याख्याने समुद्धृतं 'ऋहनिभ्यामुषन्' इति सूत्रं दशपाद्युणादि-पाठ एव (९।१३) समुपलभ्यते ।

५. पाणिनिरष्टाध्याय्यां येषां प्रत्ययानां धातुमात्राद्विधानं स्वीकरोति, तत्र 'सर्वधातु' शब्दनिर्देशं न विधाय केवलं प्रत्ययमात्रं निर्दिशति । यथा-ण्वुल्तृचौ (अष्टा० ३।१।१३३॥),तृन् (अष्टा० ३।२।१३५॥) इत्यादयः । तथैव दशपाद्युणादिपाठेऽपि ये प्रत्ययाः धातुमात्रादिष्टाः, तत्र केवलं प्रत्ययमात्रं निर्दिशति । यथा–इन् (दशपादी० १।४६), असुन् । (दशपादी० ९।४९), ष्ट्रन् । (दशपादी० ८।७९॥) मनिन् । (दशपादी० ६।७३॥) इत्यादयः ।

अत एव दशपाद्युणादिपाठस्य प्रवक्ता पाणिनिराचार्य एव स्वीकर्तुं शक्यते !

## ३. पञ्चपाद्युणादिसूत्राणां व्याख्यातारः

केनचिद्विदुषा पञ्चपाद्युणादिपाठस्य 'भाष्य' नामाभिधा व्याख्या प्रणीतेति श्रीमदुज्ज्वलदत्तेन स्वोणादिवृत्तौ[1] सूचितम् । लेखकस्य विदुषोऽस्य नाम न ज्ञायते ।

सं० १२०० वैक्रमाब्दात् प्राचीनेन 'गोवर्धन' नामाभिधेयविदुषा पञ्चपाद्युणादिपाठस्यैका वृत्तिः प्रणीता । वृत्तेरस्याः समुद्धरणानि अमरटीकासर्वस्वउज्ज्वलदत्त-प्रणीतोणादिवृत्ति-प्रौढमनोरमाप्रभृतिष्वनेकेषु ग्रन्थेषूपलभ्यन्ते ।

सं० १२०० वैक्रमाब्दात् प्राचीनेन 'दामोदर' नामाभिधेयविदुषा पञ्चपाद्युणादिपाठस्यैका वृत्तिः प्रणीतेति श्रीसुभूतिचन्द्र प्रणीताया अमरटीकाया अधोलिखितादुद्धरणाज्ज्ञायते—

'यत्तु दिद्याशीलः असिविधौ 'दिविभुजिभ्यां विश्वे' ( तु० ४।२३७ ) इति पठित्वा 'विश्वे' इति सप्तम्या अलुकि दीव्यतेरसि विश्वेदेवाः इति

---

१. इगुपधात् किरिति प्रमादपाठः । स्वरे विशेषादिति भाष्यम् ।

( उज्ज्वलदत्त-उणादिवृत्ति, ४।११९॥, पृ० १७५ )

इह इक इति वक्तव्ये 'अच' इति वचनं सन्ध्याक्षरादप्याचारक्विबन्ताद् यथा स्यादिति भाष्यम् । ( तदेव, ४।१३८॥ पृ० १८१ )

सान्तमुदाजहार स तस्य विपर्यस्तदृशोर्दोषेण हस्तामर्णं, तत्रैव पारायण-परायणैर्गोवर्धन-दामोदर-पुरुषोत्तमादिभिः विदिभुजिभ्यां विश्वे इति वृति पठित्वा विश्वं वेत्ति विश्वदेवाः इति, 'आशुप्रुषीति' (१।१५१) क्वन्विधौ विश्वं जगत् विश्वे देवा इत्युदाहृतत्वात् ।'

सं० १२०० वैक्रमाब्दप्राचीनेन 'पुरुषोत्तमदेवेन' पञ्चपाद्युणादिपाठस्य काचिदेका-वृत्तिः प्रणीता । श्रीउज्ज्वलदत्तेन स्वोणादिवृत्तौ वृत्तेरस्या अनेकान्युद्धरणानि देववृत्ति नाम्ना समुद्धृतानि । शरणदेवनापि दुर्घटवृत्तौ पुरुषोत्तमदेवप्रणीतोणादिवृत्तिः सङ्केतिता ।

पञ्चपाद्युणादिपाठस्योपरि केनचिदज्ञातनामाभिधेयविदुषा "सूतीवृत्तिः" प्रणीतेति श्रीमदुज्ज्वलदत्तेन स्वोणादिवृत्तौ संसूचितम् । तस्याः वृत्तेर्लेखकस्य कालः स० १२०० वैक्रमाब्द इत्यनुमीयते ।

त्रयोदशवैक्रमाब्दारम्भे श्रीमदुज्ज्वलदत्तेन पञ्चपाद्युणादिपाठस्यैका सुविस्तृता वृत्तिः प्रणीता । सम्प्रति वृत्तिरियमुपलभ्यते । श्रीथोडेर आफ्रेक्टमहोदयेन सर्वप्रथममस्याः वृत्तेः सम्पादनं विहितम् ।

सुभूतिचन्द्रप्रणीताया अमरटीकायाः—'यत्तु दिद्याशीलः असिविधौ 'दिविभुजिभ्यां विश्वे' इति सप्तम्या अलुकि दीव्यतेरसि विश्वेदेवाः इति सान्तमुदाजहार……।' इति पाठेन ज्ञायते यत् सं० १२५० वैक्रमाब्दीयेन 'दिद्याशील' नामाभिधेयविदुषा पञ्चपाद्युणादिपाठस्योपरि कश्चन वृत्तिग्रन्थः प्रणीतः ।

संम्भवतः त्रयोदशवैक्रमशतकीयेन श्री श्वेतवनवासीतिनामाभिधेयविदुषा पञ्चपाद्युणदिपाठस्यात्युत्कृष्टा वृत्तिः प्रणीता । वृत्तिरियं मद्रासविश्वविद्यालयात् संस्कृतग्रन्थमालान्तर्गते प्रकाशिता ।

सं० १५७०–१६५० वैक्रमाब्दमध्यकालीनेन श्री भट्टोजिदीक्षित नामाभिधेयविदुषा सिद्धान्तकौमुद्यन्तर्गतानामुणादिसूत्राणां संक्षिप्ता व्याख्या विहिता । व्याख्येयम्पञ्चपाद्युणादिसूत्राणां ( प्राच्यपाठस्य ) वर्तते ।

सं० १६१७–१७३३ वैक्रमाब्दमध्यकालीनेन श्री नारायणभट्ट नामाभिधेयविदुषा, 'प्रक्रियासर्वस्व' इत्यभिधेय एको ग्रन्थः प्रणीतः । तत्रैव कृदन्तप्रकरणे तेनो-

णादिसूत्राणामपि संक्षिप्ता वृत्तिः प्रणीता। वृत्तिरियमुणादिसूत्राणां दाक्षिणात्यपाठोपरि वर्तते। वृत्यामस्यां श्रीनारायणभट्टेन स्थाने स्थाने भोजदेवेन विवृतानामौणादिकशब्दानामपि संग्रहो विहतः।

सं० १७२०-१७७० वैक्रमाब्दमध्यकालीनेन सांख्यदर्शनवृत्तिकारेण श्री महादेववेदान्तीति नामाभिधेयविदुषा पञ्चपाद्युणादिसूत्राणां 'निजविनोदा'[1] नाम्न्येका लघुवृत्तिः प्रणीता। वृत्तिरियम् अडियार (मद्रास) नगरीतः प्रकाशिता।

सं १७१०-१७६० वैक्रमाब्दमध्यकालीनेन श्री यज्ञरामदीक्षितसुतेन श्री चक्कनाथमखिशिष्येण श्री रामभद्रदीक्षित नामाभिधेयविदुषा पञ्चपाद्युणादिपाठस्य 'मणिदीपिका'[2] नाम्नी टीका प्रणीता। ग्रन्थस्याऽस्यैको हस्तलेखः तञ्जौरपुस्तकालये[3] विद्यते। श्री आफ्रेख्टमहोदयेन स्वकीये बृहत्सूचीपत्रे लेखकस्य नाम 'रामचन्द्रदीक्षित' इति लिखितम्।

प्रायेण सं० १७६० वैक्रमाब्दीयेन श्रीरामभद्रदीक्षितशिष्येण श्री वेङ्कटेश्वर नामाभिधेयविदुषा पञ्चपाद्युणादिसूत्राणां 'उणादिनिघण्टु' नाम्नी वृत्तिः प्रणीता। वृत्तेरस्या एको हस्तलेखो मद्रासराजकीयपुस्तकालयस्य सूचीपत्रे (क्रमाङ्के ४७३२) निर्दिष्टः। द्वितीयश्च हस्तलेखः तञ्जौरहस्तलेखसग्रहस्य सूचीपत्रे नवमभागे ३७४८ तमे पृष्ठे उट्टङ्कितः।

सं० १७६०-१८०० वैक्रमाब्दीयेन श्री वेङ्कटेश्वरपुत्रेण, काञ्चीपुरवास्तव्येन श्रीवासुदेवअध्वरिशिष्येण श्री पेरुसूरि नाम्ना वैयाकरणेन पञ्चपाद्युणादिपाठस्य 'औणदिकपदार्णव' नाम्नी श्लोकबद्धा व्याख्या प्रणीता। तत्रौणदिकपदानि व्याचक्षाणेन ग्रन्थकारेण स्थाने-स्थाने तन्निष्पन्नानां तद्धितप्रयोगाणामपि निर्देशो विहितः।

सं० १८०० वैक्रमाब्दीयेन गोविन्दपुरवास्तव्येन श्री नारायणसुधी नाम्ना

---

१. इत्युणादिकोशे निजविनोदाभिधेये वेदान्तिमहादेवविरचिते पञ्चमः पादः सम्पूर्णः।

२. इति श्रीरामभद्रदीक्षितस्य कृतौ उणादिमणिदीपिकयां प्रथमः पादः।

३. तञ्जौर हस्तलेख संग्रहसूची, भाग १०, पृ० ४२३९, ग्रन्थाङ्क ५६७५।

वैयाकरणेन अष्टाध्याय्याः 'प्रदीप' (अपरं नाम) 'शब्दभूषण'[1] इत्याख्या प्रणीता। अस्याः हस्तलेखः तञ्जौर पुस्तकालये सुरक्षितः। तत्र तृतीताध्यायस्य द्वितीयपादानन्तरमुणादिपाठस्य व्याख्या वर्तते।

सं० १८५० वैक्रमाब्दीयेन शिवराम नामाभिधेयविदुषा पञ्चपाद्युणादिपाठस्य 'लक्ष्मीनिवासाभिधान' नाम्नी वृत्तिः प्रणीता। उणादिवृत्तिरियं या लेखकेन 'उणादिकोश' नाम्ना व्यवहृता, सन् १८७३ ईशवीये वाराणसीतः षट्कोशसंग्रहे प्रकाशिता।

सं० १९४० वैक्रमाब्दप्राचीनेन श्री रामशर्म नामाभिधेयविदुषा पञ्चपाद्युणादिसूत्राणां 'उणादिकोश' नाम्नी वृत्तिः प्रणीता। वृत्तिरियं काश्याः 'पण्डित' इत्याख्यपत्रस्य द्वितीयभागे प्रकाशिता।

सं० १९३९ वैक्रमाब्दे श्रीमत् स्वामीदयानन्दसरस्वती महाभागेन पञ्चपाद्युणादिपाठस्यैका वृत्तिः प्रणीता, या अजमेरनगरस्थवैदिकयन्त्रालयात् 'उणादिकोष' नाम्ना प्रकाशिता। स्वामिदयानन्दमहाभागेन स्वोणादिवृत्तावेकैकस्यौणादिकशब्दस्य यौगिकरूढोवुभावप्यर्थौ प्रदर्शितौ। तथा हि—

करोतीति कारुः–कर्ता, शिल्पी वा।

वाति गच्छति जानाति वेति वायुः—पवनः, परमेश्वरो वा।

पाति रक्षति स पायुः—रक्षकः, गुदेन्द्रियं वा।

वृत्तिरियं यद्यपि स्वल्पाक्षरा, तथाप्यौणादिकवाङ्मये सर्वतोऽधिकं महत्त्वपूर्णा प्रतीयते।

## ६. दशपाद्युणादिसूत्रणां व्याख्यातारः

दशपाद्युणादिपाठस्योपर्यपि पञ्चपाद्युणादिपाठवदनेकैर्वैयाकरणैर्वृत्तिग्रन्थाः प्रणीता, किन्तु दशपाद्युणादिपाठस्य पठनपाठने व्यवहृतत्वाभावादनेके वृत्तिग्रन्था विलुप्ताः। सम्प्रति दशपाद्युणादिपाठस्य त्रय एव वृत्तिग्रन्था उपलभ्यन्ते तत्रापि प्राचीनतरवृत्तेस्तदाश्रिताया अन्यस्याः वृत्तेश्च लेखकस्य नामाऽप्यन्धकारावृतमस्ति।

---

१. इति गोविन्दपुरवास्तव्यनारायणसुधिविरचिते सवार्तिकाष्टाध्यायीप्रदीपे शब्दभूषणे······॥

अत्र तिसृणां वृत्तीनां विषये संक्षेपेण किञ्चदुच्यते।

**(क) अज्ञातनामा ( सं० ७०० वैक्रमाब्दप्राचीनः )**—दशपाद्युणादिपाठ-स्यैकाऽतिप्राचीना वृत्तिरियम्। वृत्तेरस्या उद्धरणानि विभिन्नेषु प्राचीनग्रन्थेषूप-लभ्यन्ते। वृत्तिरियम् सं० १९३२ वैक्रमाब्दे ( सन् १८७५ ईशवीये ) काश्यां लीथोमुद्रणालये प्रकाशिता। अस्या एकं प्रामाणिकं संस्करणं श्रीपण्डितयुधिष्ठिर-मीमांसकमहाभागेन सम्पादितम्, यद् राजकीयसंस्कृतमहाविद्यालयस्य सरस्वती-भवनग्रन्थमालान्तर्गते सन् १९४२ ईशवीये प्रकाशितः।

श्री आफ्रेरण्टमहोदयेन स्वकीयवृहद्हस्तलेखसूच्यां वृत्तेरस्याः लेखकस्य नाम 'माणिक्यदेव' इति संसूचितम्। पूनास्थडेक्कनकालेजग्रन्थालयसूचीपत्रेऽपि तस्य नाम 'माणिक्यदेव' इत्येव निर्दिष्टम्।

**(ख) अज्ञातनामा सं०१२०० वैक्रमाब्दप्राचीनः )**—दशपाद्युणादिपाठ-स्य कस्यचिदज्ञातनाम्नो लेखकस्यैका वृत्तिरूपलभ्यते वृत्तेरस्या एको हस्तलेखः काशीस्थसरस्वतीभवनसंग्रहे सुरक्षितः।

अस्याः वृत्तेरुणादि सूत्राणामन्याभिर्वृत्तिभिस्सह तुलनया प्रतीयते यद् वृत्तिरियं पूर्वनिर्दिष्टां दशपाद्युणादिवृत्तिमाश्रित्य प्रणीता। सममेवे दमपि ज्ञायते यद् वृत्तिरियं श्रीहेमचन्द्रप्राणीतोणादिवृत्तितः प्राचीनाऽस्ति। तत्रेदम्प्रमाणम्—

दशपाद्युणादिपाठस्य सूत्रमस्ति–घटे ईच (५।९३)। सूत्रमिदं व्याचक्षाणे पूर्वनिर्दिष्टवृत्तिकारेण 'धेना' शब्दस्य व्युत्पत्तिः सूत्रादस्मात् साधिता। परन्त्वने-नाऽज्ञातनाम्ना वृत्तिकारेण 'ध्यन्ति तामिति धीना सरस्वती माता च' इति निर्दिश्य 'धीना' शब्दस्य व्युत्पत्ति स्वीकृता।

उणादिवाङ्मये सम्प्रति ज्ञातेषु वृत्तिग्रन्थेषु केवलामयमेव वृत्तिरेतादृशी, यत्र 'धीना' शब्दस्य साधुत्वम्प्रदर्शितम्। अन्यत्र तु 'धेना' शब्द एव निर्दिष्टः।

**(ग) विट्ठलाचार्यः (सं० १५२० वै०)**

सं० १५२० वैक्रमाब्दप्राचीनेन श्रीविट्ठलाचार्येण श्रीरामचन्द्र प्रणीतायाः प्रक्रियाकौमुद्याः 'प्रसाद' नाम्नी टीका प्रणीता। तत्रैवोणादिप्रकरणे तेन दशपा-द्युणादिपाठस्यैकाऽतिसंक्षिप्ता व्याख्या प्रणीता।

एवम् दशपाद्युणादिपाठस्य त्रय एव वृत्तिग्रन्थाः सम्प्रत्युपलब्धा. । श्रीभट्टोजिदीक्षितेन पञ्चपाद्याजायपादुत्तरकाले पञ्चाद्युणादिपाठस्यैव गठनपाठनप्रसारकारणेन दशपाद्युपादिपाठस्तद्वृत्तिग्रन्थाश्च प्रायो विलुप्ताः ।

## ५. पाणिन्युत्तरवर्तिन उणादिसूत्रप्रवक्तारः

**(१) कातन्त्र उणादिकारः**—कातन्त्रव्याकरणसम्बद्ध एकः षट्पादी उणादिपाठ उपलभ्यते । उणादिसूत्रपाठोऽयं कृदन्तभागस्य परिशिष्टरूपोऽस्ति । स्मरणीयम् यत् कातन्त्रव्याकरणस्य मूलप्रवक्त्रा कृदन्तशब्दानामन्वाख्यानं नविहितम् । अतः कृदन्तभागस्य प्रवचनं कात्यायनवररुचिना विहितम् । कात्यायनवररुचिरयं विक्रमादित्यस्य नवरत्नेष्वन्यतमोऽस्ति ।

**(२) चन्द्राचार्यः**—सं० वैक्रमाब्दप्राचीनेन श्रीचन्द्राचार्येण चान्द्रव्याकरणसम्बद्धस्योणादिपाठस्याऽपि प्रवचनं विहितम् ! उपादिपाठोऽयं श्रीलिबिश महोदयेन स्वसम्पादिते चान्द्रव्याकरणे सोदाहरणम्प्रकाशितः ।

श्रीचन्द्रगोमिना स्वकीय उणादिपाठः त्रिषुपादेषु विभक्तः । पाठस्याऽस्य संकलनं दशपाद्युणादिवदन्त्यवर्णक्रमेण विहितम् । तृतीयापादस्यान्ते केषाञ्चन प्रकीर्णशब्दानां संग्रह उपलभ्यते ।

**(३) क्षपणकः**—श्रीक्षपणकाचार्येण स्वव्याकरणसम्बद्धस्य । कस्यचिदुणादिपाठस्याऽपि प्रवचनं विहितमिति श्रीमदुज्ज्वलदत्तीयोणादिवृत्तौ (पृ० ६०) क्षपणकवृत्तेरुद्धरणाज्ज्ञायते । सम्प्रत्यमुणादिपाठो वृत्तिश्च नोपलभ्येते ।

**(४) देवनन्दी**—आचार्येण देवनन्दिना स्वोपज्ञव्याकरणसम्बद्धस्योणादिपाठस्याऽपि प्रवचनं विहितमासीत् । तस्योणादिपाठः स्वतन्त्ररूपेण सम्प्रति न प्राप्यते । अभयनन्दिनो महावृत्तौ देवनन्दिप्रोक्तोणादिपाठस्याऽनेकानि सूत्राण्युद्धृतानि ।

जैनेन्द्र व्याकरणात् पूर्वं पञ्चपाद्युणादिपाठः दशपाद्युणादिपाठश्च विद्यमानावास्ताम् । पञ्चपाद्युणादिपाठस्याऽपि प्राच्यौदीच्य दाक्षिणात्यपाठा अपि जैनेन्द्रात् पूर्ववर्तिनः । महावृत्तावुद्धृतानां कतिपयानां सूत्राणां पूर्ववर्तिनामेतेषामुणादिपाठानां सूत्रैस्सह तुलनया प्रतीयते यद् जैनेन्द्र उणादिपाठः पञ्चपाद्युणादिपाठस्य प्राच्यपाठमाश्रितः ।

(५) **वामनः**—प्रायेण सं० ६०० वैक्रमाब्दप्राचीनेन श्रीवामनेन स्वशास्त्रसम्बद्धस्योणादिपाठस्य प्रवचनमवश्यं विहितमित्यत्र न सम्भाव्यते सन्देहलेशः। वामनस्योणादिपाठः सम्प्रति नोपलभ्यते।

(६) **पाल्यकीर्तिः**—सं० ८०१-९२४ वैक्रमाब्दमध्यजातेन आचार्येण पाल्यकीर्तिना स्वोपज्ञशब्दानुशासनसम्बद्धस्योणादिसूत्रपाठस्याऽपि प्रवचनं विहितमिति तस्याऽधोलिखितसूत्रद्वयेन ज्ञायते—

'सम्प्रदानाच्चोणादयः' ।४।३।५७॥

'उणादयः' ।४।३।२८०॥

'चिन्तामणि' नाम्न्याः लघुवृत्तेः प्रणेत्रा श्रीयन्तवर्मणाऽपि स्ववृत्तिप्रारम्भे—'उणादिकान् उणादौ ....' (श्लोक ११) इति विलिख्य पाल्यकीर्तिप्रोक्तस्योणादिपाठस्याऽस्तित्वं साधितम्। किन्तु पाल्यकीर्तिप्रोक्त उणादिपाठः सम्प्रति नप्राप्यते।

(७) **भोजदेवः**— सं० १०७५-११५० वैक्रमाब्दमध्यजातेन महाराजेन भोजदेवेन 'सरस्वतीकण्ठाभरणाख्य' स्वव्याकरणसम्बद्धानामुणादिसूत्राणां प्रवचनं विहितम्। उणादिपाठोऽयं भोजदेवप्रणीतसरस्वतीकण्ठाभरणाख्यव्याकरणस्य द्वितीयाध्यायस्य १-२-३ पादेषु पठितः।

(८) **बुद्धिसागरसूरिः**—सं० १०८० वैक्रमाब्दप्राचीनेन श्रीबुद्धिसागरसूरिणा 'पञ्चग्रन्थी' इत्याख्यस्य व्याकरणस्य प्रवचनं विहितम्। तत्रैव तेन शब्दानुशासनेन सह चतुर्णां खिलपाठानामपि प्रवचनं विहितमासीद्, यत्रोणादिपाठोऽप्यासीदित्यनुमीयते।

(९) **हेमचन्द्रसूरिः**—सं० ११४५-१२२९ वैक्रमाब्दप्राचीनेन श्रीहेमचन्द्रसूरिणाऽऽचार्येण स्वव्याकरणसम्बद्धस्योणादिपाठस्य प्रवचनं विहितम्, तस्योपरि तेन स्वयं विवृतिरपि प्रणीता।[1] हस्तलेखानामन्ते विवरणशब्देनाऽप्यस्याः निर्देश उपलभ्यते :[2]

---

१. आचार्यहेमचन्द्रः करोति विवृतिं प्रणम्यार्हम्। प्रारम्भिकश्लोक।

२. इत्याचार्यहेमचन्द्रकृतं स्वोपज्ञोणादिविवरणं समाप्तम् ॥६॥ ग्रन्थामाने शत २८०० अष्ट विंशति शतानि ...... हेमोणादिवृत्ति, जोहन किर्स्टे सम्पादित, उपोद्घात पृष्ठ १॥

उणादिपाठोऽयं सर्वतो विस्तृतः। तत्र १००६ मितानि सूत्राणि सन्ति। तेषां व्याख्याग्रन्थोऽप्यतिविस्तृतः। तत्र अष्टाविंशति शतानि पद्यानि सन्ति।

(१०) **क्रमदीश्वरः**—सं० १३०० वैक्रमाब्दप्राचीनेन श्रीक्रमदीश्वरेण "संक्षिप्तसार" इत्यभिधेयस्य जौमरव्याकरणस्य प्रवचनं विहितम्। तेन स्वतन्त्र-सम्बद्धस्योणादिपाठस्याऽपि प्रवचनं विहितमासीत्।

(११) **सारस्वतोणादिकारः**—सं० १३०० वैक्रमाब्दप्राचीनेन श्रीमदनुभूतिस्वरूपाचार्येण प्रोक्तानि सारस्वतव्याकरणसम्बद्धान्युणादिसूत्राण्युपलभ्यन्ते। अनेके विद्वांसः उणादिसूत्रपाठममुं सिद्धान्तचन्द्रिका प्रणेत्रा रामाश्रमेण प्रोक्तं स्वीकुर्वन्ति। उणादिसूत्रपाठोऽयं पञ्चपादेषु विभक्तः। तत्र ३८१ मितानि सूत्राणि सन्ति।

**पद्मनाभदत्तः**—सं० १४०० वैक्रमाब्दप्राचीनेन श्रीपद्मनाभदत्तेन सुपद्म-व्याकरणस्य प्रवचनातिरिक्तं स्वीयव्याकरणसम्बद्धस्योणादिपाठस्याऽपि प्रवचनं विहितमासीत्।

## ६. पाणिन्युत्तरवर्तिन उणादिसूत्रव्याख्यातारः

कातन्त्रव्याकरणसम्बद्धोणादिपाठस्योपरि श्रीदुर्गसिंहेन वृत्तिः प्रणीता, सा मद्रासविश्वविद्यालयग्रन्थमालान्तर्गते प्रकाशिता। श्रीलिविशसम्पादितचान्द्र-व्याकरणान्तर्गतोणादिपाठे सूत्रैस्सह तत्साध्यशब्दानामर्थसहितनिर्देशेनानुमीयते यत् श्रीचन्द्राचार्येण चान्द्रव्याकरणस्य तदन्तर्गतोणादिपाठस्य च स्वोपज्ञा वृत्तिः प्रणीता। क्षपणकाचार्येण स्वतन्त्रसम्बद्धस्योणादिपाठस्य स्वोपज्ञा वृत्तिः प्रणीता। आचार्यदेवनन्दि प्रोक्तोणादिसूत्रपाठस्यानुपलब्धेः काकया तद्वृत्तेः तथापि तस्य स्वीयधातुपाठ-लिङ्गानुशासनयोष्टीकाग्रन्थविषयेऽनेकप्रमाणोपलब्धेः, उणादिपाठस्याऽपि स्वोपज्ञा टीका तेन प्रणीता भवेदित्यनुमीयते। वामनेन स्वकीयोणादिपाठप्रवचनेन सह तस्य स्वोपज्ञावृत्तिरपि प्रणीतेत्यनुमीयते। महाराजभोजदेवप्रोक्त-सरस्वतीकण्ठाभरणाख्यव्याकरणान्तर्गतोणादिपाठस्योपरि भोजदेवदण्डनाथः रामसिंह नामाभिधेयैर्विद्वद्भिः क्रमशःस्वोपज्ञा, हृदयहारिणी, रत्नदर्पण नाम्नी च टीका प्रणीता। केनचिदज्ञातवैयाकरणेन च सरस्वतीकण्ठाभरणान्तर्गतोणादि-

पाठस्य ''पदसिन्धुसेतु'' नाम्नी टीका प्रणीता। आचार्येण हेमचन्द्रेण स्वव्याकरणसम्बद्धस्योणादिपाठस्याऽतिविस्तृता व्याख्या 'विवृतिः' प्रणीता। तत्र अष्टविंशतिशतमिताः श्लोका आसन्। अस्यैव 'उणादिगणसूत्रावचूरि' नाम्नी अन्या वृत्तिरप्यासीत्। तस्याः लेखकस्य नाम न ज्ञायते। पञ्चदशशतकोत्तरार्द्धे शुभशीलनामाभिधेयविदुषा 'उणादिनाममाला' इत्याख्योणादिवृत्तिः प्रणीता। जौमर व्याकरणान्तर्गतोणादिपाठस्योपरि क्रमदीश्वरस्य स्वोपज्ञा वृत्तिः, जूमरनन्दिना परिशोधिता वर्तते। अस्याः हस्तलेखः लन्दननगरस्य इण्डियापुस्तकालये उपलभ्यते। श्रीशिवदासचक्रवर्तिनाऽपि जौमरव्याकरणसम्बद्धस्योणादिपाठस्यैका वृत्तिः प्रणीता। सारस्वतव्याकरणान्तर्गतोणादिपाठस्य रामाश्रमस्य 'सिद्धान्तचन्द्रिका' लोघेशकरस्य 'तत्त्वदीपिका', सदानन्दस्य 'सुबोधिनी' तथा च कस्यचनाऽज्ञातलेखकस्य 'व्युत्पत्तिसार' नाम्नी व्याख्या च सुप्रसिद्धा। श्रीपद्मनाभदत्तेन स्वतन्त्रसम्बद्धोणादिपाठस्य स्वयमेव वृत्तिः प्रणीता। तस्या एको हस्तलेखो लन्दननगरस्य इण्डिया आफिसग्रन्थालयस्य सूचीपत्रे ( भागे १, खण्डे २, सं० ८९१) निर्दिष्टोऽस्ति।

॥ इति संस्कृतव्याकरणशास्त्रैतिह्यविमर्शे उणादिसूत्राणां प्रवक्तृव्याख्यातृवर्णनं नाम षोडशोऽध्यायः ॥

●

अथ सप्तदशोऽध्यायः

# लिङ्गानुशासनप्रवक्तृव्याख्यातृवर्णनम्

## १. लिङ्गानुशासनस्वरूपम्

महर्षिणा पतञ्जलिना महाभाष्ये—'स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः। उभयोरन्तरं यच्च तदभावे नपुंसकम्' इति रीत्या पुंल्लिङ्ग-स्त्रीलिङ्ग-नपुंसकलिङ्गानि परिभाषितानि। पुंस्त्वस्त्रीत्वादयो यथा चेतनजगतः प्रत्येकं व्यक्तिमभिसम्बध्यते तथैव पुंल्लिङ्गादयो प्रत्येकं नामशब्दमभिसम्बध्यन्ते। अत एव लिङ्गानुशासनं नाम शब्दानुशासनावयवभूतम्, तद्विना शब्दानुशासनमपूर्णमेव भवति। तथापि लिङ्गानुशासनम् धातुपाठ-गणपाठोणादिपाठात् शब्दानुशासनस्य केनचिद् विशिष्टेन सूत्रेण, कैश्चित् सूत्रैर्वा नाभिसम्बध्यते। अतो लिङ्गानुशासनं शब्दानुशासनस्य साक्षादवयवत्वेनैव स्वीकर्तव्यम्। अत एव प्रायेण सर्वैरपि वैयाकरणैः शब्दानुशासनप्रवक्तृभिः स्वतन्त्रेण सह तत्सम्बद्धलिङ्गानुशासनमपि प्रोक्तम्। अनेकैश्च हर्षवर्धन-वामनप्रभृतिभिर्ग्रन्थकारैर्वैयाकरणैः शब्दशास्त्रप्रवचनमविधाय लिङ्गज्ञानकाठिन्यदूरीकरणार्थं केवलं लिङ्गानुशासनानामेव प्रवचनं विहितम्।

## २. लिङ्गानुशासनप्रवक्तारः

अतः परं केषाञ्चित् परिज्ञातानां प्रामुख्यम्भजमानानां लिङ्गानुशासनप्रवक्तॄणां परिचयः संक्षेपेण प्रस्तूयते।

**(१) शन्तनुः—**

सं० २९०० वैक्रमाब्दप्राचीनेन शन्तनुनाऽऽचार्येण पञ्चाङ्गव्याकरणप्रवचनातिरिक्तम्, स्वतन्त्रसम्बद्धस्य कस्यचिल्लिङ्गानुशासनस्याऽपि प्रवचनं विहितमासीत्। तथ्यमिदं हर्षवर्धनप्रोक्तलिङ्गानुशासनसम्पादकेन श्री वे० वेङ्कटराम शर्मणा स्वीयोपोद्घाते ( ३४ तमे पृष्ठे ) संसूचितम्।

**(२) व्याडिः—**

पाणिनिसमकालिकेनाऽऽचार्येण व्याडिना लिङ्गानुशासनस्याऽपि प्रवचनं विहितमिति विभिन्नैर्लिङ्गानुशासनप्रवक्तृभिः संसूचितम् । तथा हि—

(१–) श्रीहेमचन्द्राचार्येण स्वोपज्ञलिङ्गानुशासनविवरणे उक्तम् यत्—

'[ शङ्कु– ] पुंसि व्याडिः,[1] स्त्रियां वामनः, पुन्नपुंसकोऽयमिति बुद्धिसागरः ।'

(२–) श्रीवामनेन स्वीयलिङ्गानुशासनस्यान्ते लिखितम् यत्—

'व्याडिप्रणीतमथ वाररुचं[2] सचान्द्रं······ ।'

(३–) श्रीहर्षवर्धनेन स्वप्रोक्तस्य लिङ्गानुशासनस्यान्ते पूर्वाचार्यनिर्देशपुरस्सरमुक्तम्—

'व्याडेः शङ्करचन्द्रयोर्वर[3]रुचेर्विद्यानिधेः पाणिनेः ।'

व्याडेराचार्यस्य लिङ्गानुशाशनं सूत्रबद्धमतिविस्तृतञ्चासीत् । तथा चोक्तं वामनेन—

'पूर्वाचार्यैर्व्याडिप्रमुखैर्लिङ्गानु[4]शासनं सूत्रैरुक्तम्, ग्रन्थविस्तरेण च ।'

'व्याडप्रमुखैः[5] प्रपञ्चबहुलम् ।'

**(३) पाणिनिः—**

सं० २९०० वैक्रमाब्दात् प्राचीनेन पाणिनिनाऽऽचार्येण स्वशब्दानुशासनसम्बद्धस्य लिङ्गानुशासनस्याऽपि प्रवचनं विहितमासीत् । लिङ्गानुशासनमिदं सम्प्रत्युपलब्धम्, एतद्विषयकप्राचीनेष्वार्षग्रन्थेषु चेदमेवावशिष्टम् । इदं सूत्रात्मकमस्ति ।

पाणिनीयास्तदुत्तरवर्तिनश्च वैयाकरणाः सम्प्रति पाणिनीयसम्प्रदाये स्वीकृतस्य लिङ्गानुशासनस्य प्रवक्तारमाचार्यं पाणिनिमेव स्वीकुर्वन्ति । तथा चोक्तं श्रीहरदत्तेन—

१. हेमचन्द्र-स्वोपज्ञ-लिङ्गानुशासनविवरण, पृष्ठ १०३, पं० १४, १५ ।

२. वामन—लिङ्गानुशासनम्, श्लोक ३१ ।

३. हर्षवर्धन—लिङ्गानुशासनम्, श्लोक ८७ ।

४. वामन—लिङ्गानुशासनम्, पृ० २ ।

५. तदेव, पृ० १ ।

'अप्सुमनः समासिकतावर्षाणां [1]बहुत्वं चेति पाणिनीये सूत्रम् ।'

महाभाष्ये (७।१।३३) कात्यायनस्य 'न वा लिङ्गाभावात्' इति वार्तिकं व्याचक्षाणेन भगवता पतञ्जलिनोक्तम्—'अलिङ्गे युष्मदस्मदी ।'

कात्यायनीयवार्तिकस्य, पतञ्जलेराचार्यकृतव्याख्यानस्य च पाणिनीयलिङ्गानुशासनस्य 'अविशिष्टं लिङ्गम्, अव्ययं कतियुष्मदस्मदः' इत्येताभ्यां सूत्राभ्यां तुलनया स्पष्टम् यत् कात्यायनपतञ्जली पाणिनीयलिङ्गानुशासनेनाऽनेन परिचितावास्ताम्। लिङ्गानुशासनस्योपलब्धवृत्तीनामवलोकनेन ज्ञायते यत् पाणिनीयलिङ्गानुशासनस्य सूत्रपाठोऽत्यधिकं भ्रष्टः संवृत्तः ।

**(४) चन्द्रगोमी—**

सं० ११०० वैक्रमाब्दप्राचीनेन चन्द्रगोमिनाऽऽचार्येण लिङ्गानुशासनस्य प्रवचनं विहितमिति हैमलिङ्गानुशासनस्य स्वोपज्ञविवरण-सर्वानन्दप्रणीतामरटीकासर्वस्वप्रभृतिष्वनेकेषु ग्रन्थेषु संसूचितम् । तथा चाह सर्वानन्दः अमरटीकासर्वस्वे—

'धारान्धकारशिखरसहस्राङ्गारतोरणाः[2] इति पुन्नपुंसकाधिकारे चन्द्रगोमी ।'

चान्द्रलिङ्गानुशासनं छन्दोबद्धमासीदिति सूचितं सर्वानन्देन । तथा हि—

'तथा च चन्द्रगोमी—'ईदूदन्ता[3] य एकाच्च इदन्ताङ्गानि देहिनः' इति ।'

**(५) वररुचिः—**

विक्रमसमकालिकेन 'वररुचि' नाम्ना वैयाकरणेन आर्याछन्दसि 'लिङ्गविशेषविधिः' इत्यभिधेयस्य लिङ्गानुशासनस्य प्रवचणं विहितम्। लिङ्गानुशासनमिदं मूलेन, कस्याश्चिद् वृत्तेश्च संक्षेपेण सह हर्षवर्धनीयलिङ्गानुशासनस्यान्ते मुद्रितम् । लिङ्गानुशासनस्यान्तेऽधोलिखितः पाठ उपलभ्यते—

'इति श्रीमद्वाग्विलासमण्डितसरस्वतीकण्ठाभरणानेकविशरण-श्रीनर-

---

१. हरदत्त—पदमञ्जरी, भाग १, पृ० ४९४ ।

२. सर्वानन्द—अमरटीकासर्वस्व, भाग २, पृष्ठ ४७ ।

३. सर्वानन्द—अमरटीकासर्वस्व, भाग ४, १७४ ।

पतिसेवितविक्रमादित्यकिरीटकोटिनीघृष्टचरणारविन्दाचार्यवररुचिविरचितो लिङ्गविशेषविधिः समाप्तः।'

लिङ्गविशेषविधेर्द्वितीयाया आर्याया पूर्वार्द्धं जिनेन्द्रबुद्धिपादेन प्रणीतायां काशिकाविवरणपञ्जिकायां ( न्यासे ) समुद्घृतः। तथा हि—

'तथा चाह लिङ्गकारिकाकारः[१]—ईदूदन्तं यच्चैकाच् शरद्दरद्दृषत्-प्रावृषश्चेति।'

लिङ्गविशेषविधेरष्टमः श्लोको हर्षवर्धनप्रणीतलिङ्गानुशासनस्य पृथिवीश्वर-प्रणीतव्याख्यायां समुद्धृतः। तथा हि—

'यदुक्तम्—दीधितिमेकां[२] मुक्त्वा रश्म्यभिधानं तु पुंस्येव।'

**(६) अमरसिंहः—**

श्री अमरसिंहनामाभिधेयविदुषा स्वीयाऽमरकोशस्य तृतीयकाण्डस्य पञ्चमे सर्गे 'लिङ्गादिसंग्रहो' विहितः। भारतीयपरम्परानुसारं अमरसिंह महाराजस्य विक्रमादित्यस्य समकालिकः स्वीक्रियते। किन्तु पाश्चात्यास्तदनुयायिनश्च विद्वांसोऽमरसिंहस्य कालः सं० ३०० वैक्रमाब्दतो ४०० वैक्रमाब्दं यावत् स्वीकुर्वन्ति।

**(७) देवनन्दी—**

आचार्येण देवनन्दिना स्वव्याकरणसम्बद्धस्य लिङ्गानुशासनस्य प्रवचनं विहितम् यस्य साक्षादुल्लेखो वामनेन स्वलिङ्गानुशासनस्यान्ते विहितः। तथा हि—

'व्याडिप्रणीतमथ[३] वाररुचं सचान्द्रम्
जैनेन्द्रलक्षणगतं विविधं तथाऽन्यत्।'

जैनेन्द्रलिङ्गानुशासननाम्नाऽनेकान्युद्धरणानि हैमलिङ्गानुशासनस्य स्वोपज्ञ-विवरणे समुपलभ्यन्ते। लिङ्गानुशासनमिदं सम्प्रति नोपलभ्यते।

**(८) शङ्करः—**

श्रीहर्षवर्धनेन स्वीयलिङ्गानुशासनस्यान्ते शङ्करप्रोक्तस्य लिङ्गानुशासनस्याऽ-

---

१. जिनेन्द्रबुद्धि—काशिकाविवरणपञ्जिका (न्यास) ७।१।१८, पृ० ६३१।

२. हर्षवर्धन—लिङ्गानुशासनव्याख्या, पृष्ठ ६।

३. वामन—लिङ्गानुशासनम्, श्लोकः ३१।

घोलिखितप्रकारेणोल्लेखो विहितः—

'व्याडेः शङ्करचन्द्रयोर्वररुचेर्विद्यानिधेः पाणिनेः। सूक्तांल्लिङ्गविधीन् विचार्य…… ।'

श्रीशङ्करप्रणीतस्य लिङ्गानुशासनस्योल्लेखो वाररुचलिङ्गविशेषविधेष्टीकायाः प्रारम्भेऽप्युपलभ्यते। सं० ६५०· वैक्रमाब्दप्राचीनेन शाश्वतेन प्रणीतस्य 'अनेकार्थ-समुच्चय' इत्यभिधेयस्य' कोशस्यारम्भे—

'दृष्टशिष्टप्रयोगोऽहं दृष्टव्याकरणत्रयः।'
अधीती सदुपाध्यायाल्लिङ्गशास्त्रेषु पञ्चसु ॥'

इत्येवं रीत्या वर्णितेषु पञ्चसु लिङ्गशास्त्रेषु व्याडि–पाणिनि–चन्द्रवररुचि-प्रणीतानि चत्वारि लिङ्गानुशासनानि निश्चितरूपेण शाश्वतात् पूर्ववर्तीनि, पञ्चमञ्च लिङ्गशास्त्रं यदि शङ्करप्रणीतमभिप्रेतं स्यात्तर्हि शङ्करस्य कालः सं० ६५० वैक्रमाब्दात् पूर्वं सुनिश्चितो भवति।

**(९) हर्षवर्द्धनः—**

श्रीहर्षवर्द्धनेन प्रोक्तं लिङ्गानुशासनम् जर्मनभाषानुवादेन सह जर्मनी देशे पूर्वमेव प्रकाशितः। ततश्च व्याख्या परिशिष्टैर्युतम् श्री पं० वे०वेंकटराम शर्मणा सम्पादितमुत्तमं मद्रासविश्वविद्यालयात् प्रकाशितम्।

श्री हर्षवर्धनेन स्वकीयः परिचयो न प्रदत्तः। केवलं तेन 'श्रीवर्धनस्यात्मजः' इत्येवोक्तम्। अनेकेषां विदुषाम्मते हर्षवर्धनोऽयं बाणादिमहाकवीनामाश्रयदाता प्रसिद्धो महाराजः श्रीहर्षः। श्रीहर्षस्य राज्यकालः सं० ६५०–७०४ वैक्रमाब्दं यावत् स्वीक्रियते। केचन विद्वांसः महाराजं श्रीहर्षं लिङ्गानुशासनप्रवक्तारं न स्वीकृत्य कञ्चिदन्यं हर्षं कल्पयन्ति, तन्न समीचीनम्।

**(१०) दुर्गसिंहः—**

सं० ७०० वैक्रमाब्दप्राचीनेन श्रीदुर्गसिंहेन प्रणीतमेकं लिङ्गानुशासनम् पूनास्थ डेक्कनकालेजाख्यसंस्थातः प्रकाशितम्। तस्य व्याख्याऽपि श्रीदुर्गसिंहप्रणीतैवाऽस्ति। लिङ्गानुशासनमिदं कातन्त्रव्याकरणेन सहाऽभिसम्बध्यते इति तद्व्याख्यायां कातन्त्रसूत्राणामुद्धरणैः स्पष्टम्।

लिंगानुशासनस्य ५२ तम कारिकायाः व्याख्यायां 'ङणना ह्रस्वोपधा स्वरे द्विः' इति सूत्रमुद्धृतमस्ति। सम्पादकेन तन्मूलस्थानं न निर्दिष्टम्। इदं कातन्त्र-व्याकरणस्य (१।५।७) सन्धिप्रकरणीयं सूत्रमस्ति। श्री दुर्गसिंहेन स्वग्रन्थस्यान्ते दुर्गात्मा-दुर्गसिंह-दुर्ग--दुर्गप प्रभृतीनि चत्वारि नामानि प्रदर्शितानि। तथा हि-

'दुर्गसिंहोऽथ दुर्गात्मा दुर्गो दुर्गप इत्यपि।
यस्य नामानि तेनैव लिंगवृत्तिरियं कृता ॥'

**(११) वामनः—**

सं० ८५१-८७० वैक्रमाब्दप्राचीनेन वामनेन लिंगानुशासनस्य प्रवचनं विहितम्, तस्य स्वोपज्ञा वृत्तिरपि प्रणीता। लिङ्गानुशासनेऽस्मिन् ३३ कारिकाः सन्ति। अनया दृष्टचेदं लिंगानुशासनमति संक्षिप्तमस्ति। ग्रन्थकारेणोक्तम्—

'लिंगानुशासनमहं वच्म्यार्याभिः समासेन ॥'

कारिकाया अस्याः व्याख्यायामुक्तम्—

'पूर्वाचार्यैर्व्याडिप्रमुखैर्लिङ्गानुशासनं सूत्रैरुक्तम्, ग्रन्थविस्तरेण च। अहं पुनरार्याभिर्वच्मि सुखग्रहणार्थम्। वररुचिप्रभृतिभिरप्याचार्यैरार्याभि-रभिहितमेव, तदतिबहुना ग्रन्थेन—इत्यहं तु समासेन संक्षेपेण वच्मि।'

**(१२) पाल्यकीर्तिः—**

सं० ८७१-९२४ वैक्रमाब्दप्राचीनेन श्री पाल्यकीर्तिना स्वतन्त्रसम्बद्धस्य लिंगानुशासनस्य प्रवचनं विहितम्। इदं 'शाकटायनलिंगानुशासन'नाम्ना व्यवह्रि-यते। हर्षवर्धनीयलिंगानुशासनस्य मद्राससंस्करणस्यान्ते शाकटायनलिंगानुशासनम् कस्याश्चिद् वृत्तेः संक्षेपेण सह मुद्रितमस्ति। तत्र सप्ततिमिताः श्लोकास्सन्ति। परन्तु वाग्विषयस्य तु महतः इत्यन्तिमः श्लोकः शाकटायनलिंगानुशासनस्य नास्ति। श्लोकोऽयं वाररुचलिंगानुशासनस्यान्तिमः श्लोकः। काश्यां मुद्रितायाः शाकटायनलघुवृत्तेरन्तिमे भागे मुद्रिते लिंगानुशासने श्लोकोऽयं न दृश्यते।

**(१३) भोजदेवः—**

सं० १०७५-१११० वैक्रमाब्दप्राचीनेन श्रीभोजदेवेन स्वतन्त्रसम्बद्धस्य लिंगानुशासनस्यापि प्रवचनं विहितम्। अस्य निर्देशः श्रीहर्षप्रणीतलिंगानुशासन-

सम्पादकेन श्रीवेंकटरामशर्ममहोदयेन 'निवेदना'ख्य भूमिकायाः चतुस्त्रिंशे पृष्ठे विहितः ।

**(१४) बुद्धिसागरसूरिः—**

सं० १०८० वैक्रमाब्दप्राचीनेन श्रीबुद्धिसागरसूरिणा स्वतन्त्रसम्बद्धस्य लिंगानुशासनस्य प्रवचनं विहितमिति हैमलिंगानुशासने बहुत्र बुद्धिसागरलिंगानुशासनोद्धरणोपलब्धेर्ज्ञायते । तथा हि—

१. 'मन्थः गण्डः ।[1] पुन्नपुंनकोऽयमिति बुद्धिसागरः ।'

२. 'शंकु—पुंसि व्याडिः[2], स्त्रियां वामनः, पुन्नपुंसकोऽयमिति बुद्धिसागरः ।'

३. 'खलः खलम्[3]—पिण्याकः दुर्जनश्च । दुर्गबुद्धिसागरौ ।'

**(१५) अरुणदेवः—**

सं० १२०० वैक्रमाब्दप्राचीनेन श्रीअरुणदेव (अरुण अथवा अरुणदत्त) नामाभिधेयविदुषा वैयाकरणेनैकं लिंगानुशासनम्प्रणीतमिति श्रीहेमचन्द्रेण स्वीयलिंगानुशासनेऽनेकत्र स्थलेषु संसूचितम् । तथा हि—

'वल्कः वल्कम्—[4]तरुस्त्वक् । पुंस्यपीति कश्चित् । क्लीबे हर्षारुणौ ।'

**(१६) हेमचन्द्रसूरिः**

सं० ११४५–१२२९ वैक्रमाब्दप्राचीनेन श्रीहेमचन्द्राचार्येण स्वीयपञ्चाङ्गशब्दानुशासनसम्बद्धस्य लिङ्गानुशासनस्य प्रवचनं विहितम् । लिङ्गानुशासनमिदमन्यलिङ्गानुशासनापेक्षया विस्तृतमस्ति । तत्र विविधछन्दोयुताः १३८ मिताः श्लोकास्सन्ति ।

**(१७) हेलाराजः**

चतुर्दशवैक्रमशतकप्राचीनेन श्रीहेलाराजेन लिंगानुशासनस्य प्रवचनं विहितमिति

---

१. हेमचन्द्र—हैम लगानुशासन, स्वोपज्ञविवरण, पृ० ४, पं० ५ ॥

२. तदेव, पृष्ठ १०३, पं० १५ ॥

३. तदेव, पृष्ठ १३३, पं० २२ ॥

४. तदेव, पृष्ठ ११७, पं० २४ ॥

सायणाचार्येण स्वकीयमाधवीयधातुवृत्तौ संसूचितम् ।

(१८) रामसूरिः

श्रीरामसूरिनामाभिधेयविदुषा प्रणीतस्य 'लिंगनिर्णयभूषण' इत्यभिधेयस्य ग्रन्थस्य हस्तलेखः मद्रासनगरस्थराजकीयहस्तलेखसंग्रहे अडियारग्रन्थालये च सुरक्षितोऽस्ति । ग्रन्थारम्भे समुपलब्धेन—

वाणीं प्रणम्य शिरसा बालानां ज्ञानसिद्धये ।
स्त्रीपुन्नपुंसकं स्वल्पं वक्ष्ये शास्त्रनिश्चितम् ॥
तोरूरिविष्णुविदुषः सूनुना रामसूरिणा ।
विरच्यते बुधश्लाघ्यं लिङ्गनिर्णयभूषणम् ॥'

इत्यनेन पाठेन, ग्रन्थपुष्पिकायाञ्चोपलब्धेन—

'इति रामसूरिविरचितायां बालकौमुद्यां लिङ्गनिर्णयः समाप्तः ।,

इत्यनेन पाठेन ज्ञायते यत् श्रीरामसूरिणा 'बालकौमुदी' इत्यभिधेयः कश्चन ग्रन्थः प्रणीतः, तस्यैकदेशभूतमिदं 'लिंगनिर्णयभूषणम्' ।

(१९) वेङ्कटरङ्गः

श्रीवेङ्कटरङ्गप्रणीतस्य 'लिङ्गप्रबोध' इत्यभिधेयग्रन्थस्य द्वौ हस्तलेखौ अडियारपुस्तकालये सुरक्षितौ स्तः ।[1]

एवमनेकैर्वैयाकरणैर्विद्वद्भिर्लिङ्गानुशासनानि प्रोक्तानीति श्रीपं० युधिष्ठिरमीमांसकमहोदयेन स्वकीये 'संस्कृतव्याकरणशास्त्र का इतिहास' इत्यभिधेये ग्रन्थे संसूचितम् ।

## लिंगानुशासनस्य व्याख्यातारः

पाणिनीयलिङ्गानुशासनस्योपरि श्रीभट्टउत्पल नामाभिधेयविदुषा व्याख्या प्रणीतेति हर्षवर्धनीयालिङ्गानुशासनसम्पादकेन श्रीवेङ्कटरामशर्मणा संसूचितम् ।[2] श्रीरामचन्द्राचार्येण प्रक्रियाकौमुद्यन्तर्गते पाणिनीयलिङ्गानुशासनस्य व्याख्या

---

१. अडियार पुस्तकालय, सूचीपत्र, व्याकरण विभाग, संख्या ४१०, ४११ ॥

२. वेङ्कटरामशर्मा (सम्पादक)—हर्षकृतलिंगानुशासन, निवेदना, पृ० ३५ ॥

विहिता। श्रीपं० भट्टोजिदीक्षितेन शब्दकौस्तुभान्तर्गते, सिद्धान्तकौमुद्यन्तर्गते च पाणिनीयलिङ्गानुशासनस्य व्याख्या विहिता। श्रीनारायणभट्टेन स्वीयप्रक्रियासर्वस्व-ग्रन्थान्तर्गते पाणिनीयलिंगानुशासनस्य व्याख्या विहिता। पाणिनीयलिङ्गानुशासन-स्यैका वृत्तिः श्रीविश्वेश्वरानन्दवैदिकसंस्थाने होशियारपुरे समुपलभ्यते। तस्याः रचयितुर्नाम न ज्ञायते हस्तलेखस्याऽस्यान्तेऽधोलिखितः पाठोऽस्ति—

'इति पाणिनीयलिङ्गानुशासनवृत्तौ[1] अव्ययाधिकारः। इति लिङ्गा-नुशासनवृत्तिः समाप्ता। संवत् १८२५ श्रावणवदि १३ दिने सम्पूर्णं कृतं लिखितं पठनार्थम्। देवी सहाय।'

श्रीनारायणसुधीनामाभिधेयविदुषा अष्टाध्याय्याः शब्दभूषण नाम्नी व्याख्या प्रणीता। तत्र द्वितीयाध्यायचतुर्थपादान्तर्गते लिङ्गप्रकरणानन्तरं पाणिनीयलिङ्गा-नुशासनस्य व्याख्या विहिता। सं० १९३० वैक्रमाब्द प्राचीनेन बंगप्रदेशीयसुप्रसिद्ध-वैयाकरणेन श्रीतारानाथतर्कवाचस्पतिनामाभिधेयविदुषा, अन्यवृत्तिभ्योऽतिविस्तृता पाणिनीयलिङ्गानुशासनवृत्तिः प्रणीता।

श्रीचन्द्राचार्येण स्वलिङ्गानुशासनस्य स्वोपज्ञा वृत्तिःप्रणीता वाररुचलिङ्गानुशा-सनस्य ( लिङ्गविशेषविधेः ) टीकाया एको हस्तलेखो विश्वेश्वरानन्दवैदिकशोध-संस्थानहोशिआरपुरस्य संग्रहे उपलभ्यते। टीकाया अस्याः लेखकस्य नाम न ज्ञायते। परन्तु ग्रन्थस्याऽस्यान्तिमपुष्पिकायाः—

'इति श्रीमदखिलवाग्विलास[2]·········निघृष्टचरणारविन्दाचार्यवर-रुचिविरचिता लिङ्गविशेषविधिटीका सम्पूर्णा ॥'

अस्मिन्नेव संस्थाने वाररुचलिङ्गानुशासनवृत्तेः द्वावन्यौ हस्तलेखावपि प्राप्येते। श्रीहर्षवर्द्धनीयलिङ्गानुशासनस्य या टीका प्रकाशिता तद्विषये विवादोऽस्ति। किन्तु श्रीपं० युधिष्ठिरमीमांसकमहोदयस्य सम्भावनानुसारम् श्रीभट्टभरद्वाजसूनुना पृथि-

१. द्र० वि० वै० शो० सं० हस्तलेखसूची, भाग २, पृष्ठ ८६, ग्रन्थ संख्या ११६२ ॥

२. द्र०, वि० वै० शो० सं० हस्तलेखसूची, भाग २, पृष्ठ ४२१, ४२२, ग्रन्थ संख्या ५६०८ ॥

बीश्वरेण, श्रीभट्टदीसस्वामिसूनुना, श्रीशबरस्वामिना च श्रीहर्षवर्धनीयलिङ्गानुशासनस्य टीका प्रणीता।

पाल्यकीर्तिप्रणीत शाकटायनलिङ्गनुशासनस्योपरि केनचिद् वैयाकरणेन टीका प्रणीता, अस्याः संक्षेपः हर्षवर्धनीयलिङ्गानुशासनस्य मद्राससंस्करणस्यान्ते मुद्रितः। व्याख्यायाः अस्याः प्रणेतुर्नाम न ज्ञायते। किन्तु श्री पं० युधिष्ठिरमीमांसक महोदयमतानुसारं टीकेय पाल्यकीर्तेः स्वोपज्ञा भवितुमर्हति। श्रीहर्षवर्धनीयलिङ्गानुशासनसम्पादकेन 'निवेदनाख्य' भूमिकायाः चतुर्स्त्रिशे पृष्ठे सूचितम् यत् श्री यक्षवर्मणा शाकटायनलिंगानुशासनस्य वृत्तिः प्रणीता।

हैमलिंगानुशासनस्योपरिश्रीहेमचन्द्राचार्येण बृहती स्वोपज्ञा 'विवरण' नाम्नी वृत्तिः प्रणीता। श्रीकनकप्रभनामाभिधेयविदुषा हैमलिङ्गानुशासनस्य 'अवचूरि' नाम्नी वृत्तिः प्रणीता। एतदतिरिक्तम्, श्रीजयानन्दसूरिणा 'लिङ्गानुशासनवृत्त्युद्धार' नाम्नी वृत्तिः, श्रीकेसरविजयमहाराजेन च हैमलिङ्गानुशासनस्यैका वृत्तिः प्रणीता। श्रीवल्लभगणिमहोदयेन हैमलिंगानुशासनविवरणस्य 'दुर्गपदप्रबोधा' नाम्नी टीका प्रणीता।

॥ इति संस्कृतव्याकरणशास्त्रैतिह्यविमर्शे लिंगानुशासनप्रवक्तृ-
व्याख्यातृवर्णनं नाम सप्तदशोऽध्यायः ॥

अथ अष्टादशोऽध्यायः

# परिभाषापाठप्रवक्तृव्याख्यातृवर्णनम्

## १. परिभाषाणां स्वरूपम्

पाणिनीयैस्तदुत्तरवर्तिभिरन्यैश्च शब्दानुशासनैस्सम्बद्धः 'परिभाषापाठ' नामा संग्रह उपलभ्यते। तेषु परिभाषापाठेषु परिभाषाणां संख्यायां किञ्चिन्न्यूनाधिक्यम्, कश्चन पाठभेदः, क्रमभेदश्चावलोक्यते। प्रायेण सर्वत्र परिभाषापाठेषु साम्यमेवास्ति।

वैयाकरणास्तावद्—'अनियमप्रसङ्गे नियमकारिणी परिभाषा' इति लक्षण-लक्षितां परिभाषां स्वीकुर्वन्ति। काशिकायामुक्तम्—

'परिभाषेयं स्थानिनियमार्था[1]। अनियमप्रसङ्गे नियमो विधीयते।'

महर्षिदयानन्दसरस्वतिमहाभागेन स्वकीयस्य 'पारिभाषिक' इत्यभिधेयस्य ग्रन्थस्य भूमिकायामुक्तम्—

'परितो व्यापृतां[2] भाषां प्रचक्षते।'

महाभाष्यकारेण पतञ्जलिना परिभाषामपि विशिष्टमधिकारं मन्वानेनोक्तम्—

'अधिकारो नाम त्रिप्रकारः[3]। कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति, यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्म अभिज्वलयति।'

कैयटेन महाभाष्योक्तपाठं व्याचक्षाणेनोक्तम्—

'कश्चिदिति[4] परिभाषारूप इत्यर्थः।'

---

१. काशिका १।१।३॥

२. स्वामी दयानन्दसरस्वती—पारिभाषिक, पृ० ४, आर्यसाहित्यमण्डल, अजमेर, सं० २०१२॥

३. पतञ्जलि—व्याकरणमहाभाष्य, १।१।४८॥

४. कैयट—प्रदीप, १।१।४८॥

## २. परिभाषाणां भेदाः

उपर्युक्ताः परिभाषाः द्विविधाः। पाणिनीयादिशास्त्रेषु सूत्ररूपेण पठिताः, अन्यसूत्रादितो ज्ञापिताः न्यायसिद्धप्रभृतयः। 'परिभाषापाठ' शब्देन वैयाकरणनिकाये द्वितीयविधानां नियामकवचनानामेव ग्रहणं जायते।

द्वितीयविधाः परिभाषाः सूत्रपाठाद् बहिर्भूताः सत्योऽपि सूत्रेण ज्ञापितत्वात्, सूत्रकारद्वारा तन्नियमानां स्वीकृतत्वात्, न्यायसिद्धाश्च परिभाषाः लोकविदितत्वात्ताः सूत्रवत् प्रमाणत्वेन स्वीक्रियन्ते, तत्र च सूत्रवदसिद्धादीनि कार्याणि जायन्ते।

तादृश्यः परिभाषाश्चतुर्विधाः सन्ति—ज्ञापित-न्यायसिद्ध-वाचनिक-मिश्रित-भेदात्।

१. या परिभाषाः केनचित् सूत्रेण ज्ञाप्यन्ते ताः 'ज्ञापिताः परिभाषा' उच्यन्ते। यथा—'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्।' इति।

२. लौकिकन्यायानुकूलाः परिभाषाः 'न्यायसिद्धा' उच्यन्ते। यथा—''गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः'' इति।

३. तादृश्यः परिभाषाः, या न तु सूत्रज्ञापिताः, न वा न्यायसिद्धाः, किन्त्वाचार्यविशेषस्य वचनरूपाः, ताः 'वाचनिक्य' उच्यन्ते। वाचनिकी परिभाषा द्विविधा—परिभाषारूपेण स्वीकृतानि वार्तिककारवचनानि, परिभाषारूपेण स्वीकृतानि भाष्यकारवचनानि चेति भेदात्।

४. यासाम्परिभाषाणामेकदेशः सूत्रकारेण ज्ञाप्यते, एकदेशश्च न्यायसिद्धः, ताः परिभाषाः; तथा च यासामेकदेशसूत्रकारज्ञापितः, शेषांशश्च पूर्वाचार्यवचनरूपेण पठितः ताः परिभाषाः 'मिश्रता' उच्यन्ते।

## ३. परिभाषाणां मूलम्

यद्यपि पाणिनीयैस्तदितरैश्च वैयाकरणैराश्रीयमाणानाम्परिभाषाणां किं मूलमिति विषये निश्चितरूपेण न किमपि वक्तुं शक्यते। सामान्यतयेदमेव वक्तुं शक्यते यदेतासां परिभाषाणां मूलं प्राचीनवैयाकरणानां सूत्रपाठानां विशिष्टानि सूत्राणि सन्ति। श्रीवीरदेवेनोक्तम्—

परिभाषा हि न[1] साक्षात् पाणिनीयवचनानि किं तर्हि ? नानाचार्याणाम् ।'

तथा चोक्तम् श्रीपुरुषोत्तमदेवेन—

'परिभाषा हि न पाणिनीयवचनानि[2]। किं तर्हि ? नानाचार्याणाम् ।'

एवं कैयटेन, हरदत्तेन, सायणाचार्येण च परिभाषाणां मूलत्वेन पूर्वाचार्यवचनानि स्वीकृतानि ।

सर्वेषां वैयाकरणानां मतमिदमस्त्येतासाम्परिभाषाणां विषये यत् यत्रैतदाश्रयणमन्तरेण शास्त्रीयकार्यनिर्वाहो न जायते, तत्रैतासामाश्रयणं विधीयते।

यत्र चैतदाश्रयणेन दोषः प्रतीयते, तत्रैतासामाश्रयणं न विधीयते। तथा चोक्तम् श्रीपुरुषोत्तमदेवेन—

'तत्र पाणिनीये[3] शब्दानुशासने यत्रैव विशिष्टविषये मुख्यलक्षणेन सिद्धिस्तत्रैवैता गत्यन्तरमपश्यद्भिराश्रीयन्ते। न तु यत्रैतासां समाश्रयणे दोष एव प्रत्युपपद्यते तत्रैताः तमाश्रीयन्ते ।'

श्रीसीरदेवेनाऽप्येतन्मतं समर्थितम् ।

## ४. परिभाषापाठस्य प्रवक्तारः

अतः परं परिभाषापाठस्य विशिष्टानाम्प्रवक्तॄणां व्याख्यातॄणां च संक्षिप्तः परिचय उपस्थाप्यते ।

### (१) काशकृत्स्नः—

सं० ३१०० वैक्रमाब्दप्राचीनेन काशकृत्स्नाचार्येण स्वव्याकरणसम्बद्धस्य परिभाषापाठस्य प्रवचनं विहितमासीत् । काशकृत्स्नप्रोक्तधातुपाठव्याख्यात्रा श्रीचन्नवीरकविना अन्यकाशकृत्स्नीयसूत्रवत् 'तुद' (५।१) धातुव्याख्याने 'सकृद् बाधितो विधिर्बाधित एव' इति वचनम्पठितम् । अन्येषामाचार्याणां व्याकरणेषु केनचिद्

---

१. सीरदेव—परिभाषावृत्ति, पृष्ठ १८६ ॥

२. पुरुषोत्तमदेव—परिभाषावृत्ति, पृष्ठ ५५ ॥

३. पुरुषोत्तमदेव—परिभाषावृत्ति, पृष्ठ ५५ ।

भेदेनेदं वचनं परिभाषापाठेऽप्युपलभ्यते। अतः काशकृत्स्नीयधातुपाठोणादिपाठयो-रुपस्थितौ सत्यमिदं निश्चितरूपेणाऽनुमातुं शक्यते यत् काशकृत्स्नाचार्येण कस्यचन परिभाषापाठस्याऽपि प्रवचनं विहितमासीत्।

**(२) व्याडिः—**

पाणिनीयवैयाकरणाश्रितपरिभाषावचनानां पूर्वाचार्यसूत्ररूपत्वेऽपि एतेषां सुव्यवस्थितरूपेण संग्राहकः, पाणिनीयतन्त्रानुरूपञ्च तत्स्वरूपाभिव्यञ्जकः कस्तावदाचार्य इति जिज्ञासा समुदेति। तद्विचारणायां ज्ञायते यत् सम्भवतः आचार्येण व्याडिना परिभाषापाठः सुव्यवस्थितरूपेण सम्प्रकाशितः। तत्र प्रमाणानि—

१. विश्वेश्वरानन्दवैदिकशोधसंस्थाने होशिआरपुरे परिभाषापाठस्य द्वौ हस्तलेखौ विद्येते। तयोरन्ते लिखितम्—

'केचित्तु व्याख्यानतो विशेषप्रतिपत्तिरित्यादयः सर्वाः परिभाषा व्याडिमुनिना रचिता इत्याहु[१]ः।'

२. लन्दननगरस्थे इण्डिया आफिस पुस्तकालये भास्करभट्टस्य केनचिदन्तेवासिना प्रणीतायाः परिभाषावृत्तेरेको हस्तलेखोऽस्ति।[२] तस्यारम्भे लिखितम्—

'केचित्तु व्याख्यानत इति परिभाषा व्याडिमुनिविरचिता इत्याहुः।'

३. त्रिवेन्द्रम् नगरात् प्रकाशितायाः श्रीनीलकण्ठदीक्षितप्रणीतायाः परिभाषापाठलघुवृत्तेरारम्भे उक्तम्—

'केचित्तु व्याख्यानत इत्यादिपरिभाषा व्याडिविरचिता इत्याहुः।

४. जम्मूनगरस्थ रघुनाथमन्दिरस्य हस्तलेखसंग्रहे 'व्याडीय परिभाषावृत्ति' इत्यभिधेयो ग्रन्थ उपलभ्यते[३]।

५. महामहोपाध्याय श्रीकाशीनाथ अभ्यंकरमहोदयेनोपलभ्यमानानां समेषां

---

१. विश्वेश्वरानन्द वैदिक शोध संस्थान होशिआरपुर संग्रह संख्या ३२७७, ३२७२।

२. इण्डिया आफिस पुस्तकालय लन्दन सूचीपत्र भाग १, खण्ड २, ग्रन्थ नं० ६७३।

३. रघुनाथ मन्दिर जम्मू हस्तलेख संग्रह सूचीपत्र, पृ० ३७।

परिभाषापाठानां, तद्वृत्तीनाञ्च 'परिभाषासंग्रह' नाम्नैका संग्रहग्रन्थः प्रकाशितः[1]। तस्य संग्रहे प्रथमो ग्रन्थः—'व्याडिकृतं परिभाषासूचनम्', द्वितीयश्च—'व्याडि-परिभाषापाठ' इति। तत्र प्रथमो ग्रन्थः सव्याख्यः। द्वितीयग्रन्थस्यान्ते लिखितम्—

'इति व्याडिविरचिताः पाणिनीयपरिभाषाः समाप्ताः।'

एभिः सर्वैः प्रमाणैः स्पष्टम् यद् व्याडिना कस्यचित् परिभाषापाठस्य संग्रहो विहित आसीत्।

परिभाषा संग्रहस्यारम्भे मुद्रिते व्याडीय परिभाषापाठे 'परिभाषासूचनम्' इति नाम निर्दिष्टम्। तद्व्याख्यायामपि—

'अथ परिभाषासूचनं व्याख्यास्यामः। अथेत्ययमधिकारार्थः। परिभाषासूचनं शास्त्रमधिकृतं वेदितव्यम्।

इत्येवंरीत्या शास्त्रस्याऽस्य नाम 'परिभाषासूचन' मित्येवाऽस्ति। महामहोपाध्याय श्रीकाशीनाथ अभ्यंकरमहोदयेन व्याडीयपरिभाषापाठस्य द्वौ ग्रन्थौ प्रकाशितौ, तत्र द्वयोरपि पाठौ भिन्नौ। प्रथमपाठे ९३ परिभाषाः, द्वितीयपाठे च १४० मिताः परिभाषाः सन्ति। न तत्र केवलं संख्या भेदः, अपितु परिभाषाणां पौर्वापर्यक्रमभेदः पाठभेदश्चातिशयेन वर्तेते।

**(३) पाणिनिः—**

सं० २९०० वैक्रमाब्दप्राचीनेन पाणिनिमुनिना स्वतन्त्रसम्बद्धस्य परिभाषापाठस्य प्रवचनं विहितमिति परिभाषापाठस्याऽनेकेषां हस्तलेखानां, वृत्तिग्रन्थानाञ्चान्ते परिभाषाणां कृते 'पाणिनीय–पाणिनिप्रोक्त–पाणिनिविरचित' शब्दप्रयोगे ज्ञायते।

१. अडियार हस्तलेख संग्रहस्य सूचीपत्रे (भाग २, पृ० ७२, सन् १९२८) परिभाषासूत्राणां निर्दिष्टे हस्तलेखे लिखितम्—

'परिभाषासूत्राणि पाणिनिकृतानि।'

२. परिभाषाणां तृतीयपाठान्तर्गते पुरुषोत्तमदेवप्रणीतपरिभाषावृत्तावुपलब्धपाठस्य केषाञ्चिद् हस्तलेखानामन्ते समुपलब्धेन—

---

१. भण्डारकर ओरियण्टल रिसर्च इन्स्टीट्यूट, पूना, सन् १९६७।

'इति पाणिनीयाचार्यविरचितानां परिभाषाणां लघुवृत्तिः सम्पूर्णा।'

इति पाठेन ज्ञायते यत् कश्चित् परिभाषापाठः, सूत्रग्रन्थो वा पाणिनिप्रोक्तः।

३. परिभाषापाठस्य पाणिनिप्रोक्तत्वं महाभाष्यस्य (१।४।२)—

'पठिष्यति ह्याचार्यः सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव इति।'

इति वाक्येनाऽपि सिध्यति। यतो हि महाभाष्ये आचार्यशब्दः पाणिनिकृते, कात्यायनकृते च प्रयुज्यते। सम्पूर्णेऽपि महाभाष्ये क्वचिदपि परिभाषेयं वार्तिकरूपेण न पठिता, अतोऽत्र प्रयुक्तम् 'आचार्यपदम्" पाणिनि कृते वर्तते, परिभाषा पाठस्य च पाणिनि प्रोक्तत्वं स्पष्टी करोति।

## (४) कातन्त्रपरिभाषाप्रवक्ता

सम्प्रत्युपलभ्यमानः कातन्त्रव्याकरणपरिभाषापाठोऽनेकविधः। परिभाषासंग्रहे श्रीपण्डितकाशीनाथअभ्यङ्करमहोदयेन चतुर्विधः पाठः प्रकाशितः, तत्र द्वौ प्राठौ वृत्तिसहितौ, द्वौ च मूलमात्ररूपौ; तत्राऽन्तिमः पाठः कालापपरिभाषासूत्रनाम्ना प्रकाशितः, कालापञ्च कातन्त्रस्यैव नामान्तरम्।

पाठेष्वेतेषु प्रथमे श्रीदुर्गसिंहप्रणीतवृत्तियुक्ते पाठे सप्तषष्टिमिताः (६७) परिभाषाः, द्वितीये च श्रीभावमिश्रकृतवृत्तियुक्ते पाठे द्विषष्टिमिताः (६२) परिभाषाः सन्ति। तृतीये कातन्त्रपरिभाषासूत्ररूपे पाठे सप्तषष्टिमितानि (६७) परिभाषासूत्राणि, एकोनत्रिशन्मितानि (२९) बलाबलसूत्राणि अर्थात् साकल्येन षण्णवतिमितानि (९६) सूत्राणि सन्ति। तथा च कालापपरिभाषासूत्ररूपे चतुर्थपाठे अष्टादशोत्तरैकशतमिताः (११८) परिभाषास्सन्ति। कातन्त्रपरिभाषापाठस्याऽऽद्यप्रवक्तुर्विषये न किञ्चिज्ज्ञायते। शर्ववर्मा कात्यायनो वाऽपि कातन्त्रपरिभाषापाठस्य प्रवक्तृत्वेन न स्वीक्रियते।

## (५) चन्द्रगोमी

श्रीचन्द्रगोमिप्रोक्तः परिभाषापाठः श्रीपं० काशीनाथअभ्यङ्करमहोदयेन परिभाषासंग्रहे प्रकाशितः। पाठेऽस्मिन् त्र्यशीतिमिताः (८३) परिभाषास्सन्ति। नात्र कश्चन सन्देहलेशो पदस्य परिभाषापाठस्य प्रवक्ता चन्द्रगोम्येव नाऽन्यः कश्चन

चान्द्रसम्प्रदायस्य वैयाकरणः। परिभाषापाठेऽस्मिन् स्वरविधौ व्यञ्जनमविद्यमानवत्' इत्याख्यषडशीतितमपरिभाषोपलब्धेः स्पष्टत्वात्। चान्द्रव्याकरणस्याष्टमेऽध्याये स्वरप्रकरणमासीत्। सम्प्रति चान्द्रव्याकरणस्य षडध्याया एवोपलभ्यन्ते। अतो यद्यस्य परिभाषापाठस्य प्रवक्ता कश्चिदन्य आचार्योऽभविष्यत्तर्हि चान्द्रव्याकरणस्य स्वरविषयकाप्रसिद्धिकारणेन स्वरशास्त्रविषयकषडशीतितमपरिभाषाया उल्लेखः परिभाषापाठेऽस्मिन्नाऽभविष्यत्।

**(६) जैनेन्द्रपरिभाषाकारः**

श्रीदेवनन्दिना प्रोक्तेन शब्दानुशासनेन सम्बद्धजैनेन्द्रपरिभाषाणां कश्चन स्वतन्त्रपाठः, वृत्तिग्रन्थो वा नोपलभ्यते; किन्तु श्रीअभयनन्दिप्रणीतायाम्महावृत्तावनेकाः परिभाषाः यत्र तत्र समुद्धृताः। परिभाषासंग्रहसम्पादकेन श्रीपं०काशीनाथअभ्यंकरमहोदयेन लिखितम्—

'ग्रन्थं नागेशभट्टानां परिभाषेन्दुशेखरम्।
सम्पादयितुकामेन नानाव्याकरणस्थिताः॥
वृत्तयः परिभाषाणां तथा पाठा विलोकिता।
तासां च संग्रहं कुर्वन् जैनेन्द्रेनोपलब्धवान्॥
पाठं परिभाषाणां वृत्तिं वा संग्रहं तथा।
काश्चित्तत्र मया दृष्टा वृत्तावभयनन्दिनाम्॥
उपयुक्तास्तत्र तत्र सूत्रार्थप्रतिपादने।
तासां तु संग्रहं कृत्वाऽलेखि पाठः सवृत्तिकः॥
खदिग्दिग्भू (१८८०) मिते शाके वत्सरे रचितो मया।
माघे कृष्णे पुण्यपुर्यां प्रारब्धः प्रतिपत्तिथौ॥
दशम्यां सुसमाप्तोऽयं ग्रन्थः प्रत्यर्पितो मया।
गुरुभ्यः ख्यातनामभ्यः प्रणतिप्रतिपूर्वकम्॥'

अनेन स्पष्टम् यत् श्री अभ्यंकरमहोदयेन महावृत्त्यादौ समुद्धृताः जैनेन्द्रतन्त्रसम्बद्धाः परिभाषाः संगृहीतास्तदुपरि वृत्तिश्च प्रणीता। परिभाषापाठस्याऽस्याद्यप्रवक्तृविषये न किञ्चिज्ज्ञायते।

## (७) शाकटायनव्याकरणपरिभाषाप्रवक्ता

श्रीपाल्यकीर्तिप्रणीतशाकटायनव्याकरणसम्बद्धस्यैकस्य परिभाषापाठस्याऽपि प्रकाशनं श्रीपं० काशीनाथअभ्यंकरमहोदयेन परिभाषासंग्रहे विहितम्। एतदर्थं तेन हस्तलेखद्वयं समाश्रितम्। परिभाषापाठस्याऽस्यैको हस्तलेखः लन्दननगरस्य इण्डियाआफिससंग्रहेऽप्यस्ति।[1]

परिभाषापाठस्याऽस्य प्रवक्ता पाल्यकीर्तिरेव, तस्याऽमोघावृत्तावेतासां परिभाषाणां बहुत्र समुद्धृतत्वात्। श्री अभ्यङ्करमहोदयेनाश्रिते हस्तलेखद्वये परिभाषापाठेऽस्मिन् 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इत्याख्या सप्तत्रिंशत्तमा परिभाषोपलभ्यते। पाल्यकीर्तिना स्वव्याकरणशास्त्रे स्वरशास्त्रस्य विधानं न विहितम्। अस्यामवस्थायां तस्य परिभाषापाठे स्वरविषयकपरिभाषोपलब्धिरेकमाश्चर्यजनकं वृत्तमेव।

## (८) श्रीभोजदेवः

श्रीभोजदेवेन स्वीयव्याकरणसम्बद्धः परिभाषापाठः गणपाठोणादिपाठवदेव स्वशब्दानुशासने पठितः। सरस्वतीकण्ठाभरणे परिभाषापाठः १।२।१८ तः १।२।५९ यावत् पठितः।

## (९) श्रीहेमचन्द्राचार्यः

श्रीहेमचन्द्राचार्येण स्वशब्दानुशासनसम्बद्धस्य परिभाषापाठस्य निर्धारणं विहितमासीत्। स पाठोऽत्यन्तं संक्षिप्त आसीत्। तत्राऽत्युपयोगिन्यः केवलं सप्तपञ्चाशन्मिताः (५७) परिभाषा एव पठिताः। हैमव्याकरणे परिभाषाः 'न्यायसूत्र' नाम्ना व्यवह्रियन्ते।

हैमन्यायव्याख्यात्रा श्रीहेमहंसगणिना न्यायसंग्रहे सप्तपञ्चाशन्मितन्यायनिर्देशानन्तरमुक्तम्—

'एते[2] न्यायाः प्रभुश्रीहेमचन्द्राचार्यैः स्वोपज्ञसंस्कृतशब्दानुशासनबृहद्वृत्तिप्रान्ते समुच्चिताः॥'

---

१. द्र० इण्डिया आफिस लन्दन सूचीपत्र भाग १, खण्ड २, सं० ५०३५॥

२. हेमहंसगणि—न्यायसंग्रह, पृ० ३॥

न्यायसमुच्चयस्याऽर्वाचीनेन व्याख्यात्रा श्री विजयलावण्यसूरिणा स्वव्याख्यारम्भे उक्तम्—

'समर्थः[१] पदविधिः इति सूत्रस्य बृहत्वृत्तिप्रान्ते हेमचन्द्रसूरिभगवद्भिरुक्ताः ॥'

अवतरणाभ्यामेताभ्यां स्पष्टम् यत् श्रीहेमचन्द्राचार्यप्रोक्ताः सप्तपञ्चाशन्मिताः (५७) एव परिभाषाः न्याया वा सन्ति ।

**(१०) मुग्धबोधपरिभाषाकारः**

श्रीबोपदेवविरचितमुग्धबोधव्याकरणेन सम्बद्धैका परिभाषावृत्तिरुपलभ्यते । तत्र व्याख्यातानां परिभाषाणां संग्राहकः कः ? इति न सम्यग् ज्ञायते ।

**(११) पद्मनाभदत्तः**

श्रीपद्मनाभदत्तेन स्वीयसुपद्मव्याकरणसम्बद्धस्य परिभाणापाठस्य प्रणयनं विहितम्, तदुपरि स्वोपज्ञा वृत्तिश्च प्रणीता । श्रीपद्मनाभदत्तेन वृत्तेरस्या अन्ते स्वविरचितानां प्रायेण सर्वेषामपि ग्रन्थानामुल्लेखो विहितः । ते श्लोका अत्र समुद्ध्रियन्ते—

'दिङ्मात्रं दर्शितं किन्तु सकलार्थविकशनम् ।
धर्याविधेयं धीराः श्रीपद्मनाभनिवेदितम् ॥
उक्तो व्याकरणादर्शः सुपद्मस्तस्य पञ्जिका ।
ततो हि बालबोधाय प्रयोगाणां च दीपिका ॥
उणादिवृत्तिरचिता तथा च धातुकौमुदी ।
तथैव यङ्लुको वृत्तिः परिभाषाः ततः परम् ॥......
गोपालचरितं नाम साहित्ये ग्रन्थरत्नकम् ।
आनन्दलहरीटीका माघे काव्ये विनिर्मिता ॥
छन्दोरत्नं छन्दसि च स्मृतावाचारचन्द्रिका ।
कोशे भूरिप्रयोगाख्यो रचिता ततयत्नतः ॥'

'इति श्रीमत्पद्मनाभदत्तकृता परिभाषावृत्तिः सम्पूर्णा ।

---

१. विजयलावण्यसूरि—सिद्धहेमशब्दानुशासन, भाग २, पृ० ३०९ ।

परिभाषावृत्तेरस्या एको हस्तलखो लन्दननगरस्य इण्डियाआफिससंग्रहे उपलभ्यते ।[1]

## ५. परिभाषापाठानां व्याख्यातारः

व्याडिप्रोक्तपरिभाषापाठस्योपरि केनचिदज्ञातनाम्ना वैयाकरणेनैका वृत्तिः प्रणीता । श्रीकाशीनाथ अभ्यङ्करमहोदयेन 'परिभाषासंग्रह' इत्याख्यग्रन्थारम्भे वृत्तिरियं प्रकाशिता । पाणिनीयपरिभाषापाठस्योपरि हरदत्तेन 'परिभाषाप्रकरण' इत्याख्यो ग्रन्थः प्रणीतः । अमरटीकासर्वस्वप्रणेत्रा सर्वानन्देन अमरकोशस्य ( २।८।६८ ) टीकायां कस्यचिद् अज्ञातपरिभाषावृत्तिकारस्याऽधोलिखितः पाठः समुद्धृतः—

'अकृतव्यूहाः पाणिनीयाः कृतमपि शास्त्रं निवर्तयन्ति । अत्र हि अकृतव्यूहा अगृहीतशास्त्रा इति परिभाषावृत्तिकारैरुक्तम् ।'

पुरुषोत्तमदेवेन परिभाषापाठस्यैका वृत्तिः प्रणीता, या 'लघुवृत्ति' 'ललितावृत्ति' नामभ्यां प्रसिद्धा । पुरुषोत्तमदेवेन ज्ञापकसमुच्चयाभिधस्य स्वग्रन्थस्यारम्भे वृत्तिरियं "वृद्धसम्मते"ति नाम्नाऽभिहिता । श्रीसीरदेवेन प्रणीतायाः परिभाषावृत्तिः किञ्चिद्वर्षपूर्वं प्रकाशिता । तस्याः नवीनं संस्करणं श्री पं० काशीनाथ अभ्यंकरमहोदयेन प्रकाशितम् । सीरदेवकृतपरिभाषावृत्तेस्तिस्रो व्याख्याः जाताः—श्रीमान् शर्मा नामाभिधेयविदुषा "विजया" नाम्नी व्याख्या प्रणीता । श्री रामभद्रदीक्षितेनैका व्याख्या प्रणीता । अडियार हस्तलेखसंग्रहे[2] अज्ञातकर्तृकः "परिभाषावृत्तिसंग्रह" नामा हस्तलेखो विद्यते । वृत्तिसंग्रहोऽयम् सीरदेवीयपरिभाषावृत्तेः संक्षेपरूपोऽस्ति ।

गोण्डल रसशाला औषधाश्रमस्य हस्तलेखसंग्रहे "परिभाषाविवरण" नामानौ द्वौ हस्तलेखौ स्तः । ययोर्लेखनकालः सं० १५८४ चैत्रशुक्ला एकादशी वर्तते । एकस्या अज्ञातकर्तृकपरिभाषावृत्तेर्हस्तलेखो मद्रासराजकीयहस्तलेखसंग्रहे वर्तते ।[3]

---

१. लन्दन इण्डिया आफिस सूचीपत्र भाग १, खण्ड २, ग्रन्थाङ्क ८९० ।

२. अडियार (मद्रास) हस्तलेख संग्रह, व्याकरण विभाग, संख्या ५०१ ।

३. द्र० मद्रास राजकीय हस्तलेख संग्रह सूचीपत्र, भाग ५, खण्ड १ ए, पृ० ६२७१, नं० ४२५८

श्रीनीलकण्ठवाजपेयिमहोदयेन परिभाषापाठस्यैका संक्षिप्ता वृत्तिः प्रणीता, या त्रिवेन्द्रम् नगरात् प्रकाशिता। श्री भीमनामाभिधेयवैयाकरणेन लिखितायाः परिभाषावृत्तेरेको हस्तलेखो जम्मूस्थरघुनाथमन्दिरपुस्तकालये विद्यते। तस्याः वृत्तेर्नाम 'परिभाषार्थमञ्जरी' इत्यस्ति। श्रीवैद्यनाथशास्त्रिमहोदयेन "परिभाषार्थसंग्रह" नामा परिभाषापाठस्य वृत्तिग्रन्थः प्रणीतः, यस्याऽनेके हस्तलेखाः विभिन्नेषु पुस्तकालयेषु सुरक्षिता विद्यन्ते। श्री स्वयंप्रकाशानन्दसरस्वतीमहोदयेन परिभाषार्थसंग्रहस्य 'चण्द्रिका' नाम्नी, श्री अप्पादीक्षितमहोदयेन 'सारबोधिनी' नाम्नी व्याख्या प्रणीता। श्री हरिभास्कर अग्निहोत्रिमहोदयेन परिभाषापाठस्य "परिभाषाभास्कर" नाम्नी व्याख्या प्रणीता। अस्या द्वौ हस्तलेखौ मद्रासराजकीयपुस्तकालये वर्तते। जम्मूस्थरघुनाथमन्दिरपुस्तकालयेऽप्यस्या एको हस्तलेखः सुरक्षितोऽस्ति। परिभाषापाठस्योपरि श्री अप्पासुधीनामाभिधेयविदुषा 'परिभाषारत्न' नामा वृत्तिग्रन्थः प्रणीतः, यो ग्रन्थः अडियारपुस्तकसंग्रहे विद्यते। श्री उदयशंकरभट्टमहोदयेन 'परिभाषाप्रदीपार्चि' नामा वृत्तिग्रन्थः प्रणीतः। अस्य हस्तलेखः काशीस्थसरस्वतोभवन[१] (सम्पूर्णानन्द संस्कृतविश्वविद्यालय) ग्रन्थालये अडियारसंग्रहे[२] चोपलभ्यते।

श्री नागेशभट्टेन 'परिभाषेन्दुशेखर' नामा ग्रन्थः प्रणीतः। ग्रन्थोऽयं नव्यव्याकरणपठयपाठनपरम्परायां प्रचलति। अस्याऽप्यनेकाः टीकाः जाताः। श्रीशेषाद्रिनाथसुधीनाम्ना वैयाकरणेन 'परिभाषाभास्कर' नाम्नी परिभाषावृत्तिः प्रणीता, या श्रीकृष्णमाचार्यमहोदयेन सन् १९०२ ईशवीये प्रकाशिता। श्रीरामप्रसादद्विवेदनाभिधेयविदुषा 'सार्थपरिभाषापाठ' नाम्नी स्वकृतपरिभाषापाठस्य लघ्वी वृत्तिः प्रणीता। काशीतः इयं सन् १९७३ ईशवीये प्रकाशिता। श्रीगोविन्दाचार्य नामाभिधेयविदुषा 'परिभाषार्थप्रदीप' नामा ग्रन्थः प्रणीतः, यस्य हस्तलेखः सम्पूर्णानन्दसंस्कृतविश्वविद्यालस्य सरस्वतीभवनसंग्रहे विद्यते।

---

१. काशी सरस्वती भवन पुराना सूचीपत्र, संग्रह सं० १३, वेष्टन संख्या १३॥
२. अडियार हस्तलेख संग्रह व्याकरण विभाग सूचीपत्र, पृ० ४७६।

कातन्त्रपरिभाषापाठस्य दुर्गसिंहकृता या वृत्तेर्हस्तलेखः लन्दननगरस्य इण्डिया आफिसपुस्तकालये वर्तते। (द्र० सूचीपत्रम्, भागः १, खन्डः २, सं० ७७२) भात्रमिश्रनामाभिधेयविदुषा कातन्त्रपरिभाषापाठस्य वृत्तिः प्रणीता। एकाऽन्याऽपि दुर्गसिंहप्राक्तनी कातन्त्रपरिभाषावृत्तिरासीदित्यप्यनुमीयते विद्वद्भिः।

श्रीरामचन्द्रविद्याभूषणनामाभिधेयविदुषा मुग्धबोधसम्बद्धपरिभाषाणां वृत्तिः प्रणीता। श्रीपद्मनाभदत्तेन सुपद्म-व्याकरणसम्बद्धपरिभाषापाठस्योपरि परिभाषा-वृत्तिः प्रणीता। श्रीपद्मनाभप्रणीतायाः परिभाषावृत्तेः श्रीरामनाथसिद्धान्तमहोदयेन टीका प्रणीता, यस्या हस्तलेखः म० म० हरप्रसादशास्त्रिसम्पादितायां बंगीय सरकार द्वारा प्रकाशितायां हस्तलेखसूच्यां (भागे १ पृ० २२०, ग्रन्थाङ्के २२३) निर्दिष्टोऽस्ति। श्री धर्मसूरिनामाभिधेयविदुषा 'परिभाषार्थप्रकाशिका' नामा ग्रन्थः प्रणीतः, यस्याः हस्तलेखः अडियारग्रन्थसंग्रहे विद्यते। (द्र० सूचीपत्रम्, व्याकरण-विभागः, ग्रन्थाङ्कः ४८१)

॥ इति संस्कृतव्याकरणशास्त्रैतिह्यविमर्शे पभिाषापाठप्रवक्तृव्याख्यातृवर्णनं नाम अष्टादशोऽध्यायः ॥

●

## अथ एकोनविंशोऽध्यायः

# फिट्सूत्रप्रवक्तृव्याख्यातृवर्णनम्

### १. फिट्सूत्रलक्षणम्, तत्प्रयोजनानि च

पाणिनीयेषु वैयाकरणेषु समादृतः स्वरशास्त्रविषयप्रतिपादको लघुग्रन्थः 'फिट्सूत्र' नाम्ना सुप्रसिद्धोऽस्ति। प्राचीनकाले संस्कृतभाषायाः सर्वेऽपि तस्मिन् काले समेषामपि शब्दानां स्वरपरिज्ञानं प्रकृतिप्रत्ययविभागानुसारं सम्पद्यतेस्म। शब्दाः यौगिकत्वेन स्वीक्रियन्ते स्म। कालान्तरे शब्दा रूढ-यौगिकभेदाद् द्विधा विभक्ताः। तदा ये आचार्याः नामशब्दानां रूढत्वं न स्वीकुर्वन्ति स्म, तन्मते तादृशशब्दानां स्वरव्यवस्था औणादिकप्रकृतिप्रत्ययद्वारेण सम्पद्यते स्म; किन्तु येषां मते औणादिकाः शब्दाः रुढा अर्थात् अव्युत्पन्नाः, तेषां मते अखण्डशब्दानां स्वरज्ञानाय कस्यचिदेतादृशस्य शास्त्रस्याऽऽवश्यकता भवति, यत् प्रकृतिप्रत्ययविभागमन्तरेणैव स्वरपरिज्ञानं कारयेत्। तथा चोक्तम् श्रीश्वेतवनवासिना—

"अव्युत्पत्तिपक्षे[१] तु लघावन्ते द्वयोश्च बह्वषो गुरुः' इति मध्योदात्तः। अस्य फिट्सूत्रस्य अयमर्थः..........'

श्रीनागेशभट्टेनाऽपि महाभाष्यप्रदीपोद्योते उक्तम्—

'प्रकृतिप्रत्ययविभाग[२]शून्येष्वेव फिट्सूत्रप्रवृत्तेश्च।'

वस्तुतस्तु फिट्सूत्रमेवैतादृशं स्वरविधायकं शास्त्रमस्ति, यत् शब्दानां रूढत्वपक्ष (अव्युत्पन्नत्वपक्ष) कृते आवश्यकम् वर्तते।

पाणिनिराचार्यः स्वरप्रक्रियादृष्ट्या शाकटायननैरुक्तसम्प्रदायानुसारं सकलान्

---

१. श्वेतवनवासी—उणादिवृत्ति, १।६७, पृष्ठ ३१।

२. नागेशभट्ट—महाभाष्यप्रदीपोद्योत, १।२।४५, पृ० ५२ निर्णयसागर सं०।

नामशब्दान् यौगिकान् स्वीकरोति। अत एव तन्मतानुसारं समेषामपि शब्दानां स्वरपरिज्ञानमपि प्रकृतिप्रत्ययविभागेनैवोपपद्यते। परन्तु पाणिनीयशास्त्रव्याख्याकारयोराचार्यकात्यायनपतञ्जल्योर्मतं भिन्नमासीत्। तौ रूढशब्दानव्युत्पन्नान् स्वीकुरुतः स्म। अतः स्वरनिर्देशार्थमेतादृशस्य शास्त्रस्याऽऽवश्यकता जाता यत् शब्दानखण्डान् मत्वैव स्वरनिर्देशं विदध्यादिति। अत एव ताभ्यां यत्र-तत्र साक्षाद्रूपेण परोक्षरूपेण वा फिट्सूत्राण्याश्रितानि! ताभ्यां स्वमतस्य पाणिनिसम्मतत्वमपि प्रदर्शयितुं प्रयत्नो विहितः। तथा चोक्तम् वार्तिककृता कात्यायनेन—

'प्रातिपदिकविज्ञानाच्च[1] भगवतः पाणिनेराचार्यस्य सिद्धम्'।

वार्तिकमेतद् व्याचक्षाणेन भगवता पतञ्जलिनोक्तम्—

'प्रातिपदिकविज्ञानाच्च[2] भगवतः पाणिनेराचार्यस्य सिद्धम्। उणादयोऽव्युत्पन्नानि प्रातिपदिकानि।'

## २. फिट्सूत्राणाम्प्रवक्ता

पाणिनीयेषु फिट्सूत्राणाम्प्रवक्ता आचार्यः शन्तनुः स्वीक्रियते। अत एवैतानि फिट्सूत्राणि 'शान्तनव' सूत्रनाम्नाऽभिधीयन्ते। तथा चोक्तं हरदत्तेन—

'स पुनः शान्तनुप्रणीतः[3] फिष् इत्यादिकम्....... ।'

नागेशभट्टोऽपि बृहच्छब्देन्दुशेखरे लघुशब्देन्दुशेखरे च फिट्सूत्रव्याख्यान्ते हरदत्तमतमनुसरति। तथा हि—

'शन्तनुराचार्यः प्रणेतेति द्वारादीनां चेति सूत्रे हरदत्तः।'

कस्तावदयं शन्तनुराचार्यः? कस्तावदस्य कालः? सर्वञ्चेदमन्धकारावृतमस्ति। श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयमतानुसारेण भीष्मपितामहस्य पिता राजर्षिः शन्तनुरेव फिट्सूत्राणाम्प्रवक्तृत्वेन स्वीकर्तुं शक्यते। वायुपुराणे (९९।२३७) मत्स्यपुराणे (५०।४२) चाऽयं 'विद्वान्' शब्देनाऽभिहितः। प्राचीनवाङ्मये पुराणेषु च 'विद्वान्' शब्दः मन्त्रद्रष्टुः कृते प्रयुज्यते।

---

१. कात्यायन—वार्तिक ७।१।२ ॥

२. पतञ्जलि—महाभाष्य, ७।१। आ० १।सू० २ ॥

३. हरदत्तः—पदमञ्जरी भाग २, पृ० ८०४ ॥

## ३. फिट्सूत्राणां प्रवचनकालः

अतः परं समुपलब्धप्रमाणविवेचनपूर्वकं फिट्सूत्राणां प्रवचनकालो विचार्यते—

१. व्याकरणमहाभाष्ये अनेकान्येतादृशानि स्थलानि सन्ति, येषामवलोकनेन ज्ञायते यत् फिट्सूत्राणि पतञ्जलेः पूर्ववर्तीनि सन्ति। तथा हि—

"क—प्रत्ययस्वरस्यावकाशो[1] यत्रानुदात्ता प्रकृतिः—समत्वं सिमत्वम्॥

अत्र भाष्यकारेण 'सम' 'सिम' प्रातिपदिकयोः सर्वानुदात्तत्वस्य निर्देशो विहितः। सर्वानुदात्तत्वमिदं 'त्वसमसिमेत्यनुच्चानि' इति फिट्सूत्रेणैव सम्भाव्यते। पाणिनीयशास्त्रे एतयोः सर्वानुदात्तत्वविधायकं किमपि लक्षणं नास्ति।

"ख—यदि पूर्वपदप्रकृतिस्वरत्वं[2] समासान्तोदात्तत्वं च प्रियः, वाप्रियः इत्यत्रापि बाधेत॥"

अत्र भाष्यकारेण 'च' 'वा' इत्यनयोः शब्दयोरनुदात्तत्वं सङ्केतितम्। एतयोरनुदात्तत्वं 'चादयोऽनुदात्ताः' इत्यनेन फिट्सूत्रेणैव सम्भाव्यते।

"ग—प्रातिपदिकस्वरस्याऽ[3]वकाशः—आम्रः, शाला॥"

अत्र पतञ्जलिना फिट्सूत्रेषु प्रथमं सामान्यान्तोदात्तत्वविधायकं 'फिषः' इति सूत्रं सङ्केतितम्।

२. वार्तिककारात् कात्यायनादपि फिट्सूत्राणि पूर्ववर्तीनि सन्ति। तथा चोक्तम् वार्तिककृता—

'प्रकृतिप्रत्यययोः स्वरस्य[4] सावकाशत्वादसिद्धिः॥'

वार्तिकस्याऽस्य व्याख्यायां वार्तिककारसङ्केतितस्य प्रत्ययस्वरस्य सावकाशत्वं प्रदर्शयितुं भाष्यकृतोक्तम्—

"प्रत्ययस्वरस्याऽकाशो[5] यत्रानुदात्ता प्रकृतिः—समत्वम्, सिमत्वम्॥"

---

१. पतञ्जलि—व्याकरणमहाभाष्यम्, ६।१।१५८॥

२. तदेव, ६।२।१॥

३. तदेव, ६।१।९१॥

४. कात्यायन-वार्तिक ६।१।१५८॥

५. पतञ्जलि—व्याकरणमहाभाष्यम् ६।१।१५८॥

अत्र सम-सिमशब्दौ सर्वानुदात्तौ मत्वैव वार्तिककारेण प्रत्ययस्वरस्य सावकाशत्वमुक्तम्। सम-सिमशब्दयोः सर्वानुदात्तत्वं 'त्वसमसिमेत्यनुच्चानि' इति फिट्सूत्रेणैव सम्भाव्यते। अतः स्पष्टं यदुक्तवार्तिकप्रवचनकाले वार्तिककारस्य चेतसि 'त्वसमसिमेत्यनुच्चानि' इति सूत्रमवश्यमासीत्। अतः फिट्सूत्राणि वार्तिककारात् कात्यायनादपि पूर्ववर्तीनीति स्पष्टतया सिध्यति।

३. फिट्सूत्राणि पाणिनेः पूर्ववर्तीनि। तथा चोक्तमाचार्येण चन्द्रगोमिना—

"एष प्रत्याहारः पूर्वव्याकरणेष्वपि स्थित एव। अयं तु विशेषः—ऐऔष् यदासीत् तद् ऐऔच् इति कृतम्। तथा हि—लघावन्ते द्वयोश्च बह्वषो गुरुः (फिट् २।९) तृणधान्यानां च द्व्यषाम् (फिट् २।४) इति पठ्यते॥"

चन्द्राचार्यस्याऽनेन निर्देशेन स्पष्टम् यत् पाणिनीयस्य 'अच्' प्रत्याहारस्य स्थाने 'अष्' प्रत्याहारप्रयोक्ता फिट्सूत्रप्रवक्ता पाणिनेः पूर्ववर्ती वर्तते।

४. फिट्सूत्राणि आपिशलेरपि पूर्ववर्तीनि। आपिशलव्याकरणेऽपि पाणिनि-ऐऔच्' सूत्रम् 'अच्' प्रत्याहारश्च निर्दिष्टावास्ताम्। आपिशलव्याकरणस्य पाणिनीयव्याकरणात् पूर्ववर्तित्वं सिद्धमेव। अतः 'अष्' प्रत्याहारनिर्देशकानि फिट्सूत्राणि आपशलेः पूर्ववर्तीन्येवेति स्पष्टं सिध्यति।

एभिः प्रमाणैः सिद्धम् यत् फिट्सूत्राणां प्रवचनकालो वैक्रमाब्दात् निश्चितरूपेण ३१०० वर्षेभ्यः पूर्वमस्ति। अस्यामवस्थायां राजर्षिः शन्तुरेव फिट्सूत्रप्रवक्तेति स्वीकर्तुं युक्तम्।

## ४. नामकरणकारणम्

चतुष्पादात्मिकानि खलु शान्तनवसूत्राणि। एतेषाम्प्रथमं सूत्रम् 'फिष्' इत्यस्ति। तथा च पाणिनीयशास्त्रे येषामर्थवतां शब्दानां प्रातिपदिकसंज्ञा भवति, तेषामेव शान्तनवतन्त्रे 'फिष्' संज्ञा आसीत्। 'फिष्' इत्यस्यैव प्रथमैकवचने पूर्वपदे च 'फिट्' इति रूपम्भवति। अत एव शान्तनवसूत्राणीमानि 'फिट् सूत्र' नाम्नाऽभिधीयन्ते।

## ५. बृहत्तन्त्रस्याङ्गभूतानि फिट्सूत्राणि

सम्प्रति यानि समुपलभ्यन्ते चतुष्पादात्मकानि फिट्सूत्राणि, न तानि सर्वथा स्वतन्त्राणि, किन्त्वेतानि कस्यचिद् बृहत्तन्त्रस्याङ्गभूतानीति वैयाकरणानां मतम्। यत्र यत्र प्रक्रियादिष्वेतेषामुपयोगो विधीयते, तत्र तत्रैतेषां सङ्केतः 'फिष्' इत्यनेनैव सम्भवति। यथा—फिषोऽन्त उदात्त इति। तत्र कानिचित् प्रमाणानि पुरत उपस्थाप्यन्ते—

१. फिट्सूत्रेष्वनेका एतादृश्यः संज्ञाः प्रयुक्ताः, यासां साङ्केतिकार्थप्रतिपादकानि संज्ञासूत्राण्येतेषूपलब्धसूत्रेषु न सन्ति। अप्रसिद्धकृत्रिमसंज्ञाप्रयोगात् पूर्वं तत्सम्बद्धनिर्देशकसूत्राणामावश्यकता भवति। अप्रसिद्धाः संज्ञाः—फिष् (सूत्रम् १) —प्रातिपदिकम्, नप् ( सूत्रम् २६, ६१ )—नपुंसकम्, यमन्वा ( सूत्र० ४१ )—वृद्धमित्यादयः।

२. फिट्सूत्रेष्वनेकेषां प्रत्याहाराणामुल्लेख उपलभ्यते। प्रत्याहारेभ्यो गृहीतार्थपरिज्ञानाऽऽपिशलपाणिनीयशास्त्रवत् प्रत्याहारसूत्राणां निर्देश आवश्यकः। तद् विना तत्तत्प्रत्याहारेभ्यो गृह्यमाणवर्णानां परिज्ञानं कथमपि न भवितुमर्हति। यथा—अष् ( सूत्रम् २७, ४२, ४९ ) खय् ( सूत्रम् ३१ ) इत्यादयः।

३. फिट्सूत्राणामेकस्याः वृत्तेर्हस्तलेखः अडियार ( मद्रास ) हस्तलेखसंग्रहे विद्यते।[1] तत्र प्रथमसूत्रम् फिष् इत्येवाऽस्ति, सूत्रस्याऽस्य च वृत्तेरन्ते लिखितम्—'स्वरविधौ अन्त उदात्त इति प्रक्रान्तम्।' प्रायेणैतादृश एव पाठो जर्मनमुद्रितायां फिट्सूत्रवृत्तावप्यस्ति। पाठेभ्य एतेभ्य इदं ज्ञायते यदयं सूत्रपाठः कस्यचिद् बृहत्तन्त्रस्याङ्गभूतः। तस्मिन् बृहत्तन्त्रे एतेभ्यः सूत्रेभ्यः पूर्वं अन्तोदात्तप्रकरणं विद्यमानमासीत्। अतोऽत्रापि 'अन्त' 'उदात्त' पदे अनुवर्तेते। अत एतेषां फिट्सूत्राणां प्रथमं सूत्रं केवलं 'फिष्' इत्येवाऽस्ति। 'फिषोऽन्त उदात्तः' इत्येषो वर्तमानः पाठः अशास्त्रीयः, अनुवृत्त्यंशं संयोज्य विनिर्मितः, 'फिष्' पदस्य 'फिषः' इति षष्ठ्यन्तं रूपं च पाणिनीयशास्त्रानुसारं निर्मितम्।

---

१. अडियार (मद्रास) हस्तलेख संग्रह, सूचीपत्र, व्याकरण विभाग, ग्रन्थाङ्क ४००।

४. पूर्वंनिर्दिष्टायां हस्तलिखितवृत्तौ शान्तनवतन्त्रस्य फिष् संज्ञाविधायकं सूत्र-द्वयमुद्धृतम्। तथा हि—

'शान्तनवाचार्यः फिष् इति प्रातिपदिकसंज्ञां कृतवान्—अर्थवदधातुर-प्रत्ययः फिष्, कृत्तद्धितसमासाश्च इति॥'

५. आचार्येण चन्द्रगोमिना स्ववृत्तौ शान्तनवतन्त्रस्यैकं प्रत्याहारसूत्रं समुद्धृतम्, तत्प्रत्याहारप्रयोगप्रदर्शनार्थं फिट्सूत्रद्वयस्य निर्देशो विहितः। तथा चोक्तम्—

'एष प्रत्याहारः पूर्वव्याकरणेष्वपि स्थित एव। अयं तु विशेषः—ऐऔष् इति यदासीत् तद् ऐऔच् इति कृतम्। तथा हि लघावन्ते द्वयोश्च बह्वषो गुरुः, तृणधान्यानां च द्व्यषाम् (फिट्सूत्र) इति पठ्यते।'

६. न्यासकारेण श्रीजिनेन्द्रबुद्धिपादेनोक्तम्[1]—

'त्वसमसिमेत्यनुच्चानि इति सर्वादिष्वेव पठ्यन्ते।'

अत्र 'त्वसमसिमेत्यनुच्चानि' इति सूत्रस्य पाठः सर्वादिगणे स्वीक्रियते। पाणिनेः सर्वादिगणे उक्तं सूत्रं पठितं नास्ति। उक्तं सूत्रं शान्तनवीयफिट्सूत्रेषूप-लभ्यते। अनेन प्रतीयते तत् सूत्रमिदं शान्तनवीयसर्वादिगणे, फिट्स्वरप्रकरणे चापि पठितमासीत्।

७. आचार्येण शन्तनुना प्रोक्तानामुणादि-लिङ्गानुशासनसूत्राणामुल्लेखः पूर्वमेव विहितः। अतः येनाऽऽचार्येण उणादिपाठ-लिङ्गानुशासनप्रवचनं विहितम्, तेन व्याकरणरूपेण केवलमेतादृशः (फिट्सूत्ररूपो) लघुग्रन्थ एव प्रणीतः स्यादिति न कदापि बुद्धिगम्यो भवितुमर्हति।

## ६. फिट्सूत्राणां व्याख्यातारः

सम्प्रति फिट्सूत्राणां यावत्यो वृत्तयः समुपलभ्यन्ते, तास्वनेकेषु सूत्रेषु पाठभेद उपलभ्यते। श्रीनागेशभट्टेन लघुशब्देन्दुशेखरे बृहच्छब्देन्दुशेखरे चाऽनेकेषां पाठ-भेदानां निर्देशो विहितः।

---

१. जिनेन्द्रबुद्धि–न्यास, १।२।३०, भाग १, पृष्ठ १७०॥

वृत्तिकारेषु बहूनां नामान्यज्ञातानि। प्रक्रियाकौमुद्याः स्वरप्रकरणे श्रीविट्ठलाचार्येण फिट्सूत्राणां संक्षिप्ता व्याख्या विहिता। श्रीभट्टोजिदीक्षितेन फिट्सूत्राणां द्वे व्याख्ये प्रणीते। तत्र प्रथमा शब्दकौस्तुभे प्रथमाध्यायद्वितीयपादस्य स्वरप्रकरणे, अपरा च सिद्धान्तकौमुद्याः स्वरप्रक्रियायाम्। श्रीजयकृष्णेन सिद्धान्तकौमुद्याः स्वरवैदिकप्रकरणव्याख्यान्तर्गते फिट्सूत्राणां भट्टोजिदीक्षितकृता वृत्तिर्व्याख्याता। श्री नागेशभट्टेन लघुशब्देन्दुशेखरे बृहच्छब्देन्दुशेखरे च सिद्धान्तकौमुदीस्थफिट्सूत्रवृत्तेर्व्याख्या विहिता। श्रीनिवासयज्वा महोदयेन पाणिनीयशब्दानुशासनस्य स्वरसूत्राणां 'स्वरसिद्धान्तचन्द्रिका' नाम्नी मनोहरा विशदा च व्याख्या प्रणीता। तत्रैव तेन फिट्सूत्राणामपि व्याख्या विहिता।

॥ इति संस्कृतव्याकरणशास्त्रेतिह्यविमर्शे फिट्सूत्रप्रवक्तृव्याख्यातृवर्णनं नामैकोनविंशोऽध्यायः ॥

•

अथ विंशोऽध्यायः

# प्रातिशाख्यप्रवक्तृव्याख्यातृवर्णनम्

## १. प्रातिशाख्यस्वरूपम्

प्रातिशाख्यानां कृते प्राचीनग्रन्थेषु, 'पार्षद' शब्दो व्यवह्रियते । तथाहि—

'पदप्रकृतीनि[1] सर्वचरणानां पार्षदानि ।'

व्याकरणमहाभाष्ये 'परिषद्' शब्दस्याऽपि प्रयोग उपलभ्यते । तथाहि—

सर्ववेदपारिषदं[2] हीदं शास्त्रम् ।'

'शाखां शाखां प्रतिशाखम्, प्रतिशाखेषु भवं प्रातिशाख्यम्' इति व्युत्पत्त्यनुसारेण यस्मिन् ग्रन्थे वेदस्यैकैकस्याः शाखायाः नियमानां वर्णनं स्यात्, स ग्रन्थ 'प्रतिशाख्य' नाम्नाऽभिधीयते । परन्तु प्रातिशाख्यानामध्ययनेन ज्ञायते यत् तेषु कस्याश्चिदेकस्या एव शाखाया नियमानां निर्देशो नास्ति, अपित्वेतेष्वेकैकस्य चरणस्य सर्वासां शाखानां नियमानां सामान्यरूपेणोल्लेखो विहितः । यास्काचार्येणाऽप्युक्तम्—

'पदप्रकृतीनि[3] सर्वचरणानां पार्षदानि ।

अत्र यास्केनाऽपि पार्षदां सम्बन्धः चरणैः सह प्रदर्शितः, न तु प्रतिशाखेन सह । भट्टकुमारिलोऽपि प्रातिशाख्यानि चरणैः सहाऽभिसम्बद्धानि स्वीकरोति । तेनोक्तम्—

'धर्मशास्त्राणां गृह्यग्रन्थानां च प्रातिशाख्यलक्षणवत् प्रतिचरणं पाठव्यवस्थोपलभ्यते ।'

---

१. यास्क–निरुक्तम् १।१७॥

२. पतञ्जलि–व्याकरणमहाभाष्यम्, ६।३।१४॥

३. यास्क–निरुक्तम् १।१७॥

प्रतिज्ञापरिशिष्टटीकायां श्रीमताऽनन्तदेवेनोक्तम्—

'प्रतिपञ्चदशशाखायां[1] भिन्नानि प्रातिशाख्यानि नोपदिष्टानि; किन्तु श्रौतस्मार्तसूत्रवत् प्रातिशाख्यसूत्रमपि पञ्चदशशाखासाधारणं समाम्नातम्॥'

एभिरुद्धरणैः स्पष्टम् यत् प्रातिशाख्यानां सम्बन्धः शाखाभिः सह नास्ति, अपितु, वेदस्य तत्तच्चरणैः सहैवाऽस्ति। यास्काचार्यस्य मतानुसारेण प्रातिशाख्यानि पदप्रकृतीनि। अर्थात् प्रातिशाख्येषु पदानि प्रकृतित्वेन मत्वा संहितायां जायमानानां विपर्ययानां वर्णनम् विधीयते। प्रातिशाख्यानामवलोकनेन यास्काचार्यमतस्य युक्तत्वम्प्रतीयते। परन्तु प्रातिशाख्येषु पदेषु संहिताकारणेन जायमानविकारवर्णनमतिरिच्य शिक्षायाः ( वर्णोच्चारणविद्याया ) अपि सूक्ष्मं विवेचनमुपलभ्यते।

श्रीनागेशभट्टेन महाभाष्यप्रदीपोद्योते प्रातिशाख्यमित्येषः छन्दः शास्त्रस्यार्थो विहितः। ऋक्प्रातिशाख्ये शिक्षायाः विषयोऽन्यप्रातिशाख्यापेक्षयाऽतिविस्तृतोऽस्ति। सममेवाऽत्र वैदिकछन्दःशास्त्रस्याऽपि सविस्तरं वर्णनमुपलभ्यते। सामप्रातिशाख्यम् 'फुल्लसूत्र' 'पुष्पसूत्र' इत्यनेन वा नाम्ना विख्यातमस्ति। प्रातिशाख्यमिदमन्येभ्यः प्रातिशाख्येभ्यो विलक्षणमस्ति। अस्मिन् सामगाने जायमानानां वर्णविकाराणां स्तोमानां वा निर्देशोऽस्ति।

पौरस्त्यैः पाश्चात्यैश्च विद्वद्भिः स्वीकृतम् यत् प्रतिशाख्यानां सम्बन्ध ऐन्द्रसम्प्रदायेन सह वर्तत इति। अस्य सम्प्रदायस्य कातन्त्रीयाः काश्चित् संज्ञाः प्रातिशाख्येषु सुलभाः सन्ति। अतः प्रातिशाख्यानि ऐन्द्रसम्प्रदायसम्बद्धानीत्येव सुवचमिति ये कथयन्ति तेषां मनांसि मूषिकाञ्जलिवत् सुपूराणीति वक्तुं शक्यते सुधीभिः।

## २. चरणशाखाभेदः

चरणशब्देन ताः सर्वाः शाखा अवबुध्यन्ते, याः कस्याऽप्येकस्याः संहितायाः विभिन्नानामाचार्याणां प्रवचनोत्थपाठभेदादवान्तरविभागेषु विभक्ताः। यथा वाजसनेययाज्ञवल्क्यप्रोक्ताया एकस्याः मूलवाजसनेयिसंहितायाः माध्यन्दिनि-कण्व-गाल-

१. अनन्तदेव–प्रतिज्ञापरिशिष्ट ( प्रातिशाख्यसम्बद्ध ) २।१॥

वप्रभृतिभिराचार्यैर्विभिन्नरूपेण प्रोक्ताः सर्वाः संहिताः 'वाजसनेय' इत्याख्येन सामान्यनाम्ना व्यवह्रियन्ते। 'वाजसनेय' मिति नाम तासां सर्वासामपि चरणरूपप्रतिष्ठायाः ( स्थितेः ) स्थानमस्ति नाम्नाऽनेन ज्ञायते यत् माध्यन्दिनी- काण्वी-गालवी-प्रभृतिशाखानां मूला स्थितिः वाजसनेययाज्ञवल्क्यस्य प्रवचनमाश्रिताऽस्ति।

प्राचीनकाले चरणेऽर्थे 'प्रतिशाखा' शब्दो व्यवह्रियते स्म, शाखाकृते च 'अवान्तरशाखा' शब्दः प्रयुज्यते स्म। तथा चोक्तम् विष्णुपुराणे—

'इत्येताः प्रतिशाखाभ्[1]योऽप्यनुशाखा द्विजोत्तम॥'

विष्णुपुराणस्य व्याख्यात्रा श्रीधरेण 'अनुशाखा' शब्दं व्याचक्षाणेनोक्तम्—

'अनुशाखा अवान्तरशाखाः।'

एभिः प्रमाणैः स्पष्टम् यत् चरणरूपमूलसंहितायै 'प्रतिशाखा' पदम् तदवान्तरशाखाकृते च 'अनुशाखा' शब्दः प्रयुज्यते। एवम्प्रकारेण 'प्रतिशाखा' शब्दः 'शाखाप्रतिगता शाखा प्रतिशाखा' इत्यर्थं बोधयिष्यति।

प्रतिज्ञासूत्रव्याख्याता श्रीअनन्तदेवयाज्ञिकः कात्यायनप्रातिशाख्यं वाजसनेयचरणस्य पञ्चदशशाखानां प्रातिशाख्यं स्वीकरोति। सः प्रतिशाखा शब्दस्योक्तमर्थं न सम्यगवगच्छति। तेनोक्तम्—

'प्रतिशाखासु भवं प्रातिशाख्यमिति[2] सम्भवाभिप्रायेण बहुवचनान्तयोगेनापि निर्वाह इत्यास्तां तावत्॥'

यतो हि अवान्तरशाखानां मूला शखैव शाखान्तरभावम्प्राप्ता सती 'प्रतिशाखा' शब्देन व्यवह्रियते। अतः प्रातिशाख्यमपि 'प्रतिशाखा' शाब्दमभिसम्बध्यते। विवेचनयाऽनया स्पष्टम् यत् प्रातिशाख्यानां सम्बन्धः प्रतिशाखाभिः अर्थात् चरणानां समस्ताभिरवान्तरशाखाभिः सहाऽस्ति।

## ३. प्रातिशाख्यनामानि

प्राचीनकाले प्रातिशाख्यसदृशा अनेके वैदिकलक्षणग्रन्थाः विद्यमाना आसन्। सम्प्रत्युपलभ्यमानेषु प्रातिशाख्येषु प्रायेणैकोनषष्टिमितानां वैदिकलक्षणशास्त्रप्रवक्तृ-

---

१. विष्णुपुराण अंश ३, अ० ४, श्लोकः २५॥

२. अनन्तदेव–प्रतिज्ञासूत्र, २।१। काशी सं० पृ० ४१५॥

णामाचार्याणां नामान्युपलभ्यन्ते। सम्प्रति ते सर्वे कालकवलिताः सञ्जाताः। सम्प्रत्यधोलिखिताः प्रातिशाख्यग्रन्था एव ज्ञायन्ते—

१. ऋक्प्रातिशाख्यम्, २. आश्वलायनप्रातिशाख्यम्, ३. बाष्कलप्रातिशाख्यम्, ४. शांखायनप्रातिशाख्यम्, ५. वाजसनेयप्रातिशाख्यम्, ६. तैत्तिरीयप्रातिशाख्यम्, ७. मैत्रायणीयप्रातिशाख्यम्, ८. चारायणीयप्रातिशाख्यम्, ९. सामप्रातिशाख्यम् (पुष्पसूत्रम्, फुल्लसूत्रम् वा), १०. अथर्वप्रातिशाख्यञ्चेति।

## ४. प्रातिशाख्यसदृशलक्षणग्रन्थाः

प्रातिशाख्यान्यतिरिच्याऽधोलिखिताः प्रातिशाख्यसदृशा लक्षणग्रन्थाः प्राप्यन्ते—

१. अथर्वचतुरध्यायी, २. प्रतिज्ञासूत्रम्, ३. भाषिकसूत्रम्, ४. ऋक्तन्त्रम् ५. लघुऋक्तन्त्रम्, ६. सामतन्त्रम्, ७. अक्षरतन्त्रम्, ८. छन्दोगव्याकरणञ्च।

## ५. प्रातिशाख्यानाम्प्रवक्तारः

### (क) ऋक्प्रातिशाख्यप्रवक्ता शौनकः

ऋग्वेदस्य पञ्चचरणानां पञ्चसु प्रातिशाख्येषु सम्प्रत्येकमेव प्रातिशाख्यमुपलभ्यते। अस्य सम्बन्धा शाकलचरणस्य संहिताभिः सहाऽस्ति। अन्यानि आश्वलायन-बाष्कल-शांखायनप्रातिशाख्यानि केवलं नाममात्रेणैव विज्ञातानि सन्ति। यतो हि सम्प्रति ऋग्वेदसम्बन्ध्येकमेव प्रातिशाख्यमुपलभ्यते, अत एवैतदर्थं लोके सामान्यरूपेण 'ऋक्प्रात्रिशख्य' शब्द एव व्यवह्रियते।

आचार्येण शौनकेन ऋग्वेदस्य शाकलचरणस्य शाखाभिः सम्बद्धस्यैकस्य प्रातिशाख्यस्य प्रवचनं विहितम्। सम्प्रतीदं 'ऋक्प्रातिशाख्य' नाम्ना 'ऋक्पार्षद' नाम्ना वा प्रसिद्धमस्ति। ऋक्प्रातिशाख्यस्य प्रवक्ता गृहपतिः—कुलपतिः शौनकः 'बह्वृचसिंह' नाम्नाऽभिधीयते। प्रातिशाख्यस्याऽस्य शौनकप्रवक्तृत्वमस्यान्तरङ्गपरिक्षयाऽपि स्पष्टम्। पार्षदस्याऽस्य प्राचीनेन वृत्तिकारेण स्ववृत्तेरारम्भे लिखितम्—

'तस्मादादौ तावच्छास्त्रावतार उच्यते—

शौनको गृहपतिर्वै नैमिषीयैस्तु दीक्षितैः।
दीक्षासु चोदितः प्राह सत्रे तु द्वादशाहिके॥

इति शास्त्रावतारं स्मरन्ति ।'

विष्णुमित्रस्योपर्युक्तशास्त्रावतारनिर्देशेनेदं स्पष्टम् यदस्य पार्षदस्य प्रवचनस्येतिहासं पूर्वे व्याख्याकाराः परम्परया स्मरन्ति। अत इतिहासोऽयं परमप्रामाणिक इत्यत्र नास्ति कश्चन सन्देहलेशः । ऋक्प्रातिशाख्यप्रवचनकालो वैक्रमाब्दात् त्रिसहस्रवर्षपूर्वमिति श्रीपण्डितयुधिष्ठिरमीमांसकानाम्मतम् ।

प्रातिशाख्येऽस्मिन् अष्टादशपटलानि सन्ति । प्रतिपटलं छन्दोबद्धानि सूत्राणि सन्ति । पार्षदेऽस्मिन्नन्यपार्षदापेक्षया किञ्चिद् वैशिष्ट्यमस्ति । अन्येषु पार्षदेषु प्रायेण सन्ध्यादिनियमानां, पदपाठ-क्रमपाठनियमानाञ्चोल्लेखो दृश्यते, क्वचित् सामान्यरूपेण शिक्षाऽपि वर्ण्यते । किन्तु पार्षदेऽस्मिन् त्रयोदशचतुर्दशपटलयोर्विस्तरेण शिक्षायाः विषयो विवेचितः । षोडशतोऽष्टादशपटलं यावत् त्रिषु पटलेषु छन्दःशास्त्रमतिविस्तारेण विवेचितम् ।

शौनकेन ऋक्प्रातिशाख्यमतिरिच्य—अथर्व-शौनकसंहिता-अथर्व-प्रातिशाख्य-बृहद्देवता-दशानुक्रमणी-शौनकी शिक्षा-ज्योत्तिषशास्त्रचिकित्सा-शास्त्रप्रभृतयो ग्रन्थाः प्रणीताः ।

### (ख) आश्वलायनप्रातिशाख्यप्रवक्ता आश्वलायनः ।

ऋग्वेदस्य आश्वलायनशखाया एकं प्रातिशाख्यम् श्रीअनन्तकृतायां वाजसनेयप्रातिशाख्यटीकायां निर्दिष्टम् । तथा हि—

'नाप्याश्वलायनाचार्यादिकृतप्रातिशाख्यसिद्धत्वम् ।'

श्रीअनन्तस्योपर्युक्तपाठावलोकनेन ज्ञायते यदस्य प्रातिशाख्यस्य प्रवक्ता आश्वलायनाचचार्योऽस्ति । प्रातिशाख्यमिदं सम्प्रति न प्राप्यते, अस्याऽन्यत्र क्वचिदुल्लेखोऽपि न प्राप्यते ।

श्रीआश्वलायनाचार्येण संहिताब्राह्मण-पदपाठ-श्रौतसूत्र-गृह्यसूत्र-आश्वलायनानुक्रमणी प्रभृतयो ग्रन्था अपि प्रणीताः । आश्वलायनाचार्यस्य कालः वैक्रमाब्दात् त्रिसहस्रवर्षपूर्वमिति श्रीपं॰ युधिष्ठिरमीमांसकानाम्मतम् ।

### (ग) बाष्कलपार्षदप्रवक्ता

यद्यपि बाष्कलचरणस्य प्रातिशाख्यस्य क्वचित् प्रत्यक्षनिर्देशो न प्राप्यते किन्तु

शाँखायनश्रौतसूत्रस्य ( १२।१३।५ ) वरदत्तसुतस्य आनर्त्तीयभाष्यस्याऽधोलिखितेन वचनेन बाष्कलपार्षदस्यास्तित्वसम्भावना प्रतीयते—

'उपद्रुतो नाम सन्धिर्बाष्कलादीनां प्रसिद्धः। तस्योदाहरणम्।'

अत्र बाष्कलचरणस्य शाखासु निर्दिष्टस्य 'उपद्रुत' इत्याख्याया सन्धेरुल्लेखोऽस्ति। निश्चितरूपेणाऽस्याः सन्धेर्विधानं तत्प्रातिशाख्ये स्यादिति। एवमेव शाङ्खायनश्रौतसूत्रस्य ( १।२।५ ) भाष्येऽधोलिखितं वचनं द्रष्टव्यमस्ति—

'किन्तु बाष्कलानामप्रगृह्यः, तदर्थं वचनम्।'

एतदतिरिक्तमेतत्प्रातिशाख्यविषये न किञ्चिज्ज्ञायते।

## (घ) शाङ्खायनपार्षदप्रवक्ता

'अलवर' नगरस्य राजकीयसंग्रहे प्रातिशाख्यस्यैको हस्तलेखो[१] विद्यते। तस्यान्तेऽधोलिखितः पाठोऽस्ति—

'इति प्रातिशाख्येऽष्टादशं पटलम्। तृतीयोऽध्यायः। शांखायनशाखायां प्रातिशाख्यं समाप्तम्।'........

प्रातिशाख्यस्याऽस्याऽऽद्यन्तपाठेन प्रतीयते यदिदं शाकलपार्षदमस्ति।

## (ङ) शुक्लयजुर्वेदवाजसनेयप्रातिशाख्यप्रवक्ता कात्यायनः

शुक्लयजुर्वेदस्य वाजसनेयप्रातिशाख्यस्य प्रवक्ता वेदविद्याविक्षण आचार्यः कात्यायनोऽस्ति। प्रातिशाख्यमिदमनेकाभिर्व्याख्याभिः सह समुपलभ्यते।

प्रातिशाख्यस्याऽस्य प्रवक्ता आचार्यः कात्यायनो वाजसनेययाज्ञवल्क्यस्य पुत्रोऽस्ति। याज्ञवल्क्यस्य साक्षात्पुत्रत्वादस्य कात्यायनस्य कालो वैक्रमाब्दात् त्रिसहस्रवर्षपूर्वमस्ति।

आचार्येण कात्यायनेन पञ्चदशवाजसनेयशाखास्वन्यतमा कात्यायनी शाखा-कात्यायनशतपथब्राह्मणम्-कात्यायनश्रौतसूत्रम्-कात्यायनगृहसूत्रप्रभृतयोऽन्येऽपि ग्रन्थाः प्रणीताः।

---

१. द्र०—अलवर राजकीय संग्रह सूचीपत्र, ग्रन्थाङ्क १७, पाठनिर्देशक खण्ड पृ० ३ संख्या ४।

**(च) तैत्तिरीयप्रातिशाख्यकारः**

कृष्णयजुर्वेदस्य तैत्तिरीयचरणसम्बद्धमेकं प्रातिशाख्यमुपलभ्यते। प्रातिशाख्यमिदं 'तैत्तिरीयप्रातिशाख्य' नाम्ना सुप्रसिद्धमस्ति।

प्रातिशाख्यस्याऽस्य प्रवक्ता क आचार्य इति न ज्ञायते। श्रीहरदत्तकृतपदमञ्जरी (भाग २, पृ० १०३६) ग्रन्थावलोकनेन ज्ञायते यदिदं प्राजिशाख्यम् पाणिनेः प्राचीनमस्ति। श्रीपं० युधिष्ठिरमीमांसकमहोदयमानुसारेण सर्वाण्यपि प्रातिशाख्यानि पाणिनेः प्राचीनानि सन्ति।

**(छ) मैत्रायणीयप्रातिशाख्यकारः**

मैत्रायणीयचरणस्यैकं प्रातिशाख्यं सम्प्रत्यप्युपलभ्यते। प्रातिशाख्यस्याऽस्योल्लेखः श्रीपं० दामोदरसातवलेकरसम्पादितायाः मैत्रायणीयशाखायाः प्रस्तावनायां नासिकवासिना श्रीधरशास्त्रिवारेमहोदयेन विहितम्। तदवलोक्य श्रीपं० युधिष्ठिर मीमांसकमहोदयेन मैत्रायणीयप्रातिशाख्यविषये माननीयश्रीधरशास्त्रिवारे महोदयायैकं पत्रं लिखितम्। तत्प्रसङ्गे तेन दत्तमुत्तरमधोलिखितमस्ति—

भाद्र. कृ. गुरौ श्री नाशिकक्षेत्रतः

शके १८७०

सन्तु भूयांसि नमांसि। भावत्कं १२।९।४८ तनीनं कृपापत्रं समुपालभम्। आशयश्च विदितः। मैत्रायणीसंहिताप्रस्तावे 'आग्निवेश्यः ९।४, शांखायनः २।३।७, एवं क्वचित् द्वे संख्ये क्वचिच्च तिस्रः संख्याः निर्दिष्टाः सन्ति। सोऽयं संकेतः मैत्रायणीयप्रतिशाख्यस्य अध्यायकाण्डिकासूत्राणामनुक्रमप्रत्यायक इति ज्ञेयम्। मैत्रायणीयं प्रातिशाख्यं मत्सविधे नास्ति, मयाऽन्यत आनीतमासीत्। मूलमात्रमेव वर्तते। यदि तत्र भवताऽपेक्ष्यते मैत्रायणीयं प्रातिशाख्यं, तर्हि निम्नलिखितस्थलसंकेतेन पत्रव्यवहारं कृत्वा प्रयत्नो विधेयः—

श्री रा० रा० भाऊ साहेब तात्यासाहेब मुटे पञ्चवटी, नासिक अथवा श्री रा० रा० शंकर हरि जोशी अभोणकर, जि० नासिक, ता०कुलवण, पो० मु० अभोणे।

एतस्मिन् स्थानद्वये मैत्रायणीयं प्रातिशाख्यमस्ति। एते महाभागास्तच्छाखीया एव। तत एवानीतं मया, कार्यनिर्वाहोत्तरं प्रत्यर्पितं तेभ्यः। एवमेव कदाचित् स्मर्तव्योऽयं जनः। किमतोऽधिकमिति विज्ञप्तिः।

**भावत्कः**

श्रीधर अण्णाशास्त्री वारे

पत्रेणाऽनेन स्पष्टम् यत् पत्रोल्लिखिते स्थानद्वये मैत्रायणीयप्रातिशाख्यमस्ति। प्रातिशाख्यस्याऽस्य प्रवक्तुराचार्यस्य नाम न ज्ञायते। प्रातिशाख्येऽस्मिन् आत्रेय-बाल्मीकि-पौष्करसादि-प्लाक्षि-कौण्डिन्य-गौतम-सांकृत्य-उखय-काण्डमायन-अग्नि-वेश्य-प्लक्षायण-वात्सप्र-अग्निवेश्यायन-शांखायन-शैत्यायन-कौहलीयपुत्र-भारद्वाजप्रभृतीनां ऋषीणामुल्लेखो दृश्यते।

**(ज) चारायणीयप्रातिशाख्यकारः**

चारायणीयाचार्येण प्रोक्तं चारायणीयप्रातिशाख्यं सम्प्रति नोपलभ्यते। लौगाक्षिगृह्यसूत्रव्याख्यात्रा श्रीदेवपालेन कृच्छ्रशब्दं व्याचक्षाणेनोक्तम्—

'कृतस्य पापस्य[1] छ्दनं वा कृच्छ्रमिति निर्वचनम्। वर्णलोपश्चछान्दसत्वात् कृच्छ (? कृत) शब्दस्य। तथा च चारायणिसूत्रम्—'पुरुकृतेच्छच्छ्रयोः' इति पुरुशब्दः कृतशब्दश्च लुप्यते यथासंख्यं छे छ्रे परतः। पुरुच्छदनम् पुच्छम्, कृतस्य च्छदनं विनाशनं कृच्छ्रमिति।'

अनेनोद्धरणेन स्पष्टम् यत् चारायणिप्रोक्तः कश्चन लक्षणग्रन्थोऽवश्यमासीत् यत्र पुच्छ-कृच्छ्रशब्दयोः साधुत्वम्दर्शितम्। लक्षणग्रन्थोऽयं पार्षदरूप आसीत् व्याकरणरूपो वेति सम्यग् वक्तुं दुष्करम्।

चारायणीयशिक्षा काश्मीरेभ्य अवाप्ता। अस्या उल्लेखः श्रीकीलहार्नमहोदयेन 'इण्डिया एण्टीक्वेरी' इत्याख्ये ग्रन्थे जुलाई मासे सन् १८७६ ईशवीये विहितम्।

**(झ) सामप्रातिशाख्यप्रवक्ता**

सामवेदस्य प्रातिशाख्यम 'पुष्पसूत्र' नाम्ना 'फुल्लसूत्र' नाम्ना वा प्रसिद्धमस्ति। श्रीहरदत्तेनोक्तम्—

---

१. देवपाल—लौगाक्षिगृह्यसूत्रव्याख्या, कण्डिका ५, सूत्र १, भाग १, पृ० १०१, १०२॥

'सूत्रकारं वररुचिं वन्दे पाणिञ्च वेधसम् ।
फुल्लसूत्रविधानेन खण्डप्रपाठकानि च ॥
वन्दे वररुचिं नित्यमूहाब्धेः पारदृश्वनम् ।
पोतो विनिर्मितो येन फुल्लसूत्रशतैरलम् ॥'

अनेन प्रतीयते यत् फुल्लसूत्रस्य प्रवक्तासूत्रकारः वररुचिराचार्योऽस्ति । कस्तावदयं वररुचिरिति प्रश्नो विचारणीयोऽस्ति । परन्तु याज्ञवल्क्यपौत्रस्य कात्यायनस्य पुत्रः सूत्रकारो वररुचिरेव प्रातिशाख्यस्याऽस्य प्रवक्तेति सम्भाव्यते । धातुवृत्ति ( मैसूरसंस्करण ) सम्पादकः श्रीमहादेवशास्त्री भूमिकायां सामप्रातिशाख्यमापिशलिप्रोक्तं स्वीकरोति । किन्तु प्रामाणाभावान्न तन्मतं स्वीकर्तुं युज्यते ।

**(ञ) अथर्वपार्षदप्रवक्ता**

अथर्ववेदसम्बद्धौ द्वौ ग्रन्थावुपलभ्येते--एकम् प्रातिशाख्यम्, अपरश्च शौनकीयचतुरध्यायी, कौत्सव्याकरणं चेति । अथर्वप्रातिशाख्यस्याऽपि द्वौ पाठौ स्तः—श्री पं० विश्वबन्धुशास्त्रिसम्पादितः, डॉ० सूर्यकान्तसम्पादितश्च । तत्र प्रथमपाठो 'लघुपाठ' नाम्ना, द्वितीयपाठश्च 'बृहत्पाठ' नाम्ना व्यवह्रियते । अथर्वप्रातिशाख्यस्य प्रवक्ता क आचार्य इति वक्तुं दुष्करम्, उभयोः पाठयोरन्ते प्रवक्तुर्नामनिर्देशाभावात् । अथर्वप्रातिशाख्यम् पाणिनेः प्राचीनमस्ति ।

**(ट) अथर्वचतुरध्यायीप्रवक्ता**

अथर्वपार्षदसदृशोऽपरः ग्रन्थोऽस्ति, यः प्रायेण 'शौनकीयचतुरध्यायी'ति नाम्ना प्रसिद्धः । ग्रन्थोऽयं चतुर्ष्वध्यायेषु विभक्तः । ग्रन्थस्याऽस्य प्रवक्तुर्नाम सन्दिग्धमस्ति । श्री ह्विटनीमहोदयस्य हस्तलेखे शौनकस्य नामोल्लेखादयं ग्रन्थः 'शौकनीय' नाम्नाऽभिहितः । ग्वालियरनगरस्य श्री बालशास्त्रीगदरेमहोदयसंग्रहादवाप्ते अथर्वचतुरध्यायिग्रन्थस्य हस्तलेखे प्रत्यध्यायमन्तिमे भागे—

'इत्यथर्ववेदे कौत्सव्याकरणे चतुरध्यायिकायां.......'

इत्येषः पाठ उपलभ्यते । हस्तलेखोऽयमुज्जैननगरीय प्राचीनहस्तलेखपुस्तकालये उपलभ्यते । एतद्धस्तलेखविषये 'न्यू इण्डियन एण्टीक्वेरी' त्याख्यपत्रिकायाः १९३८ तमेशवीयस्य सितम्बरमासस्याङ्के प्रकाशितः श्री पं० सदाशिवकात्रेमहोदयस्य निबन्धो द्रष्टव्यः ।

'कौत्सव्याकरण' नाम्ना निर्दिष्टः एको हस्तलेखः वाराणसीस्थसम्पूर्णानन्द संस्कृतविश्वविद्यालयीयसरस्वतीभवनसंग्रहेऽप्यस्ति । तस्य संख्या २०८६ इत्यस्ति । अस्य प्रथमाध्यायप्रथमपादस्यान्ते ऽधोलिखितः पाठ उपलभ्यते--

'इत्यथर्ववेदे कौत्सव्याकरणे चतुरध्यायिकायां प्रथमः पादः'

श्रीपण्डित युधिष्ठिरमीमांसकमहोदयमतानुसारेण 'शौनकीयचतुरध्यायी'-व्याख्यग्रन्थस्य प्रवक्ता कौत्सोऽस्ति । अथर्ववेदस्य शौनकशाखया सम्बद्धत्वादयं ग्रन्थः 'शौनकीयविशेषणेन विशेष्यते ।

## (ठ) प्रतिज्ञासूत्रकारः

शुक्लयजुः सम्प्रदाये 'प्रतिज्ञासूत्र' नाम्ना द्वौ ग्रन्थौ प्रसिद्धौ । एकः कात्यायन प्रातिशाख्यमभिसम्बध्यते, अपरश्च कात्यायनश्रौतसूत्रम् । कात्यायनप्रातिशाख्य-श्रौतसूत्र सम्बद्धपरिशिष्टप्रवक्ताऽपि कात्यायन एव स्वीक्रियते । अतोऽस्य कालो वैक्रमाब्दात् त्रिसहस्रवर्षपूर्वमस्ति ।

कात्यायनप्रातिशाख्यसम्बद्धप्रतिज्ञासूत्रविषये व्याख्याकारेण श्रीअनन्तदेवेन लिखितम्—

'प्रातिशाख्यकथनानन्तरं चैतस्यावसरो यतस्तन्निरूपितकर्मनियुक्त-मन्त्रेषु स्वरसंस्कारनियमावश्यं भावतयाऽनुपदिष्ट स्वरसंस्थानसंस्कारा-कांक्षैतदर्थमयमारम्भः ।'

प्रतिज्ञासूत्रेऽस्मिन् तिस्रः कण्डिकाः सन्ति । प्रथमकण्डिकायां स्वरविशेषनियमानां वर्णनमस्ति । द्वितीयकण्डिकायां य-ज ष-ख-स्वरभक्तिप्रभृत्युच्चारण-विधानमस्ति । तृतीयकण्डिकायामयोगवाहानां विशिष्टोच्चारणस्य विधिरुक्ता ।

## (ड) भाषिकसूत्रकारः—

कात्यायनप्रातिशाख्यपरिशिष्टेषु 'भाषिकसूत्र' मपि परिगण्यते । तत्र प्राधान्येन शतपथब्राह्मणस्य स्वरसंचारविषयो विवेचितः । तत्र तिस्रः कण्डिकाः सन्ति ।

शतपथब्राह्मणस्य स्वरविधानेन सहाऽत्र लुप्तब्राह्मणानामपि विनष्टस्वरसम्प्रदायानां ब्राह्मणानाञ्च चर्चा वर्तते । तथा हि--

१. 'शतपथवत् ताण्डिभाल्लविनां ब्राह्मणस्वरः '।३।२५ ॥
२. मन्त्रस्वरवद् ब्राह्मणस्वरश्चरकाणाम् ॥३।२५ ॥
३. तेषां खाण्डिकेयौखेयानां चातु; स्वर्यमपि क्वचित् ॥३।२६ ॥
४. ततोऽन्येषां ब्राह्मणस्वरः ॥३।२७ ॥'

परिशिष्टेनाऽनेन स्वरविषयः सम्यक् प्रकाश्यते ।

## (ढ) ऋक्तन्त्रप्रवक्ता

सामवेदीयग्रन्थेषु 'ऋक्तन्त्र' नामा ग्रन्थः प्रसिद्धः । अत्र सामवेदस्य राणायनीय शाखायाः स्वरसन्धिनियमानां विधानमुपलभ्यते । ऋक्तन्त्रस्य कस्ताव-दाचार्यः प्रवक्तेति विषये विद्वत्सु मतभेदो दृश्यते । केचन शाकटायनं, केचन च औदव्रजि ऋक्तन्त्रप्रवक्तृरूपेण स्वीकुर्वन्ति । श्रीनागेशभट्टेनोक्तम्—

'ऋक्तन्त्रव्याकरणे शाकटायनोऽपि—इदमक्षरं छन्दो........ ।'

(लघुशब्देन्दुशेखरे, १ म भागे)

डॉ० सूर्यकान्त सम्पादित ऋक्तन्त्रस्यान्ते मुद्रितायां श्रीहरदत्तनामाभिधेय-विदुषा प्रणीतायां सामसर्वानुक्रमण्यामुक्तम्—

'ऋचां तन्त्रव्याकरणे पञ्चसंख्याप्रपाठकम् ।
शाकटायनदेवेन द्वात्रिंशद् खण्डकाः स्मृताः ॥'

श्रीभट्टोजिदीक्षितेन शब्दकौस्तुभे 'मुखनासिकावचनोऽनुनासिकः' सूत्रव्याख्याने लिखितम्—

'तथा च ऋक्तन्त्रव्याकरणस्य छान्दोग्यलक्षणस्य प्रणेता औदव्रजि-रप्यसूत्रयत्—अनन्त्यान्त्यसंयोगे मध्ये यमः पूर्वस्य गुण इति ।'

श्री पं० युधिष्ठिरमीमांसकमहोदयमतानुसारेण ऋक्तन्त्रस्य प्रवक्ता नारदीय-शिक्षायासुद्धृतप्राचीनौद्व्रजेराचार्याद् भिन्नः शाकटायनगोत्रजः द्वितीय औदव्रजिरा-चार्योऽस्ति । औद्व्रजेराचार्यस्य 'सामतन्त्र' नामाऽन्यः प्राचीनग्रन्थोऽप्युपलभ्यते ।

## (ण) लघुऋक्तन्त्रप्रवक्ता

ऋक्तन्त्रमाश्रित्य केनचिदाचार्येण 'लघुऋक्तन्त्र' इत्याख्यग्रन्थस्याऽपि प्रवचनं विहितमासीत् । अस्य प्रवक्तुर्नाम न ज्ञायते, किन्तु ग्रन्थोऽयं पाणिनेरुत्तर-वर्तीति स्पष्टमेव ।

### (त) सामतन्त्रप्रवक्ता

सामवेदसम्बद्धः 'सामतन्त्र' नामाभिध एको ग्रन्थ उपलभ्यते, यो मुद्रितः। कस्तावदाचार्यः सामतन्त्रस्य प्रवक्तेति विषये विद्वत्सु मतभेदोऽस्ति। श्रीहरदत्तेन सामसर्वानुक्रमण्यां लिखितम्—

'सामतन्त्रं प्रवक्ष्यामि सुखार्थं सामवेदिनाम्।
औदव्रजिकृतं सूक्ष्मं सामगानां सुखावहम्॥'

अर्थात् औदव्रजिराचार्यः सामतन्त्रस्य प्रवक्तेति। किन्तु श्री पं० सत्यव्रतसामश्रमिमहोदयेन अक्षरतन्त्रभूमिकायाम्—

'सामतन्त्रं तु गार्ग्येणेति वयमुपदिष्टाः प्रामाणिकैः।'

इत्युक्त्वा गार्ग्याचार्यः सामतन्त्रप्रवक्तृत्वेन स्वीकृतः। किन्तु श्री पं० युधिष्ठिरमीमांसकमहोदयमतानुसारमौदव्रजिराचार्य एव सामतन्त्रप्रवक्तेति। सामतन्त्रे सामगानानां योनिभूतऋचास्थाऽक्षरविकारविश्लेषाऽभ्यासविरामादिकर्मणां बिधानमस्ति।

### (थ) अक्षरतन्त्रप्रवक्ता

सामवेदसम्बद्धः 'अक्षरतन्त्र' नामधेयो लघुकायो ग्रन्थ उपलभ्यते यस्य प्रकाशनं श्री पं० सत्यव्रतसामश्रमिमहोदयेन चिरकालपूर्वं विहितम्। 'अक्षरतन्त्र' ग्रन्थस्य भूमिकायां श्री पं० सत्यव्रतसामश्रमिणोक्तम्—

'ग्रन्थोऽयं ऋक्तन्त्रप्रणेतुः शाकटायनस्य समकालिकेन महामुनिना भगवता आपिशालिना प्रोक्तः।'

तदनुसारं शाकटायनसमकालिको महामुनिः आपिशालिरेव अक्षरतन्त्रस्य प्रवक्तेति स्वीकर्तव्यः। अक्षरतन्त्रे सामगानेषु प्रयुज्यमानानां स्तोभादीनां निर्देशो विहितः।

### (द) छन्दोगव्याकरणम्

वाराणसीस्थ सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सरस्वतीभवनसंग्रहे 'छन्दोगव्याकरण' नाम्नैको हस्तलेखोऽस्ति। तस्य संख्या २०८७ इत्यस्ति। हस्तलेखोऽयं द्रष्टव्यः, पठनीयः, विचारणीयश्च।

## ६. प्रातिशाख्यानां वृत्तिकाराः

ऋक्प्रातिशाख्यस्योपरि आत्रेय-विष्णुमित्र-उव्वट-सत्ययशाः-पशुपतिनाथ शास्त्रिप्रभृतिभिर्विद्वद्भिर्वृत्तयः प्रणीताः। अनेकेषां भाष्यकाराणां वृत्तिकाराणाञ्च नामानि न ज्ञायन्ते।

कात्यायनप्रातिशाख्यस्योपरि उव्वट-अनन्तभट्ट (अनन्तदेव)-श्रीरामशर्मा-रामअग्निहोत्री-शिवराम (?) प्रभृतिभिर्विद्वद्भिर्वृत्तयः प्रणीताः। वाजसनेय प्रातिशाख्यमाश्रित्य श्री बालकृष्णशर्मनामाभिधेयविदुषा 'प्रातिशाख्यप्रदीपशिक्षा' नाम्नी श्रीअमरेशनामाभिधेयविदुषा च 'वर्णरत्नदीपिका' नाम्नी शिक्षा प्रणीता।

तैत्तिरीयप्रातिशाख्यस्योपरि आत्रेय-वररुचि-माहिषेय-सोमयार्य-गार्ग्यगोपालयज्वा-वीरराघवकवि-भैरवार्य-पद्मनाभप्रभृतिभिर्विद्वद्भिर्वृत्तयः प्रणीताः। एकस्य वृत्तिकारस्य नाम न ज्ञायते। तेन 'वैदिकभूषण' नाम्नी, 'भूषणरत्न' नाम्नी वा वृत्तिः प्रणीता।

सामप्रातिशाख्यस्योपरि उपाध्याय अजातशत्रुमहोदयेन, श्रीरामकृष्णदीक्षितसूरिणा च भाष्ये प्रणीते। अन्येषां वृत्तिकाराणां नामानि न ज्ञायन्ते।

श्रीअनन्तदेवयाज्ञिकमहोदयेन 'प्रतिज्ञासूत्र' ग्रन्थस्य भाष्यं विहितम् 'भाषिकसूत्र' ग्रन्थस्योपरि महास्वामी-अनन्तदेवनामाभिधाभ्यां विद्वद्भ्यां व्याख्यो प्रणीते।

ऋक्तन्त्रस्योपर्यनेकैर्विद्वद्भिर्वृत्तयः भाष्याणि च प्रणीतानि, तेषां नामानि न ज्ञायन्ते। श्री भट्टउपाध्यायेन सामतन्त्रस्य भाष्यम्प्रणीतम्। अक्षरतन्त्रस्योपरि केनचिदाचार्येण वृत्तिः प्रणीता, किन्तु तस्य नाम न ज्ञायते।

॥इति संस्कृतव्याकरणशास्त्रैतिह्यविमर्शे प्रातिशाख्यप्रवक्तृव्याख्यातृवर्णनं नाम विंशोऽध्यायः॥

## अर्थकविंशोऽध्यायः

# व्याकरणशास्त्रस्य दार्शनिकग्रन्थकारवर्णनम्

पाणिनेराचार्यस्य 'अवङ्[1] स्फोटायनस्य' इति सूत्रेण, यास्कस्य शब्दनित्यत्वानित्यत्वविचारेण[2] च प्रतीयते यद् व्याकरणशास्त्रस्य दार्शनिकपक्षचिन्तनं पाणिनेर्यास्काच्च बहुकालपूर्वत एवाऽऽरब्धमासीत्।

स्फोटं निर्दिशता श्रीवेदव्यासेन श्रीमद्भागवतमहापुराणे लिखितम्—

'दिशां त्वमवकाशो[3]ऽपि दिशः खं स्फोट आश्रयः।
नादो वर्णत्वमोङ्कार आकृतीयं पृथक् कृतिः॥'

व्याकरणशास्त्रस्योपलब्धेषु दार्शनिकग्रन्थेषु प्रायेणाऽधोलिखिताः विषयाः विवेचिताः—

१. भाषोत्पत्तिः।
२. शब्दाभिव्यक्तिः।
३. शब्दस्य रूपद्वयम्-स्फोटो ध्वनिश्च।
४. अपभ्रंशकारणानि।
५. पदमीमांसा।
६. वाक्यमीमांसा।
७. धात्वर्थः।
८. लकारार्थः।
९. प्रातिपदिकार्थः।
१०. सुबर्थः।
११. समासशक्तिः।
१२. शब्दशक्तिः।
१३. निपातार्थः।
१४. स्फोटः।
१५. क्रिया।
१६. कालः।
१७. लिङ्गम्।
१८. संख्या।
१९. उपग्रहः।

---

१. पाणिनि–अष्टाध्यायी ६।१।१२३॥

२. यास्क–निरुक्तम्, १।१॥

३. श्रीमद्भागवतपुराणम्, १०।८५।९॥

सम्प्रत्युपलब्धेषु व्याकरणशास्त्रस्य दार्शनिकग्रन्थेषु स्फोटप्रतिपादकग्रन्थानां बाहुल्यमस्ति। अत्र प्रामुख्यम्भजमानानां व्याकरणशास्त्रस्य दार्शनिकग्रन्थकाराणां परिचय उपस्थाप्यते।

## १. आचार्यः स्फोटायनः

स्फोटायनस्याचार्यस्योल्लेखः पाणिनिना 'अवङ्[1] स्फोटायनस्य' इत्यस्मिन् सूत्रे साक्षाद्रूपेण विहितः। स्फोटायनशब्दं व्याचक्षाणेन श्रीहरदत्तेनोक्तम्—

'स्फोटोऽयनं[2] परायणं यस्य स स्फोटायनः स्फोटप्रतिपादनपरो वैयाकरणाचार्यः ये त्वौकारं पठन्ति ते नडादिषु अश्वादिषु वा ( स्फोटशब्दस्य ) पाठं मन्यन्ते।'

एतद्व्याख्यानुसारेण स्फोटायनाचार्यः वैयाकरणानां स्फोटतत्त्वस्य प्रथम उपज्ञाता प्रतीयते। अस्य कालादिविषये पूर्वमेव विवेचितम्।

## २. औदुम्बरायणः

'स्फोटसिद्धि' इत्याख्यग्रन्थलेखकेन श्रीभरतमिश्रेण स्वग्रन्थारम्भे लिखितम्—

भगवदौदुम्बरायणाद्युपदिष्टाखण्डभावमपि व्यञ्जनारोपितनान्तरीयकभेदक्रमविच्छेदादिनिविष्टैः परैः एकाकारनिर्भासम् अन्यथा सिद्धिकृत्य अर्थधीहेतुतां चान्यत्र संचार्य भगवदौदुम्बरादीनपि भगवदुपवर्षादिभिर्निमायापलपितम्......।'

अनेन वचनेन प्रतीयते यद् भगवता औदुम्बरायणेन शब्दाखण्डभावस्य अर्थात् स्फोटात्मकताया उपदेशः प्रदत्त आसीत्। भर्तृहरिणोक्तम्—

'वाक्यस्य बुद्धौ[3] नित्यत्वमर्थयोगं च शाश्वतम्।
दृष्ट्वा चतुष्ट्वं नास्तीति वार्ताक्षौदुम्बरायणौ॥'

एतद्वचनानुसारं औदुम्बरायणाचार्यः शब्दनित्यत्ववादी आसीत्। औदुम्बरायण-

---

१. पाणिनि—अष्टाध्यायी, ६।१।१२३॥

२. हरदत्त—पदमञ्जरी ६।१।१२३॥

३. भर्तृहरि—वाक्यपदीयम्, २।३४३॥

शब्दे श्रुतेन तद्धितप्रत्ययेन ज्ञायते यद् औदुम्बरायणाचार्यस्य पितुर्नाम 'उदुम्बर' इत्यासीत् । 'उदुम्बर' शब्दः पाणिनिनेनंडादिगणे पठितः । अतः उदुम्बरशब्दात् 'नडादिभ्यः[1] फक्' इति सूत्रेण फक् प्रत्यये, फस्याऽऽयनादेशे सति 'औदुम्बरायण' शब्दो निष्पद्यते ।

ओदुम्बरायणाचार्यस्योल्लेखः निरुक्तकारेण यास्काचार्येण निरुक्ते ( १।१ ) विहितः । यास्कस्य कालोवैक्रमाब्दात् प्रायेणैकशतोत्तरत्रिसहस्रवर्षपूर्वमिति सर्वथा निश्चितमेव । अतः औदुम्बरायणाचार्यस्य कालो वैक्रमाब्दाब्देकशतोत्तरत्रिसहस्रवर्षपूर्वमिति स्वीकर्तुं शक्यते ।

यास्काचार्येण निरुक्ते उक्तम्—

'इन्द्रियनित्यं[2] वचनमौदुम्बरायणः ।'

श्रीभरतमिश्रस्य पूर्वनिर्दिष्टवचनेन ज्ञायते यद् औदुम्बरायणाचार्यः शब्दस्य स्फोटस्वरूपस्य अर्थात् नित्यत्वस्य प्रतिपादक आसीत्; किन्तु यास्कवचनानुसारेण सः शब्दानित्यत्वपक्षप्रतिपादकः प्रतीयते । अत इदं स्पष्टम् यद् औदुम्बरायणाचार्येण शब्दस्य नित्यत्वपक्षोऽनित्यत्वपक्षश्चोभावपि सुस्पष्टं विवेचितौ ।

## ३. व्याडिः

प्राचीनवाङ्मये 'दाक्षायण' नाम्ना प्रसिद्धेन आचार्येण व्याडिना 'संग्रह' नामाभिधो व्याकरणशास्त्रीयो दार्शनिको ग्रन्थः प्रणीतः । महाभाष्यकारेण पतञ्जलिनाऽऽचार्येण—

'शोभना खलु दाक्षाय[3]णस्य संग्रहस्य कृतिः'

इत्युक्त्वा संग्रहग्रन्थः प्रशंसितः । संग्रहग्रन्थोऽयं सम्प्रति नोपालभ्यते । संग्रहग्रन्थे विवेचितान् विषयान् व्याचक्षाणेन महर्षिणा पतञ्जलिनोक्तम्—

'संग्रहे तावत्[4] प्राधान्येन परीक्षितम्- नित्यो वा स्यात् कार्यो वेति ।

---

१. पाणिनि–अष्टाध्यायी, ४।१।९९।।

२. यास्क–निरुक्तम्, १।१।।

३. पतञ्जलि–महाभाष्यम्, २।३।६६।।

४. तदेव, १।१।१।।

तत्रोक्ता दोषाः, प्रयोजनान्यप्युक्तानि। तत्र त्वेष निर्णयः-यद्येव नित्योऽथापि कार्यं उभयथा लक्षणं प्रवर्त्यम् ।'

एवम् संग्रहग्रन्थस्य विभिन्नेषु ग्रन्थेषूपलब्धोद्धरणावलोकनेन ज्ञायते यत् संग्रहग्रन्थो वाक्यपदीयवद् व्याकरणशास्त्रस्य दार्शनिको ग्रन्थ आसीत् । आचार्येण भर्तृहरिणा महाभाष्यव्याख्याने सूचितम् यत् संग्रहग्रन्थे चतुर्दशसहस्रविषयाणां परीक्षा आसीत् । तथाहि—

'चतुर्दशसहस्राणि वस्तूनि अस्मिन् संग्रहग्रन्थे ( परीक्षितानि ) ।'

श्रीनागेशभट्टमतानुसारेण संग्रहग्रन्थस्य परिमाणमेकलक्षश्लोकपरिमितमासीत् । तथा हि—

संग्रहो व्याडिकृतो लक्ष[1]श्लोकसंख्यो ग्रन्थ इति प्रसिद्धिः ।'

व्याडेराचार्यस्य देशकालादिविषये पूर्वमेव विवेचितम् ।

## ४. पतञ्जलिः

आचार्येण पतञ्जलिना पाणिनीयाष्टाध्याय्याः सूत्राणि, तदुपरि लिखितानि कात्यायनीयवार्तिकानि चाऽऽश्रित्य 'महाभाष्य' नामा अनुपमो ग्रन्थः प्रणीतः । महाभाष्यम् न केवलं पाणिनीयशब्दानुशासनस्य, अपितु, प्राचीनव्याकरसम्प्रदायमात्रस्यैक आकरग्रन्थोऽस्ति । व्याकरदर्शनस्य सर्वे न्यायाः महत्त्वपूर्णेऽस्मिन् ग्रन्थे यत्र-तत्र विद्यमानास्सन्ति । आचार्येण भर्तृहरिणोक्तम्—

'कृतेऽथ पतञ्जलिना[2] गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥'

एतद् व्याचक्षाणेनश्रीपुण्यराजेनोक्तम्—

तच्च भाष्यं न केवलं व्याकरणस्य निबन्धनम्, यावत् सर्वेषां न्यायबीजानां बोद्धव्यमित्यत एव सर्वन्यायबीजहेतुत्वादेव महच्छब्देन विशेष्य महाभाष्यमित्युच्यते लोके ।'

पुनश्चोक्तमाचार्येण भर्तृहरिणा—

---

१. नागेश-उद्योत, नवा०, निर्णयशागर सं०, पृ० ५५ ॥
२. भर्तृहरि--वाक्यपदीयम्, २ काण्डम्, श्लोकः ४८५ ॥

'आर्षे विप्लाविते[1] ग्रन्थे संग्रहप्रतिकञ्चुके।'

वचनेऽस्मिन् भर्तृहरिणाऽऽचार्येण महाभाष्यकृते 'संग्रहप्रतिकञ्चुक' शब्दो व्यवहृतः। अनेन स्पष्टम् यत् पातञ्जलमहाभाष्यम् व्याडिप्रणीतसंग्रहग्रन्थवदेव शब्दशास्त्रस्य दार्शनिको ग्रन्थोऽस्ति। भर्तृहरिप्रणीतस्य वाक्यपदीयग्रन्थस्याऽयमेवाऽऽधारग्रन्थोऽस्ति।

## ५. भर्तृहरिः

आचार्येण भर्तृहरिणा महाभाष्यस्य सूक्ष्मदृष्ट्या आलोडनं विधाय स्वगुरुणा वसुरातेनोपदिष्टं व्याकरणागममाश्रित्य 'वाक्यपदीय' नामा व्याकरशास्त्रसम्बद्धोऽतिमहत्त्वपूर्णो दार्शनिको ग्रन्थः प्रणीतः। ग्रन्थोऽयं त्रिषु काण्डेषु विभक्तः—आगमकाण्डम् (ब्रह्मकाण्डम्), पदकाण्डम्, प्रकीर्णकाण्डञ्चेति।

अनेके प्राचीना ग्रन्थकाराः 'वाक्यपदीय' नाम्ना त्रयाणामपि काण्डानां निर्देशं स्वीकुर्वन्ति। वाक्यपदीयसंज्ञयाऽपीदमेत्र मतं पुष्यते। वाक्यम् पदञ्चाऽधिकृत्य कृतो ग्रन्थो 'वाक्यपदीय' नाम्नाऽभिधीयते। प्रथमे ब्रह्मकाण्डे अखण्डवाक्यस्फोटः, द्वितीयकाण्डे दार्शनिकदृष्ट्या वाक्यविषयश्च विवेचितः, तृतीयञ्च काण्ड पदविषयकमस्ति।

वाक्यपदीयस्यैकं नाम 'वाक्यप्रदीप' इत्यप्यासीत्, इति श्रीबूहलरमहोदयेन मनुस्मृतेर्मेधातिक्कृतभाष्यभूमिकायामुक्तम्[2]।

वाक्यपदीयाख्यग्रन्थस्य प्रणेता आचार्यो भर्तृहरिरेवेत्यत्र नास्ति मनागपि संशीति लेशः। तथाप्यनेकाः कारिकाः भर्तृहरिप्रणीता न सन्ति। भर्तृहरिणा प्रकरणानुरोधेन प्राचीनानामाचार्याणामप्यनेकाः कारिका यत्र-तत्र संगृहीताः।

वाक्यपदीयस्य यः पाठः सम्प्रत्युपलभ्यते, तत्राऽनेके भागाः विनष्टाः। तत्र प्रमाणानि—

---

१. तदेव, २।४८८॥

२. वाक्यपदीय Which sometimes is called वाक्यप्रदीप।

द्र०–Sacred Book of the East Vol. 25, Page 123, foot note 1.

(१) आचार्येण भर्तृहरिणा वाक्यपदीयस्य ( २।७६ ) स्वोपज्ञव्याख्यायामुक्तम्—

'तत्र द्वादश षट् चतुर्विंशतिर्वा लक्षणानीति लक्षणसमुद्देशे सापदेशं सविरोधं विस्तरेण व्याख्यास्यते।'

सम्प्रत्युपलब्धे ग्रन्थे 'लक्षणसमुद्देशो' नोपलभ्यते। समुद्देशोऽयं पुण्यराजस्य काल एव विनष्टः। अत्रैव प्रसङ्गे श्रीपुण्यराजेनोक्तम्—

'एतेषां वितत्य[1] सोपपत्तिकं सनिदर्शनस्वरूपं पदकाण्डे लक्षणसमुद्देशे निर्दिष्टमिति ग्रन्थकृतैव स्ववृत्तौ प्रतिपादितम्। आगमभ्रंशाल्लेखकप्रमादादिना वा लक्षणसमुद्देशश्च पदकाण्डमध्ये न प्रसिद्धः।'

अत्रैव प्रसङ्गे श्रीपुण्यराजेन पुनरुक्तम्—

'सेयमपरिमाणविकल्पा[2] बाधा विस्तरेण बाधासमुद्देशे समर्थयिष्यते।'

पुण्यराजस्योपर्युक्तवचनेन स्पष्टम् यत् तस्य काले वाक्यपदीये 'बाधासमुद्देश' आसीत्, यः सम्प्रति नोपलभ्यते। वाक्यपदीयस्य सम्प्रति विभिन्नानि संस्करणानि प्रकाशितानि। तत्र रामलालकपूरट्रस्टतः प्रकाशितं श्रीपं० चारुदेवशास्त्रिसम्पादितं संस्करणम्, डेक्कनकालेजपूनातः प्रकाशितं श्री डॉ० को० अ० सुब्रह्मण्यम् अय्यरमहोदयसम्पादितं संस्करणम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयात् प्रकाशितम् श्रीपं० रघुनाथशर्मणः 'अम्बाकर्त्री' इत्याख्यटीकाविभूषितं संस्करणञ्चैतानि संस्करणान्युल्लेखनीयानि सन्ति। भर्तृहरेराचार्यस्य देशकालादिविषये पूर्वमेव विवेचितम्।

## ६. वाक्यपदीयस्य व्याख्यातारः

### (क) भर्तृहरिः

आचार्येण भर्तृहरिणा स्वयमेव स्वकीयस्य वाक्यपदीयस्य विस्तृता 'स्वोपज्ञा' व्याख्या प्रणीता। भर्तृहरेराचार्यस्य स्वोपज्ञा व्याख्या वाक्यपदीयस्य कियदंशे आसीदिति वक्तुं दुष्करम्। तथापि हेलाराजस्य—

'काण्डद्वये यथावृत्ति सिद्धान्तार्थसतत्त्वतः।'

---

१. पुण्यराज-वाक्यपदीयम् २।७७।८३ कारिकाटीका, पृ० ४६, लाहौरसंस्करणम्॥
२. तदेव, पृ० ५०, लाहौरसंस्करणम्॥

इति वचनेन ज्ञायते यद् हेलाराजस्य समये प्रथमद्वितीयकाण्डयोरुपरि स्वोपज्ञा व्याख्या विद्यमाना आसीत् । सम्प्रति प्रथमकाण्डस्य स्वोपज्ञा व्याख्या पूर्णोपलभ्यते, द्वितीयकाण्डस्य च मध्ये त्रुटिताऽस्ति । भर्तृहरिणा वाक्यपदीयस्य स्वोपज्ञव्याख्यायाम्—

'कालस्यैव चोपाधिविशिष्टस्य परिमाणत्वात् कुतोऽस्वापरं परिमाणमित्येतत् कालसमुद्देशे व्याख्यास्यते ।'

इति यदुक्तम्, तेन प्रतीयते यद् भर्तृहरेः स्वोपज्ञव्याख्या वाक्यपदीयस्य तृतीयकाण्डस्याऽप्यासीत् ।

श्रीभर्तृहरिप्रणीतायाः स्वोपज्ञव्याख्यायाः निर्देशः टीकाकारैर्विभिन्नैर्नामाभिर्विहितः । तथा हि—

वृत्ति–'ग्रन्थकृतैव स्ववृत्तौ प्रतिपादितम्[२] ।'

विवरण–'कारिकोपन्यासफलं स्वयमेव विवरणे दर्शयिष्यति[३] ।'

टीका–'.......पदवादिपक्षदूषणपरः परं टीकाकारो व्यवस्थापयतीत्यस्य काण्डस्य संक्षेपः[४] ।'

'..........तथा च टीकाकारः प्रदर्शयिष्यति[५] ।'

भाष्यं–'तत्र श्लोकोपात्तं दृष्टान्तं विभज्य दार्ष्टान्तिकं भाष्यं विभजन्ति वर्णपदेति[६] ।'

वाक्यपदीय–'उक्तं च वाक्यपदीये–नहि गौः स्वरूपेण गौः, नाप्यगौर्गोत्वादिसम्बन्धात्तु गौः ।'

---

१. भर्तृहरि–स्वोपज्ञ व्याख्या २।२४, पृ० २०, लाहौरसंस्करणम् ।।

२. पुण्यराजीय टीका, पृ० ४६, लाहौरसंस्करणम् ।।

३. वृषभदेवटीका, काण्डम् १, पृ० १३३, लाहौरसंस्करणम् ।।

४. पुण्यराजीयटीका, पृ० ७, लाहौरसंस्करणम् ।।

५. तदेव,पृष्ठम् १० ।।

६. वृषभदेवटीका, पृ० ८४, लाहौरसंस्करणम् ।।

**(ख) वृषभदेवः**

भर्तृहरेराचार्यस्य ब्रह्मकाण्डस्य स्वोपज्ञवृत्तेरनेकैर्वैयाकरणैष्टीकाः प्रणीताः। स्वोपज्ञवृत्तिव्याख्यात्रा श्रीवृषभदेवेन टीकारम्भे उक्तम् —

'यद्यपि टीकाः बह्वय पूर्वाचार्यैः सुनिर्मला रचिताः[1]।'

पुनश्च कारिकायाः ( १।१० ) वृत्तेर्व्याख्यायामृषभदेवेनोक्तम्—

'ज्ञानं च संस्कारश्चेति। वृत्तिव्याख्याता षष्ठीसमासमाह[2]।'

श्रीवृषभदेवेन स्वटीकारम्भे उक्तम्—

'विमलचरितस्य राज्ञो विदुषः श्रीविष्णुगुप्तदेवस्य।
भृत्येन तदनुभावाच्छ्रीदेवयशस्तनूजेन।
बन्धेन विनोदार्थं श्री वृषभेण स्फुटाक्षरं नाम[3]॥'

अनेन ज्ञायते यद् श्रीवृषभदेवः विमलचरितस्य राज्ञो विष्णुगुप्तस्याऽऽश्रितस्य श्रीदेवयशस्य पुत्र आसीत्। श्रीवृषभदेवस्य कालस्य निश्चयो नाऽस्ति।

**(ग) धर्मपालः**

चीनदेशीययात्रिकस्य श्रीइत्सिगमहोदयस्य लेखाज्ज्ञायते यद् भर्तृहरेराचार्यस्य प्रकीर्णाख्यतृतीयकाण्डोपरि धर्मपालेन व्याख्या प्रणीता। श्रीइत्सिगमहोदयेन स्वयात्रावर्णनं सं० ७४९ वैक्रमाब्दे लिखितम्। अत एव वाक्यपदीयव्याख्यातुर्धर्मपालस्य कालः वैक्रमाष्टशतकस्य प्रथमचरणं, ततः पूर्वं वा भवितुमर्हति।

**(घ) पुण्यराजः**

वाक्यपदीयस्य द्वितीयकाण्डोपरि श्रीपुण्यराजेनैका अनतिविस्तीर्णा, किन्तु स्फुटार्था व्याख्या प्रणीता। पुण्यराजेन द्वितीयकाण्डव्याख्याया अन्ते स्वकीयोऽतिसंक्षिप्तः परिचयः प्रदत्तः, तेन ज्ञायते यत् पुण्यराजस्याऽपरं नाम श्रीराजानकशूरवर्मा आसीत्। अयं काश्मीरवास्तव्य आसीत्। अनेन शशाङ्कशिष्याद् वाक्यपदीयमधीत्य काण्डस्याऽस्य वृत्तिः प्रणीता।

---

१. वाक्यपदीयम्, ब्रह्मकाण्डम्, भूमिका, पृ० १२, लाहौरसंस्करणम्॥
२. वाक्यपदीयम्, ब्रह्मकाण्डम्, लाहौरसंस्करणम्, भूमिका, पृ० २२॥
३. तदेव, भूमिका, पृ० १२॥

श्रीपुण्यराजेन स्मृतस्याऽऽचार्यशशाङ्कस्य पूर्णं नाम 'भट्टशशाङ्कधर' इत्यस्ति। 'पदेषु पदैकदशान्' इति न्यायेन श्रीपुण्यराजेन पूर्वार्धस्य 'शशाङ्क' इति पदस्यैव प्रयोगो विहितः। श्रीपं० युधिष्ठिरमीमांसकमहोदयमतानुसारेण पुण्यराजस्य कालः वैक्रमैकादशशतकम्, ततः पूर्वं वा स्वकर्तुं शक्यते।

(ङ) हेलराजः

श्री हेलाराजेन वाक्यपदीयस्य त्रिषु काण्डेषु व्याख्या प्रणीता, किन्तु सम्प्रति केवलं तृतीयकाण्डस्यैव व्याख्योपलभ्यते।

श्रीहेलाराजेन तृतीयकाण्डान्तेऽधोलिखितप्रकारेण स्वकीयः परिचयः प्रदत्तः-

'मुक्तापीड इति प्रसिद्धिमगमत् कश्मीरदेशे नृपः
श्रीमान् ख्यातयशा बभूव नृपतेस्तस्य प्रभावानुगः।
मन्त्री लक्ष्मण इत्युदारचरितस्तस्यान्ववाये भवो
हेलाराज इमं प्रकाशमकरोच्छ्रीभूतिराजात्मजः॥'

इत्युल्लेखाज्ज्ञायते यद् हेलाराजः काश्मीरदेशस्य महाराजस्य मुक्तापीडस्य मन्त्रिणो लक्ष्मणस्य कुले जनिं लेभे। श्रीहेलाराजस्य पितुर्नाम श्रीभूतिराज इत्यासीत्। श्री पं० युधिष्ठिरमीमांसकमहोदयमतानुसारेण श्रीहेलाराजस्य कालो वैक्रमैकादशशतकस्याऽऽरम्भः स्वीकर्तुं शक्यते।

श्रीहेलाराजेन तृतीयकाण्डस्याऽऽरम्भे लिखितम्--

'काण्डद्वये यथावृत्ति सिद्धान्तार्थसतत्त्वतः।'

अनेन ज्ञायते यत् श्रीहेलाराजेन वाक्यपदीयस्य प्रथमद्वितीयकाण्डयोरपि भर्तृहरेः स्वोपज्ञवृत्त्यनुसारिणी काचिद् व्याख्या प्रणीता। प्रथमकाण्डोपर्यनेन प्रणीताया व्याख्यायाः नाम 'शब्दप्रभा' इत्यासीत्। तथा चोक्तं तेनैव--

'विस्तरेणागमप्रामाण्यं वाक्यपदीयेऽस्माभिः प्रथमकाण्डे शब्दप्रभायां निर्णीतमिति तत एवावधार्यम्[1]।'

सम्प्रति वाक्यपदीयस्य प्रथमद्वितीयकाण्डयोरुपरि श्रीहेलाराजप्रणीता व्याख्या

---

१. श्री पं० चारुदेवसम्पादितस्य वाक्यपदीयब्रह्माण्डस्योपोद्घाते १५ तमे पृष्ठे निर्दिष्टम्।

नोपलभ्यते। तृतीयकाण्डस्य या व्याख्योपलभ्यते, तत्राऽनेकेषु स्थलेषु ग्रन्थपातो दृश्यते।

**(च) फुल्लराजः**

श्री हेलाराजस्य व्याख्या यं हस्तलेखमाश्रित्य मुद्रिता, तत्र द्वयोः स्थानयोर्लिपिकारेणोक्तम्—

'इतो ग्रन्थपातसन्धानाय[1] फुल्लराजकृतिर्लिख्यते।'

'इहापि पतितग्रन्था हे[2]लाराजकृतिः फुल्लराजकृत्या सन्धीयते'।

इत्युद्धरणद्वयावलोकनेन ज्ञायते यत् श्रीफुलराजनामाभिधेयविदुषा वाक्यपदीयस्य काचिट्टीका प्रणीता। किन्तु श्रीफुल्लराजेन वाक्यपदीयस्य त्रिष्वपि काण्डेषु वृत्तिः प्रणीता, किं वा केवलं तृतीयकाण्डोपर्येवेति न सम्यग् ज्ञायते।

**(छ) गङ्गदासः (?)**

श्री पण्डितगङ्गदासेन वाक्यपदीयस्यैका टीका प्रणीता। तस्याः टीकायाः नवपृष्ठानि पूनानगरस्थभण्डारकरशोधसंस्थाने सुरक्षितानि सन्ति[3]। तस्याः हस्तलेखस्यान्ते लिखितम्—

'(इति पण्डित गंगदा) स विरचिते सम्बन्धोद्देशः। षष्ठस्तद्धितोद्देशः समाप्तः।'

गङ्गदासस्य देशकालावज्ञातौ। तेन वाक्यपदीयस्य केवलं तृतीयकाण्डे व्याख्या प्रणीता, किं वा प्रथमद्वितीयकाण्डयोरपीति न ज्ञायते।

## ७. मण्डनमिश्रः

श्री मण्डनमिश्रनामाभिधेयविदुषा 'स्फोटसिद्धि' नामा एकः प्रौढो ग्रन्थः प्रणीतः। तत्र षट्त्रिंशन्मिताः कारिकाः सन्ति, तासु तेन प्रणीता व्याख्याऽस्ति।

शङ्करदिग्विजयप्रभृतिग्रन्थानुसारेण श्रीमण्डनमिश्रो भट्टकुमारिलमहोदयस्य

---

१. वाक्यपदीयम्, तृतीयकाण्डम्, पृ० १९८, काशीसंस्करणम्।

२. तदेव, पृ० १२४।

३. द्र० हस्तलेख, भण्डारकर शोधसंस्थान, पूना व्याकरण विभाग, पृ० ३५२-३५२, हस्तलेख संख्या—३२४।

शिष्य आसीत् । तस्य पत्न्याः नाम 'भारती' इत्यासीत् । शङ्कराचार्यस्य मण्डनमिश्रेण सह घोरः शास्त्रार्थः समजनि । तत्र भारत्या मध्यस्थत्वं विहितम् । श्रीमण्डनमिश्रस्य पराजयानन्तरं भारती स्वयं शङ्करेण सह शास्त्रार्थं कृतवती । अनुश्रुत्यनुसारेण सा शङ्करं कामशास्त्रविषयकप्रकरणे निरुत्तरं कृतवती । शङ्करः काञ्चिदवधिं निर्धार्य कस्यचन सद्योमृतस्य राज्ञः शरीरे प्रविश्य कामशास्त्रज्ञानमवाप्य पुनः भारतीं शास्त्रार्थे पराजितवान् ।

श्रीमण्डनमिश्रः स्वकालस्य महान् विद्वानासीत् । तस्य गृहद्वारे कीराङ्गना अपि वेदस्य स्वतः प्रामाण्यविषये शास्त्रार्थं कुर्वन्ति स्म । शङ्करदिग्विजयग्रन्थे लिखितमस्ति यत् शङ्करः माहिष्मतीं (सम्प्रति मध्यप्रदेशीय 'महेश्वर' इत्याख्यनगरं) नगरीं प्रविश्य कञ्चिदुदकवाहं मण्डनमिश्रगृहं पप्रच्छ । उदकवाह उत्तरयामास—

'स्वतः प्रमाणं परतः प्रमाणं कीराङ्गना यत्र गिरं गिरन्ति ।
द्वारस्थनीडा तरुसन्निपाते जानीहि तन्मण्डनमिश्रधाम ॥'

अद्वैतसम्प्रदाये प्रसिद्धमस्ति यत् शङ्कराचार्यात् पराजितो मण्डनमिश्र अद्वैतवादी भूत्वा 'सुरेश्वराचार्य' नाम्ना प्रसिद्धः । अनेकैर्लेखकैः 'सुरेश्वराचार्यः' मण्डनमिश्रनाम्नाऽपि समुद्धृतः ।

**कालः—**

श्रीमण्डमिश्रस्य गुरोर्भट्टकुमारिलस्य, शङ्कराचार्यस्य समयः प्रायेण ८००–८२० वैक्रमाब्दः स्वीक्रियते । परन्तु मतमिदं सर्वथा काल्पनिकम् । श्री पं० युधिष्ठिरमीमांसकमहोदयमतानुसारं कुमारिलस्य कालः ६९५ वैक्रमाब्दात् पूर्वमस्ति । अतः तच्छिष्यस्य मण्डनमिश्रस्याऽपि कालः ६९५ वैक्रमाब्दात् पूर्वं भवितुमर्हति ।

## ८. स्फोटसिद्धेष्टीकाकारः परमेश्वरः

श्रीमण्डनमिश्रप्रणीतस्य 'स्फोटसिद्धेः' ऋषिपुत्रेण परमेश्वरेणाऽत्युत्कृष्टा व्याख्या प्रणीता । सा व्याख्या मद्रासविश्वविद्यालयग्रन्थमालायां प्रकाशिता ।

दक्षिणभारते नामनिर्धारणप्रक्रियानुसारं ज्येष्ठपुत्रस्य तदेव नाम क्रियते, यत् तस्य पितामहस्य भवति । एवमेकस्मिन्नेव वंशे नामद्वयमनेकवर्षं यावद् व्यवह्रियते

अतः स्फोटसिद्धेः टीकाकारस्य परमेश्वरस्य कालनिर्धारणमतीव दुष्करम् । ग्रन्थस्यास्य सम्पादकेन श्री शे० कृ० रामनाथशास्त्रिमहोदयेन विषयेऽस्मिन् यत् परीक्षणं विहितम्, तदनुसारं तेनेत्थं वंशवृक्षो निर्मितः--

गौरी (पत्नी) + ऋषिः + भवदासः (भ्राता)
|
परमेश्वर (न्यायकणिकाव्याख्याता)
|
| | | | |
गोपालिका (पत्नी) ऋषिः भवदासः वासुदेवः सुब्रह्मण्यः शंकरः
|
परमेश्वरः ( गोपालिका प्रणेता )
|
ऋषिः
|
परमेश्वरः (मीमांसा सूत्रसंग्रहकर्ता)

श्रीमण्डनमिश्रप्रणीतस्य 'स्फोटसिद्धि' इत्याख्यग्रन्थस्य व्याख्यातुः मातुर्नाम 'गोपालिका' इत्यासीत् । अत एव टीकाया अस्या लेखकः द्वितीय ऋषिपुत्रः परमेश्वरोऽस्ति । 'स्फोटसिद्धि' सम्पादकेनाऽस्य कालः वैक्रमषोडशशतकं स्वीकृतम् । परमेश्वरेण 'स्फोटसिद्धेः' टीकायाः नाम स्वमातुर्नाम्नि 'गोपालिका' इति निर्धारितम् ।

## भरतमिश्रः

श्रीभरतमिश्रेण 'स्फोटसिद्धि' नाम ग्रन्थः प्रणीतः, यः त्रिवेन्द्रम् नगरात् सन् १९२७ ईशवीये प्रकाशितः ।

श्रीभरतमिश्रेण स्वकीयः परिचयो न प्रदत्तः क्वापि, न चाऽन्येभ्यः, स्थानेभ्योऽस्य देशकालौ प्रकाशेते । किन्तु पं० गणपति शर्म महाभागेन यं मूलग्रन्थमाश्रित्य ग्रन्थोऽयं प्रकाशितः, तस्य प्रायेण द्विशतप्राचीनत्वं त्रिशतप्राचीनत्वं वा भवितुमर्हतीति तेन भूमिकायाः तृतीयपृष्ठे सूचितम् ।

श्रीभरतमिश्रप्रणीतस्य 'स्फोटसिद्धि' ग्रन्थस्यैको हस्तलेखो मद्रासराजकीयहस्तलेखसंग्रहस्य सूचीपत्रे (भागे ५, खण्डे १।३, पृष्ठे ६४२९, संख्या ४३७६८) निर्दिष्टोऽस्ति ।

त्रिवेन्द्रम् नगरात् सन् १९१७ ईशवीये प्रकाशितस्याऽज्ञातकर्तृकस्य 'स्फोटसिद्धिन्यायविचार' इति ग्रन्थस्याऽऽरम्भे मण्डनानन्तरं भरतस्य निर्देशो विहितः । तथा हि—

प्रणिपत्य गणाधीशं गिरां देवीं गुरूनपि ।
मण्डनं भरतं चापि मुनित्रयमनुहरिम् ॥'

श्रीभरतमिश्रप्रणीते 'स्फोटसिद्धि' ग्रन्थे प्रत्यक्षपरिच्छेद-अर्थपरिच्छेद-आगमपरिच्छेदभेदात् त्रयः परिच्छेदाः सन्ति । ग्रन्थेऽस्मिन् मूलकारिकाभागः तद्व्याख्या चोभे अपि श्रीभरतमिश्रप्रणीते स्तः ।

## १०. स्फोटसिद्धिन्यायविचारकर्ता

महामहोपाध्यायश्रीगणपतिशर्ममहोदयेन सन् १९१७ तमे ईशवीये त्रिवेन्द्रम् नगरात् 'स्फोटसिद्धिन्यायविचार' इत्यभिधेयो ग्रन्थः प्रकाशितः । अस्य ग्रन्थस्य प्रणेतुर्नाम न ज्ञायते, अतोऽस्य देशकालावप्यज्ञातावेव ।

ग्रन्थेऽस्मिन् २४५ मिताः कारिकास्सन्ति । तत्र प्रथमा कारिकाऽधोलिखिताऽस्ति ।

'प्रणिपत्य गणाजीशं गिरां देवीं गुरूनपि ।
मण्डनं भरतं चापि मुनित्रयमनुहरिम् ॥'

अनेन स्पष्टम् यत् ग्रन्थस्याऽस्य रचयिता भरतमिश्रादुत्तरकालिकोऽस्ति ।

## ११. स्फोटविषयकाः ग्रन्थकाराः

एतद्ग्रन्थत्रयमतिरिच्य स्फोटविषयका अधोलिखिता ग्रन्था अप्युपलभ्यन्ते—

| ग्रन्थकाराः | ग्रन्थाः |
|---|---|
| केशवकविः | स्फोटप्रतिष्ठा |
| शेषकृष्णकविः | स्फोटतत्त्वम् |

| | |
|---|---|
| श्रीकृष्णभट्टः | स्फोटचन्द्रिका |
| आपदेवः | स्फोटनिरूपणम् |
| कुन्दभट्टः | स्फोटवादः |

## १२. वैयाकरणभूषणप्रणेता आचार्यः कौण्डभट्टः

पाणिनीयवैयाकरणेषु सम्प्रति 'वैयाकरणभूषणसार' नामा ग्रन्थः प्रसिद्धः। ग्रन्थस्य नाम्नोऽन्ते 'सार' शब्दश्रवणेन प्रतीयते यदयं 'वैयाकरणभूषण' नामधेयस्य बृहद्ग्रन्थस्य संक्षेपोऽस्ति।

'वैयाकरणभूषण' नामा मूलग्रन्थः कारिकात्मकोऽस्ति। मूलकारिकाणां लेखकः भट्टोजिदीक्षितोऽस्ति। तेन प्रारम्भे लिखितम्—

'फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः।
तत्र निर्णीत एवार्थः संक्षेपेणेह कथ्यते॥'

अनेन स्पष्टम् यत् कारिकाग्रन्थोऽयं भट्टोजिदीक्षितप्रणीतः, अस्य रचना च शब्दकौस्तुभानन्तरं जाता। मूलकारिकात्मकग्रन्थः 'वैयाकरसिद्धान्तकारिका' इति नाम्ना, 'वैयाकरणमतोन्मज्जन' इति नाम्ना चाऽभिधीयते।

श्रीभट्टोजिदीक्षितप्रणीतकारिकासु श्रीकौण्डभट्टेन बृहती, लघ्वी अतिलघ्वी च व्याख्या प्रणीता। तत्प्रणीता व्याख्यात्मका ग्रन्थाः–बृहद्वैयाकरणभूषणम्, वैयाकरणभूषणसारः, लघुवैयाकरणभूषणसार नाम्ना प्रसिद्धाः।

व्याकरदर्शनपरम्परायामाचार्यस्य कौण्डभट्टस्य महत्त्वपूर्ण स्थानमस्ति। कौण्डभट्टस्य पुरतो मीमांसकनैयायिकानामाचार्याणां प्रखरैस्तर्कैः क्षतं विक्षतं च व्याकरणदर्शनमासीत्[१]। शब्दकौस्तुभे यद्यपि श्रीभट्टोजिदीक्षितेन व्याकरणस्य दार्शनिकसिद्धान्तानां पुनः स्थापनायाः मतान्तरनिराकरणस्य च चेष्टा विहिताऽऽसीत् किन्तु शब्दकौस्तुभस्य शुद्धदार्शनिकग्रन्थत्वाभावादुद्देश्यमिदं न पूर्णतया सफलं जातम्।

---

१. डॉ० गौरीनाथ शास्त्री–फिलॉसफी ऑफ वर्ड एण्ड मीनिंग, भूमिका, पृ० २६-२७॥

ढुण्ढि गौतमजैमिनीयवचनव्याख्यातृभिर्दूषितान्।

(कौण्डभट्ट–वैयाकरणभूषणम्, प्रस्तावना ४)

श्रीभट्टोजिदीक्षितेन मूलरूपेण व्याकरणशास्त्रस्य दार्शनिकसिद्धान्ताः वैयाकरणसिद्धान्तकारिकासूपनिबद्धाः।[1] तेषां मतान्तरपङ्कादुद्धारं व्याख्यां चाऽऽवश्यकीमनुभूय श्रीकौण्डभट्टो न केवलमिदं समाह्वानं स्वीचकार, अपितु, तेन व्याकरणस्य दार्शनिकसिद्धान्तेष्वनेकपरिष्कारकरणेन सह मौलिकानि संशोधनानि विहितानि। व्याकरणेन सहैवाऽयं मीमांसान्यायदर्शनयोरप्यधिकारप्राप्तो विद्वानासीत्। विलक्षणप्रतिभासम्पन्नस्य कौण्डभट्टस्य विचाराणामिदमेव सर्वोत्कृष्टं वैशिष्ट्यमस्ति यत् तेन दर्शनान्तरीयाक्षेपाणामुत्तराणि तेषामेव जटिलभाषायां, प्रायश्च तेषामेव तर्काणां व्याख्यया दत्तानि। लौकिकव्यवहारशास्त्रीयनिर्देशादयो ये ये आधारा आक्षिप्ता आसन्, तेषां निराकरणमपि तानेवाश्रित्य श्रीकौण्डभट्टेन विहितम्। वाक्यपदीयमतोद्धारकत्वेऽपि तेन वाक्यपदीयस्य गुरुतराणां संशोधनार्हाणामंशानां परिष्कारोः विहितः।[2] एषः तस्याऽलौकिकप्रतिभाया पूर्वाग्रहमुक्तविचारधारायाश्च परिचायकोऽस्ति। अनेकेषु स्थलेषु मौलिकप्रत्यवमर्शद्वारा तेन व्याकरणदर्शनस्य समृद्धिर्विहिता। व्याकरणदर्शनक्षेत्रे युगप्रवर्तक आचार्य आसीदयम्। तथा चाऽनेन व्याकरणदर्शनस्य तर्केषु न्यायदर्शनवत् समानशब्दावलीकार्यकारणभावादिप्रदानेन तीक्ष्णत्वमुपपादितम्। अत एव संस्कृतव्याकरणदर्शनक्षेत्रे वाक्यपदीयकारवत् श्रीकौण्डभट्टस्य विशिष्टं स्थानं स्वीकर्तु शक्यते।

आचार्यस्य कौण्डभट्टस्य जीवनवृत्तपरिचयस्तस्यैव ग्रन्थे उल्लिखितोऽस्ति। अयं श्रीभट्टोजिदीक्षितस्य भ्रातृज आसीत्।[3] अस्य पिता रङ्गोजिभट्टाभिधोऽद्वैतवेदान्त-

---

१. फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः।
तत्र निर्णीत एवाऽर्थः संक्षेपेणेह कथ्यते॥
(वैयाकरणभूषणम् तथा वैयाकरणभूषणसारः/कारिक १)

२. यथा अपादान तथा ध्रुवत्व सम्बन्धी वाक्यपदीय के मतमे संशोधन कियाा गया।
(द्र०—कौण्डभट्ट-वैयाकरणभूषणम्, कारकार्थप्रकरणम्)

३. वाग्देवी यस्य जिह्वाग्रे नरीनर्ति सदा मुदा।
भट्टोजिदीक्षितमहं पितृव्यं नौमि सिद्धये।॥
(कौण्डभट्ट—वैयाकरणभषणम्, प्रस्तावना ३)

स्याऽऽचार्यं आसीत्।[१] रङ्गोजिभट्टस्य व्याससूत्रटीका प्रसिद्धाऽस्ति, तथा चाऽनेनाऽन्यस्मिन् ग्रन्थे माध्वाचार्यस्य द्वैतसिद्धान्तानां खण्डनमपि विहितमासीत्।[२] श्रीकौण्डभट्टस्य गुरुरपि स एवाऽऽसीत्।[३] श्री एस० वी० पी० रङ्गनाथ-स्वामिमतानुसारेणाऽस्य पितृव्यो भट्टोजिदीक्षितः शेषकृष्णपुत्रस्य वीरेश्वरस्य शिष्यः। अयं महाराष्ट्रप्रदेशीय आसीत्।[४] श्रीकौण्डभट्टेन शेषकृष्णतनयात् शेषरामेश्वरात् (सर्वेश्वरात्) विद्याध्ययनं विहितमिति तेन भूषणसारस्यान्ते स्वयमेव सूचितम्।[५]

**कालः—**

(१) श्रीकौण्डभट्टस्य कालविषये ऽत्यनिश्चयो नास्ति। तस्य पितृव्यपादस्य श्रीभट्टोजिदीक्षितमहोदयस्य विषये पण्डितराजेन जगन्नाथेन 'मनोरमाकुचमर्दिनी' टीकायामुक्तम्—

'इह केचित्[६] शेषावतंसानां श्रीकृष्णपण्डितानां चिरार्चितयोः पादुकयोः प्रसादादासादितशब्दानुशासना-स्वनिर्मितायां मनोरमायामाकुल्यमकार्षुः॥'

पण्डितराजो जगन्नाथो मुगलसम्राजः शाहजहाँमहोदयस्य समकालीनः राजकविश्चाऽऽसीत्। शाहजहाँमहोदयस्य कालः सप्तदशशतकमस्ति। भट्टोजिदीक्षितः पण्डितराजस्य गुरोर्वीरेश्वरस्य गुरुभ्राता, तस्य पितुः श्रीकृष्णस्य च शिष्य आसीत्। अतस्तस्य कालेनाऽपि सप्तदशशतकेनैवभाव्यम्। एवं कौण्डभट्टो भट्टोजिदीक्षितस्य, रङ्गोजिभट्टस्य च कालः सप्तदशशतकस्य प्रथमचरणम्, कौण्डभट्टस्य पण्तितराजस्य च कालस्तस्यैव शतकस्य मध्यमचरणमिति प्रतीयते।

---

१. ..................पितरं रङ्गोजिभट्टाभिधम्। (तदेव, प्रस्तावना ४)

२. यश्चक्रे मुनिवर्यसूत्रविवृतिं सिद्धान्तभङ्गं तथा। माध्वानां० (तदेव, उपसंहार १)

३. The Indian Antiquary Vol XLI Nov. 1912

४. द्र०-भीमसेन शास्त्री (सं०)-वैयाकरणभूषणसार, भूमिका, पृ० ५॥

५, अशेषफलदातारमपि सर्वेश्वरं गुरुम्। श्रीमद्भूषणसारेण भूषये शेषभूषणम्॥

६. पण्डितराज जगन्नाथ-मनोरमाकुचमर्दिनी, पृ० ३ तथा चौखम्बा संस्कृत सीरिज से सं० १९९१ वि० में मुद्रित प्रौढमनोरमा, तृतीय भाग के अन्त में मुद्रित प्रौढमनोरमाखण्डन, पृ० १॥

२. नृसिंहाश्रमः १५४७ ईशवीये स्वकीयं 'वेदान्ततत्त्वविवेकाभिधं दार्शनिकग्रन्थं, अग्रिमे वर्षे एव तस्योपरि 'दीपक' नाम्नीं स्वकीयां व्याख्यां निर्ममे। श्रीभट्टोजिदीक्षितेन 'वाक्यमाला' नाम्नी व्याख्या प्रणीता। अत इयमस्य पूर्ववर्तिनी कालसीमाऽस्ति। भट्टोजिदीक्षितस्य शब्दकौस्तुभग्रन्थस्यैको हस्तलेखः १६६३ ईशवीये लिखितः, यस्योल्लेखो वंगीयहस्तलेखसूचीपत्रे श्रीमता हरप्रसादशास्त्रिणा विहितः। अतः इयमस्य परवर्तिनी कालसीमा भवितुमर्हति। एवम् श्रीभट्टोजिदीक्षितस्य कालः १५६० ईशवीयतः १६१० ईशवीयं यावत् स्वीकर्तुं शक्यते।[1] एतद्भ्रातृजत्वात् कौण्डभट्टःसप्तदशशतकमध्यकालीन एव वक्तुं शक्यते।

३. मूलतः 'इक्केरि' क्षेत्रस्य, कालान्तरञ्च मैसूरप्रदेशस्य 'वेदनूर' इति क्षेत्रस्य शासकस्य 'केलदीनायक' इत्युपाधिना प्रख्यातस्य वेंकटप्पयस्य, वेंकटेन्द्रस्य वा (१५९२-१६२९ ई०) आदेशेन भट्टोजिदीक्षितः 'तत्त्वकौस्तुभ' नामानमद्वैतग्रन्थं रचयामास।[2] तस्यैव राज्ये 'वडेरु' नामानं माध्वमतानुयायिनं यतिं शास्त्रार्थे पराजितं कृत्वा रङ्गोजिभट्टो वेंकटप्पयनायकात् सम्मानमवाप्तवान्।[3] अतो भट्टोजिदीक्षितरङ्गोजिभट्टाभ्यां वेंकटप्पयसमकालिकाभ्यां भाव्यम्। यतोहि

---

१. बलदेव उपाध्याय-संस्कृत शास्त्रों का इतिहास, ५०२, पृष्ठ पर उद्धृत ॥

२. केलदी—वेंकटेन्द्रस्य निर्देशाद् विदुषां मुदे ध्वान्तोच्छित्यै पटुतरस्तन्यते तत्त्वकौस्तुभः।

फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः।
शाङ्करादपि भाष्याब्धेस्तत्त्वकौस्तुभमुद्धरे ॥

(भण्डारकर शोध संस्थान का हस्तलेख, बलदेव उपाध्याय--संस्कृत शास्त्रोंका इतिहास, पृ० ५१०–११ पर उद्धृत)

३. विद्याधीशवडेरुसंज्ञकयतिं श्रीमाध्वभट्टारकं जित्वा केलादिवेंकटप्पयसविधे व्यान्दोलिकां लब्धवान्.................. रङ्गोजिभट्टं भजे ॥

(कौण्डभट्ट-वैयाकरणभूषणम्, उपसंहार, १)

कोण्डभट्टो रङ्गोजिभट्टस्य पुत्रः, अतस्तस्याऽपि स एव समयः, अर्थात् सप्तदशशतकमध्यभागो भवितुमर्हति।

४. श्रीकौण्डभट्टस्यैको ग्रन्थः 'तत्त्वप्रदीप' नामा वर्तते, यस्यैकां खण्डितां प्रति डॉ॰ साहालमहोदयोऽवाप्तवान्। तेन तद्ग्रन्थविषये उक्तम् यदयं ग्रन्यो राज्ञो महेन्द्रनायकस्य पुत्रस्य वीरभद्रनायकस्याऽऽदेशेन लिखित आसीत्।[1] भद्रप्प-नायको भद्रेन्द्रनायको वा वेंकटय्यस्य राज्ञः पुत्र आसीत्। वीरभद्रप्पो वीरभद्र-नायको वैतस्य (भद्रप्पस्य, भद्रेन्द्रस्य वा) पुत्र आसीत्। अस्य कालः १६२९ ईस्वीयतः १६४५ ईशवीयं यावत् स्वीक्रियते। अतोऽनुमीयते यदस्मिन्नेव काले श्रीकौण्डभट्टः केलदी राज्यात् सम्मानितो जातो भवेत्। एवम् श्रीकौण्डभट्टस्य कालः सप्तदशेशवीयशतकस्य मध्यभागः प्रतीयते।

श्रीगुरुप्रसादशास्त्रिसम्पादितस्य 'भूषणसार' ग्रन्थस्याऽऽदौ भूषणसारलेखनकालः सं॰ १६६० वैक्रमाब्दमिति लिखितम्। श्री पं॰ युधिष्ठिरमीमांसममहोदयेन 'संस्कृत व्याकरणशास्त्र का इतिहास' इत्यभिधेयग्रन्थस्य प्रथमभागस्य ४८७ पृष्ठे (तृ॰ सं॰) अनेकैः प्रमाणैर्भट्टोजिदीक्षितस्य कालः वि॰ सं॰ १५७०-१६५० इति साधितः। अतः श्रीकौण्डभट्टस्य कालो वैक्रमसप्तदशशतकस्य मध्यभागः अर्थात् वि॰ सं॰ १६००-१६७५ इतिस्वीकर्तुं शक्यते।

**कृतयः**—श्री कौण्डभट्टेनाऽनेके ग्रन्थाः प्रणीताः, येष्वनेकेऽद्यावध्यप्रकाशिता एव। तत्र पूर्वापरीभावनिश्चयोऽपि न जातः। डॉ॰ आउफ्रेख्ट प्रभृतीनां विदुषां मतानुसारेण श्रीकौण्डभट्टस्याऽधोलिखिताः ग्रन्थास्सन्ति—

(१) वैयाकरणसिद्धान्तदीपिका।
(२) वैयाकरणभूषणम्
(३) वैयाकरणभूषणसारः।
(४) लघुवैयाकरणभूषणसारः।
(५) स्फोटवादः।
(६) तर्कप्रदीपः।
(७) तर्करत्नम्।
(८) न्यायपदार्थदीपिका च।

## १३. वैयाकरणभूषणसारस्य व्याख्यातारः

**(क) हरिवल्लभः**—श्रीहरिवल्लभनामाभिधेयविदुषा वैयाकरणभूषणसारस्य

१. बलदेव उपाध्याय-संस्कृत शास्त्रों का इतिहास, पृ॰ ५१०॥

'दर्पण' नाम्नी व्याख्या प्रणीता। हरिवल्लभस्योपनाम 'उत्प्रभातीय' आसीत्। श्रीहरिवल्लभः श्रीवल्लभस्य पुत्र आसीत् कूर्माचलश्चाऽस्याऽभिजन आसीत्। अस्य कालः सं० १८०० वैक्रमाब्द इति स्वीक्रियते विद्वद्भिः।

(ख) **हरिभट्टः**—श्रीहरिभट्टनामाभिधेयविदुषा वैयाकरणभूषणसारस्य 'दर्पण' नाम्नी टीका प्रणीता। श्रीहरिभट्टस्य पितुर्नाम श्रीकेशवदीक्षितः, मातुर्नाम श्रीमतीसखीदेवी, ज्येष्ठभ्रातुर्नाम च श्रीधनुराज आसीत्। अस्य कालः सं० १८५४ वैक्रमाब्दः स्वीक्रियते सुधीभिः।

(ग) **मन्नुदेवः**—श्रीमन्नुदेवेन वैयाकरणभूषणसारस्य 'कान्ति' नाम्नी व्याख्या प्रणीता। श्रीमन्नुदेवः श्रीवैद्यनाथपायगुण्डेमहोदयस्य शिष्य आसीत्। श्रीवैद्यनाथस्य पुत्रेण श्रीबालशर्मणा मन्नुदेवमहादेवयोःसहयोगेन श्रीकोलब्रुकमहोदयस्याऽऽज्ञया च 'धर्मशास्त्रसंग्रह' इत्यभिधेयो ग्रन्थः प्रणीतः। श्रीहेनरीटामसकोलब्रुकमहोदयस्य भारते प्रवासकालः सं० १८४०-१८७० वैक्रमाब्दपर्यन्तमासीत्। स एव श्रीमन्नुदेवस्यकालः स्वीकर्तुं शक्यते।

(घ) **भैरवमिश्रः**—श्रीभैरवमिश्रनामाभिधेयविदुषा वैयाकरणभूषणसारस्य 'परीक्षा' नाम्नी व्याख्या प्रणीता। श्रीभैरवमिश्रेण स्वकीयलिङ्गानुशासनविवरणस्यान्ते यः स्वकीयः परिचय उपस्थापितः तदनुसारं तस्य पितुर्नाम श्रीभवदेवः, गोत्रञ्च 'अगस्त्य' इत्यासीत्। श्रीभैरवमिश्रस्य कालः सं० १८५०-१९०० वैक्रमाब्दपर्यन्तं स्वीकर्तुं शक्यते।

(ङ) **रुद्रनाथः**—श्रीरुद्रनाथेन वैयाकरणभूषणसारस्य 'विवृत्ति' नाम्नी टीका प्रणीता। एतत्विषये न किञ्चिज्ज्ञायते।

(च) **कृष्णमित्रः**—श्रीकृष्णमित्रनामाभिधेयविदुषा वैयाकरणभूषणसारस्य 'रत्नप्रभा' नाम्नी टीका प्रणीता। श्रीकृष्णमित्रेण शब्दकौस्तुभस्याऽपि 'भावप्रदीप' नाम्नी व्याख्या प्रणीता।

## ४. वैयाकरणसिद्धान्तमञ्जूषायाः प्रणेता नागेशभट्टः

श्रीनागेशभट्टेन वैयाकरणसम्मतः 'वैयाकरणसिद्धान्तमञ्जूषा' इत्यभिधेयो दार्शनिकग्रन्थः प्रणीतः। श्रीनागेशभट्टेन महाभाष्यप्रदीद्योतपरिभाषेन्दुशेखरग्रन्थाभ्यां

पूर्णं मञ्जूषायाः प्रणयनं विहितमासीत् । मञ्जूषायाःबृहत्पाठप्रणयनानन्तरं श्रीनागेशभट्ट लघुमञ्जूषां, परमलघुमञ्जूषाञ्च प्रणिनाय । श्रीनागेशभट्टस्य देशकालादिविषये पूर्वमेव विवेचितम् ।

## १५. वैयाकरणसिद्धान्तमञ्जूषायाः टीकाकाराः

श्रीदुर्बलाचार्यनामाभिधेयविदुषा वैयाकरणसिद्धान्तमञ्जूषायाः 'कुञ्जिका' नाम्नी टीका प्रणीता, या प्रकाशिता ।

श्रीवैद्यनाथपायगुण्डयहोदयेन वैयाकरणसिद्धान्तमञ्जूषायाः 'कला' नाम्नी टीका प्रणीता । टीकेयं बालम्भट्ट नाम्ना प्रसिद्धा । अस्य कालः सं० १८२५ वैक्रमाब्दोऽस्ति ।

## १६. ब्रह्मदेवः

वैयाकरणसिद्धान्तलघुमञ्जूषाया एको हस्तलेखो मद्रासराजकीयहस्लेखसंग्रहस्य सूचीपत्रे (३ भागे १ ए खण्डे २७०४ तमे पृष्ठे १९४७ संख्यायां) निर्दिष्टोऽस्ति । तस्य प्रणेतुर्नाम तत्र 'ब्रह्मदेव' इति लिखितमस्ति ।

सूचीपत्रकारस्य लेखश्चेत् समीचीनः स्यात्तर्हि 'वैयाकरणसिद्धान्तमञ्जूषा' नामाभिधेययोर्द्वयोर्ग्रन्थयोरस्तित्वं स्वीकर्तव्यम्भविष्यति । एको नागेशप्रणीतः, अपरो ब्रह्मदेवप्रणीतश्चेति ।

इदमपि सम्भाव्यते यदुक्तो हस्तलेखः नागेशप्रणीतायाः वैयाकरणसिद्धान्तमञ्जूषाया उपरि श्रीब्रह्मदेवप्रणीतायाष्टीकाया भवेत् । अत्रानुसन्धानमपेक्षितमस्ति ।

## १७. जगदीशतर्कालङ्कारः

श्रीजगदीशतर्कालङ्कारभट्टाचार्येण 'शब्दशक्तिप्रकाशिका' नामा प्रौढो ग्रन्थः प्रणीतः । ग्रन्थोऽयं यद्यपि प्राधान्येन न्यायशास्त्रस्याऽस्ति । तथापि, विशेषतः वैयाकरणसिद्धान्तेन सहाऽभिसम्बध्यते ।

श्रीजगदीशतर्कालङ्कारस्य पितामहस्य नाम सनातनमिश्रः, पितुश्च नाम यादवचन्द्रविद्यावागीश आसीत् । सनातनमिश्रः चैतन्यमहाप्रभोः श्वशुर आसीत् । श्रीजगदीशस्य चत्वारो भ्रातर आसन्, तेष्वयं तृतीय आसीत् ।

श्रीजगदीशतर्कालङ्कारेण श्रीभवानन्दसिद्धान्तवागीशात् न्यायशास्त्रमधीतम्। श्रीजगदीशतर्कालङ्कारेण सं० १७११ वैक्रमाब्दे 'शब्दशक्तिप्रकाशिका' इत्यभिधेयो ग्रन्थः प्रणीत आसीत्। एतदतिरिच्य तेनाऽन्येऽप्यनेके न्यायविषयका ग्रन्था अपि प्रणीताः।

श्रीकृष्णकान्तविद्यावागीशनामाभिधेयविदुषा 'शब्दशक्तिप्रकाशिका' ग्रन्थस्यैका विस्तृता टीका सं० १८६६ वैक्रमाब्दे प्रणीता। श्रीकृष्णकान्तस्य गुरुः नवद्वीपनिवासी श्रीरामनारायणतर्कपञ्चानन नामा वैदिको विद्वानासीत्। श्रीकृष्णकान्तेन सं० १८६५ वैक्रमाब्दे न्यायसूत्राणामुपरि 'सूत्रसन्दीपनी' नाम्नी टीकाऽपि प्रणीता।

नवद्वीपनिवासिना श्रीरामभद्रसिद्धान्तवागीशेनाऽपि 'शब्दशक्तिप्रकाशिका' नाम्नी लघ्वी टीका प्रणीता।

इति संस्कृतव्याकरणशास्त्रैतिह्यविमर्शे व्याकरणशास्त्रस्य
दार्शनिकग्रन्थकारवर्णनं नामैकविंशोऽध्यायः

## अथ द्वाविंशोऽध्यायः

# काव्यशास्त्रकारवैयाकरणवर्णनम्

### १. काव्यशास्त्रशब्दार्थः

भारतीयशास्त्रे यवाङ्मये लक्ष्यप्रधानकाव्यानां कृते 'काव्यशास्त्र' शब्दः प्रयुक्तः। आचार्येणक्षेमेन्द्रेण 'सुवृत्ततिलक' इत्यभिधेयग्रन्थस्य तृतीयविन्यासस्याऽऽरम्भे उक्तम्—

'शास्त्रं काव्यं शास्त्रकाव्यं काव्यशास्त्रं च भेदतः।
चतुष्प्रकारः प्रसरः सतां सारस्वतो मतः॥
शास्त्रं काव्यविदः प्राहुः सर्वकाव्याङ्गलक्षणम्।
काव्यं विशिष्टशब्दार्थसाहित्यसदलंकृति॥
शास्त्रकाव्य चतुर्वर्गप्रायं सर्वोपदेशकृत्।
भट्टिभौमककाव्यादि काव्यशास्त्रं प्रचक्षते॥'

अर्थात्—सारस्वतप्रसारं शास्त्रम्-शास्त्र-काव्य-शास्त्रकाव्य-काव्य-शास्त्रभेदेन चतुर्विधम्। काव्यविद आचार्या सर्वविधकाव्य-काव्याङ्गलक्षणबोधकं ग्रन्थं 'शास्त्र' नाम्ना कथयन्ति। यथा काव्यप्रकाशसाहित्यदर्पणादयः। विशिष्टशब्दार्थ-युक्तः सदलङ्कृतियुक्तो ग्रन्थः 'काव्य' नाम्ना ऽभिधीयते। यथा-रघुवंश-कुमारसम्भवप्रभृतयः। चतुर्णां वर्गाणामुपदेशकोग्रन्थः 'शास्त्रकाव्य' नाम्ना ऽभिधीयते। यथा रामायणमहाभारतादयः। तथा च काव्येन सहैव विशिष्टविषयस्य व्याकरणादेः शिककं काव्यं काव्यशास्त्र' नाम्नाऽभिधीयते। यथा भट्टिभौमककाव्यादि।

अनेन लक्षणेन स्पष्टम् यत् यो ग्रन्थः काव्यं सत् कस्यचन विशिष्टस्य विषयस्य-शासनं कुर्यात् तर्हि सः 'काव्यशास्त्र' पदवाच्यो भवति। साहित्यग्रन्थेष्वनेकान्येतादृशानि काव्यानि सन्ति, यानि व्याकरणशास्त्रस्य बोधायैव विशेषरूपेण प्रणीतानि। यद्यप्युक्तलक्षणानुसारमेतादृशग्रन्थानां कृते 'काव्यशास्त्र' पदं रूढम्, तथापि शब्दस्याऽस्योक्ते विशेष्टेऽर्थे प्रसिद्धयभवात् मयाऽत्र 'लक्ष्यप्रधानकाव्य' शब्दः प्रयुक्तः।

## २. लक्ष्यप्रधानकाव्यरचनायाः प्रयोजनम्

व्याकरणशब्दार्थं व्याचक्षाणेन भगवता कात्यायनेनोक्तम्—

'लक्ष्यलक्षणे व्याकरणम्'

वार्तिकमिदं व्याचक्षाणेन भगवता पतञ्जलिनोक्तम्—

'लक्ष्यं लक्षणं चैतत्[1] समुदितं व्याकरणं भवति। किं पुनर्लक्ष्यम्? किं वा लक्षणम्? शब्दो लक्ष्यः, सूत्रं लक्षणम्।'

व्याकरणशब्दः वि आङ्पूर्वात् डुकृञ् करणे इत्यस्माद्धातोर्ल्युटि प्रत्यये कृते सति निष्पद्यते। ल्युट् प्रत्ययः करणाधिकरणादिषु भवति। करणे ल्युटि सति—व्याक्रियन्ते—व्युत्पाद्यन्ते शब्दा अनेनेति व्याकरणम् इति व्याकरणशब्दार्थः सम्पद्यते। परन्तु कर्मणि ल्युटिसति—व्याक्रियते यत् तत् व्याकरणम् इति व्युत्पत्त्यनुसारं लक्ष्यं अर्थात् शब्द एव व्याकरणशब्दार्थो निष्पद्यते। पतञ्जलिनोक्तम्—

'अयं तावददोषः[2]—यदुच्यते 'शब्दे ल्युडर्थः' इति। नावश्यं करणाधिकरणयोरेव ल्युड् विधीयते। किन्तर्हि। अन्येष्वपि कारकेषु—'कृत्यल्युटो बहुलम्' इति। तद्यथा-प्रस्कन्दनम् प्रपतनमिति।'

अनेन विवेचनेन स्पष्टम् यद् व्याकरणशब्दस्य क्षेत्रं लक्ष्यं लक्षणं चोभयं यावदभिव्याप्तमस्ति। लक्षणमात्रस्य कृते व्याकरणशब्दः प्रोक्तरूपमर्थविशेषमाश्रित्य प्रयुज्यते।

व्याकरणशब्दस्योपरिनिर्दिष्टं व्यापकमर्थं दृष्टिपथमानीयानेकैर्व्याकरणप्रवक्तृभिर्यत्र लक्षणग्रन्थानां प्रवचनं विहितम्, तत्रैव तादृशलक्षणानां चारितार्थ्यंप्रदर्शयितुं तेषां लक्ष्यभूतशब्दविशेषान् संकलय्य लक्ष्यस्वरूपकाव्यग्रन्था अपि प्रणीताः।

## ३. जाम्बवतीविजयकाव्यप्रणेता आचार्यः पाणिनिः

प्राचीनेषु वैयाकरणेषु पाणिनिरेवैतादृशो वैयाकरणः, येषां काव्यस्रष्टृत्वं न

१. पतञ्जलि—महाभाष्यम्, नवाह्निकम्, पृ० ७१।

२. तदेव, पृ० ७१॥

केवलं वैयाकरणनिकाये प्रसिद्धम्, अपितु काव्य वाङ्मयस्येतिहासेऽपि मूर्द्धाभिषिक्त-मस्ति।

पाणिनिप्रणीतकाव्यस्य नाम 'जाम्बवतीविजयः' इत्यस्ति। अस्याऽपरं नाम 'पातालविजयो' ऽप्यस्ति। भगवता पाणिनिना महाकाव्येऽस्मिन् भगवता श्रीकृष्णेन पाताललोके गत्वा कृतो जाम्बवतीविजयः परिणयश्चो वर्णितः।

डॉ० पीटर्सनप्रभृतयः पाश्चात्या विद्वांसस्तदनुयायिनः डॉ० भण्डारकरप्रभृतयो भारतीया विद्वांसश्च जाम्बवतीविजयकाव्यस्योपलब्धानामुद्धरणानां लालित्यपूर्णां सरसां रचनां, क्वचिच्च व्याकरणस्योत्सर्गनियमानामुल्लङ्घनं दृष्ट्वा कथयन्ति यत् काव्यमिदं शुष्कवैयाकरणस्य पाणिनेः कृतिर्नास्ति।

वस्तुतस्तु, सत्यभारतीयैतिह्यदृष्ट्या विचारणायां कल्पनेयं सर्वथा मिथ्येति प्रमाणिता भवति। भारतीयवाङ्मयेऽसन्दिग्धरूपेण काव्यमिदं वैयाकरणपाणिनेः कृतित्वेन स्वीकृतम्। अनेके वैयाकरणाः अष्टाध्यायीतोऽप्रसिद्धशब्दानां साधुत्वं दर्शयितुं काव्यमिदं पाणिनीयम्मत्वा समुद्धरन्ति। अतः परं जाम्बवतीविजय-काव्यस्य पाणिनीयकृतित्वे प्रमाणान्युपस्थाप्यन्ते—

१. सं० ९५० वैक्रमाब्दीयेन श्रीराजशेखरेण पाणिनेराचार्यस्य प्रशंसाया-मुक्तम्—

'नमः पाणिनये तस्मै यस्मादाविरभूदिह।
आदौ व्याकरणं काव्यमनु जाम्बवतीविजयम्॥'

२. सं० १२०० वैक्रमाब्दीयेन श्रीधरदासेन प्रणीते सदुक्तिकर्णामृतग्रन्थे सुबन्धुरघुकार ( द्वितीयकालिदास ) हरिश्चन्द्र–भारवि–भवभूतिप्रभृतिभिः कविभिः सह दाक्षीपुत्रस्याऽपि नाम गृहीतम्। दाक्षीपुत्र इति पाणिनेरपरं नाम। तथा चोक्तम्—

'सुबन्धौ भक्तिर्नः क इह रघुकारे न रमते,
धृतिर्दाक्षीपुत्रे हरति हरिश्चन्द्रोऽपि हृदयम्।
विशुद्धोक्तिः शूरः प्रकृतिमधुरा भारविगिर-
स्तथाप्यन्तर्मोदं कमपि भवभूतिर्वितनुते॥'

३. वैक्रमद्वादशशतकीयः क्षेमेन्द्रः 'सुवृत्ततिलक' इत्यभिधेये स्वकीये छन्दोग्रन्थे पाणिनेरुपजातिछन्दोऽत्यन्तं प्रशशंस । तेनोक्तम्—

'स्पृहणीयत्वचरितं पाणिनेरुपजातिभिः ।
चमत्कारैकसाराभिरुद्यानस्येव जातिभिः ।।'

४. महाराजसमुद्रगुप्तप्रणीतस्य 'कृष्णचरित्रस्य' कश्चिदंश उपलब्धः तस्याऽऽरम्भे दशानां मुनिकवीनां वर्णनमस्ति । प्रारम्भस्य द्वादशमिताः श्लोकाः खण्डिताः। अग्रिमेभ्यः श्लोकेभ्यो ज्ञायते यत् खण्डितेषु श्लोकेषु पाणिनेर्वर्णनमवश्यमासीत् । वररुचि-कात्यायनप्रसङ्गे उक्तम्—

'न केवलं व्याकरणं पुपोष दाक्षीसुतस्येरितवार्तिकैर्यः ।
काव्येऽपि भूयोऽनुचकार तं वै कात्यायनोऽसौ कविकर्मदक्षः ॥'

पुनश्चोक्तम् महाकविभासप्रकरणे—

'अयं च नान्वयात् पूर्णं दाक्षीपुत्रपदक्रमम्'

भासप्रणीतनाटकेषु बहुधा प्रयुक्ता अपाणिनीयशब्दास्तथ्यमिदं साधयन्ति ।

५. महाभाष्यकारेण भगवता पतञ्जलिना पाणिनिः कविरुक्तः—

'वृविशासिगुणेन च [1] यत् सचते तदकीर्तितमाचरितं [2] विना ।'

६. वैक्रमद्वादशशतकीयः पुरुषोत्तमदेवः भाषावृत्तौ जाम्बवतीविजयकाव्यस्पाणिनीयम्मत्वा समुद्धरति—

'इति पाणिनेर्जाम्ब[2]वतीविजयकाव्यम्'

७. पुरुषोत्तमदेवात् परवर्ती शरणदेवोऽपि स्वकीयदुर्घटवृत्तौ बहुत्र जाम्बवतीविजयकाव्यं सूत्रकारपाणिनिप्रणीतम्मत्वा समुद्धरति ।[3]

८. यशस्तिलकचम्प्वां श्रीसोमदेव सूरिणोक्तम्—

'पणिपुत्र [4]इव पदप्रयोगेषु ।'

---

१. पतञ्जलि—महाभाष्यम्, १।४।५१ ।।

२. पुरुषोत्तमदेव—भाषावृत्ति, २।४।७४ तम पाणिनीयसूत्रव्याख्या ॥

३. शरणदेव – दुर्घटवृत्ति, ४।३।२३, पृ० ८२, प्रथमसंस्करणम् ॥

४. सोमदेव सूरि – यशस्तिलकचम्पू, आ० २, पृ० २२६ ॥

अत्र श्रीसोमदेवसूरिणा पाणिनेर्ये विशिष्टाः पदप्रयोगाः सङ्केतिताः, ते निश्चितरूपेणैव जाम्बवतीविजये प्रयुक्ताः। पाणिनीयसूत्रपाठस्य न भवितुमर्हन्ति।

एतैः प्रमाणैः सिद्धम् यत् जाम्बवतीविजयमहाकाव्यस्य प्रणेता शब्दानुशासन-सूत्रकारः पाणिनिरेवाऽस्ति।

जाम्बवतीविजयकाव्यम् सम्प्रत्यनुपलब्धम्। अतस्तद्विषये किञ्चिद्वक्तु दुष्करमेव। दुर्घटवृत्तिकारेण शरणदेवेन जाम्बवतीविजयमहाकाव्यस्याऽष्टादश-दर्गस्यैकमुद्धरणम्प्रदत्तम्।[1] तेन ज्ञायते यत् जाम्बवतीविजयमहाकाव्ये प्रायेणाऽष्टा-दशमिताः सर्गा अवश्यमेवासन्।

## व्याडिः

बहुकालं यावत् महामुनिर्व्याडिः केवलं वैयाकरणरूपेण—वैयाकरणिकदार्शनिक-ग्रन्थकाररूपेण प्रसिद्धा आसीत्, किन्तु महाराजसमुद्रगुप्तप्रणीतस्य कृष्णचरितस्य केषुचिदंशेषूपलब्धेषु सत्सु वैयाकरणाचार्यस्य व्याडेर्महाकाव्यकर्तृत्वमपि स्पष्टतया परिलक्ष्यते। कृष्णचरितग्रन्थस्य मुनिकविवर्णनप्रसङ्गे लिखितम्—

'रसाचार्यः कविर्व्याडिः शब्दब्रह्मैकवाङ्मुनिः।
दाक्षीपुत्रवचोव्याख्यापटुर्मीमांसकाग्रणीः॥
बलचरितं कृत्वा यो जिगाय भारतं व्यासं च।
महाकाव्यविनिर्माणे तन्मार्गस्य प्रदीपमिव॥'

श्लोकाभ्यामेताभ्यां स्पष्टम् महामुनिना व्याडिना भारतादपि बृहदाकारं बलचरितं प्रणीत मासीत्। व्याडेराचार्यस्य काव्यप्रणेतृत्वस्य पुष्टिरमरकोषस्याऽ-ज्ञातकर्तृकया टीकयाऽपि भवति। टीकेयं मद्रासराजकीयहस्तलेखसंग्रहे सुरक्षिता। तस्या १८१ तमे पृष्ठे व्याडेरधोलिखितः पद्यांशः समुद्धृतः—

'कमपि भुभुवनाङ्कोणम्—इति व्याडिभाषासमावेशः।'

अनेनोद्धरणेन स्पष्टं ज्ञायते यद्व्याडेः कस्मिंश्चित् काव्ये भट्टिकाव्यस्य द्वादश-सर्गवत् 'भाषासमावेश' इत्यभिधेयः कश्चन भाग आसीत्। व्याडेः कालादिविषये

१. त्वया सहार्जितं यच्च यच्च सख्यं पुरातनम्। चिराय चेतसि पुरुतरुणीकृत-मद्य मे। इत्यष्टादशे दुर्घटवृत्ति, ४।३।२३, पृ० ८२॥

पूर्वमेव चर्चितम् ।

## ५. वररुचिकात्यायनः

भगवता पतञ्जलिना महाभाष्ये (४।३।१०१) वाररुचकाव्यस्य साक्षादुल्लेखो विहितः । वररुचिरयं वार्तिककारः कात्यायनो वररुचिरेवाऽस्ति ।

महाराजेन समुद्रगुप्तेन स्वकीये कृष्णचरितग्रन्थे मुनिकविवर्णनप्रसङ्गे लिखितम्—

'यः स्वर्गारोहणं कृत्वा स्वर्गमानीतवान् भुवि ।
काव्येन रुचिरेणासौ ख्यातो वररुचिः कविः ॥
न केवलं व्याकरणं पुपोष दाक्षी सुतस्येरितवार्तिकैर्यः ।
काव्येऽपि भूयोऽनुचकार तं वै कात्यायनोऽसौ कविकर्मदक्षः ॥'

कात्यायनप्रणीतस्य स्वर्गारोहणकाव्यस्योल्लेखः नल्हणस्य "सूक्तिमुक्तावली" इत्यभिधेये ग्रन्थेऽप्युपलभ्यते । तत्र राजशेखरस्याऽधोलिखितः श्लोकः समुद्धृतः—

'यथार्थता कथं नाम्नि मा भूद् वररुचेरिह ।
व्यधत्त कण्ठाभरणं यः सदारोहणप्रियः (स्वर्गारोहणप्रियः) ॥'

कात्यायनवररुचिना महाकाव्यग्रन्थमतिरिच्य साहित्यशास्त्रस्य कश्चन लक्षणग्रन्थोऽपि प्रणीतः । भरतमुनिप्रणीतनाट्यशास्त्रटीकायामुक्तम् श्रीमताऽभिन[1]व गुप्तेन—

'यथोक्तं कात्यायनेन—
वीरस्य भुजदण्डानां वर्णने स्रग्धरा भवेत् ।
नायिकावर्णनं कार्यं वसन्ततिलकादिकम् ॥
शार्दूललीला प्राच्येषु मन्दाक्रान्ता च दक्षिणे ॥ इति ।'

एवमेव शृङ्गारप्रकाशे (पृष्ठे ५३ तमे) ऽप्युक्तम्—

'तथा च कात्यायनः—
उत्तारणाय जगतः प्रपितामहेन

---

१. अभिनवगुप्त—भरतनाट्यशास्त्र, टीका भाग २, पृष्ठ २४५, २४६ ॥

तस्मात् पदात् त्वमसि प्रवृत्ता ।'

आचार्यस्य वररुचिकात्यायनस्याऽनेके श्लोकाः शाङ्र्गधर–पद्धति–सदुक्ति-कर्णामृत–सुभाषितरत्नावलीप्रभृतिषु ग्रन्थेषूपलभ्यन्ते ।

## ६. पतञ्जलिः

महाभाष्यकारेण पतञ्जलिना "महानन्द" नामा 'महानन्दमय' नामा वा कश्चन काव्यग्रन्थोऽपि प्रणीतः । महाराजेन समुद्रगुप्तेन स्वकीये कृष्णचरिते मुनि-कविवर्णनप्रसङ्गे महाभाष्यकारं पतञ्जलिं वर्णयतोक्तम्—

'महानन्दमयं काव्यं योगदर्शनमद्भुतम् ।
योगव्याख्यानभूतं तद् रचितं चित्तदोषापहम् ॥'

सदुक्तिकर्णामृते भाष्यकारनाम्नाऽधोलिखितः श्लोकः समुद्धृतः—

'यद्यपि स्वच्छभावेन दर्शयत्यम्बुधिर्मणीन् ।
तथापि जानुदघ्नेयमिति चेतसि मा कृथाः ॥'

अत्र सम्भवतः 'जानुदघ्नोऽयं' इति पाठः शुद्धो भवेत्, अन्यथा भाष्यकारमतेन 'अम्बुधि' शब्दस्य स्त्रीलिङ्गत्वमपि स्वीकर्तव्यम् । श्री पं० युधिष्ठिरमीमांसक-महोदयमतानुसारं वासुकि नाम्ना साहित्यशास्त्रग्रन्थः वैयाकरणपतञ्जलेरेवाऽस्तीति सम्भावनया पतञ्जलेः काव्यप्रणेतृत्वं पुष्यते ।

## ७. रावणार्जुनीयकाव्यप्रणेता भट्टभूमः

भट्टभूम नामाभिधेयविदुषा 'रावणार्जुनीय' अथवा 'अर्जुनरावणीय' इत्याख्यं लक्ष्यलक्षणप्रधानं काव्यम्प्रणीतम् । काव्यमिदं सम्प्रत्युपलभ्यते ।

श्रीभट्टभूमेन स्वग्रन्थे स्वकीयः कश्चिदपि परिचयो नोपस्थापितः । अतोऽस्य महाकवेरितिवृत्तमन्धकारावृतमेव । मुद्रित ग्रन्थस्यान्तेऽधोलिखिता पुष्पिकोपलभ्यते—

'कृतिस्तत्र भवतो महाप्रभाव श्रीशारदादेशान्तर्वर्त्तिवल्लभीस्थान-निवासिनो भूमभट्टस्येति शुभम् । वल्लभीस्थानं उड्डु इति ग्रामो वराह-मूलोपकण्ठस्थितः ।'

अनया पुष्पिकयेदमेव ज्ञायते यद् भट्टभूमः काश्मीरवास्तव्य आसीत् एतस्य निवासस्थानं 'वल्लभी' इत्यासीत् । तत् स्थानं वराहमूलं निकषा स्थितः 'उड्डु' इत्याख्यो ग्रामोऽस्ति ।

क्षेमेन्द्रेण स्वकीयस्य 'सुवृत्ततिलक' इत्याख्यग्रन्थस्य तृतीयविन्यासस्य चतुर्थश्लोके श्रीभट्टभूमप्रणीतस्य भौमककाव्यस्य साक्षादुल्लेखो विहितः[१]। तेनेदं निश्चीयते यद् भट्टभूमः सं० १०९० वैक्रमाब्दात् पूर्ववर्ती त्ववश्यमेवाऽस्ति।

श्री वी० वरदाचार्यमहोदयेन काशिकावृत्तौ रावणार्जुनीयकाव्यस्य निर्देशः स्वीकृतः। तथा च तेन भौमकप्रणीतरावणार्जुनीयकाव्यप्रभावं भट्टिकाव्योपरि स्वीकृत्य श्रीभट्टभूमस्यकालः पञ्चमशतकं स्वीकृतम्। श्री पण्डित युधिष्ठिरमीमांसकमहोदयोऽपि श्रीभट्टभूमस्य कालः सं० ६०० वैक्रमाब्दः स्वीकरोति।

काव्येऽस्मिन् कार्तवीर्यार्जुनरावणयोर्युद्धस्य वर्णनमस्ति। अत एव द्वन्द्वसमासानन्तरम् छ प्रत्यये, तस्य ईयादेशे च "रावणार्जुनीयम्" "अर्जुनरावणीयम्" इति वा सम्पद्यते।

श्रीभट्टभूमेन काव्येऽस्मिन् पाणिनीयाष्टाध्याय्याः स्वरवैदिकविषयक सूत्राणि परित्यज्य पाणिनीयसूत्रक्रमेण तत्तत् सूत्रसिद्धानां विशिष्टानाम्प्रयोगाणां निदर्शनस्य प्रयासो विहितः। अष्टाध्याय्याः प्रथमपादः संज्ञापरिभाषात्मकोऽस्ति, साक्षात् शब्दसाधको नास्ति। अत एव ग्रन्थकारेण ग्रन्थस्याऽस्यारम्भोऽष्टाध्याय्याः द्वितीयपादस्य प्रथमसूत्राद् विहितः।

प्रारम्भे काव्यस्याऽस्यैका प्रतिलिपिः काश्मीरादुपलब्धा, साऽपि मध्ये मध्ये त्रुटिताऽऽसीत्। तत एव विभिन्नकालेषु विहितप्रतिलिपिद्वयमाधारीकृत्य श्री पं० काशीनाथ–शिवदत्तमहोदयाभ्यां ग्रन्थस्याऽस्य सम्पादनं विहितम्। अत एव निर्णयसागर मुद्रणालयस्य काव्यमालान्तर्गते प्रकाशितो ग्रन्थः स्थाने स्थाने त्रुटितो वर्तते। काव्यस्याऽस्यैको हस्तलेखः वासुदेवकृतटीकायुतः मद्रासराजकीयहस्तलेखसंग्रहे[२], द्वितीयश्च हस्तलेखः लन्दन नगरस्य इण्डियाआफिसपुस्तकालये[३] समुपलभ्यते।

---

१. भट्टिभौमककाव्यादि काव्यशास्त्रं प्रचक्षते।

२. द्र० मद्रास राजकीय हस्तलेख संग्रह सूचीपत्र भाग ४, खण्ड १, पृ० ४७८१ संख्या ३९५४॥

३. द्र० लन्दन इण्डिया आफिस पुस्तकालय सूचीपत्र भाग २, खण्ड २॥

## ८. भट्टिकाव्यकारो भट्टिः

महाकाव्यानां क्षेत्रे भारवेरनन्तरं महाकविभट्टेर्नाम आयाति । भट्टभूमवदयमपि वैयाकरणकविरस्ति । सौराष्ट्रप्रदेशस्य सुसम्पन्नायाः 'वलभी'ति नामधेयाया नगर्याः श्रीधरसेनेति नामधेयस्य नरेशस्य शासनकाल एव महाकविभट्टिमहोदयेन 'रावणवध' ( भट्टिकाव्य ) इत्याख्यस्य ग्रन्थस्य रचना विहिता । स्वकीयमहाकाव्यग्रन्थस्य पुष्पिकायां तेन स्वाश्रयदातुश्श्रीधरसेनस्य प्रजावत्सलत्वं तस्याश्रये च स्वीयकाव्यग्रन्थरचनाया अपि वर्णनं विहितम् । तद्यथा—

'काव्यमिदं विहितं[1] मया वलभ्यां श्रीधरसेनपालितायाम् ।
कीर्तिरतो भवतान्नृपस्य तस्य क्षेमकरः क्षिपतो यतः प्रजानाम् ॥'

अद्यावधि समुपलब्धेषु शिलालेखेषु 'श्रीधरसेन' नाम्ना चतुर्णां राज्ञां सत्तायाः सङ्केत उपलभ्यते, येष्वेकः शिलालेखः ३२६ वैक्रमाब्दीय उपलभ्यते ।[2] अनेन ज्ञायते यद् वलभीराज्यकालस्याऽऽरम्भोऽस्मिन्नेव काले जातः । द्वितीयश्रीधरसेन नाम्नोपलब्धशिलालेखे 'भट्टि' नामधेयाय कस्मैचिद्विदुषे भूमिदानस्य वर्णनमस्ति । अयमेव श्रीधरसेनः भट्टेराश्रयदाता प्रशंसकश्चाऽऽसीदस्य समयश्च षष्ठशतकस्योत्तरार्द्धतः सप्तमशतकारम्भ आसीदिति कृत्वा भट्टेः समयः षष्ठशतकोत्तरार्द्धतः सप्तमशतकारम्भो मन्तव्य इति श्रीसेठकन्हैयालालपोद्दारमहोदयमतम् ।[3]

महाकविभट्टेः कालविषयेऽनेकानि मतानि प्रसिद्धानि । वलभीनगर्यां श्रीधरसेननामानश्चत्वारो राजानः समभूवन् । तेषां कालः सं० ५५० वैक्रमाब्दात् ७०५ वैक्रमाब्दं यावत् स्वीक्रियते । एतेषु कस्य श्रीधरसेनस्य काले भट्टिकाव्यं लिखितमिति कथनन्तु दुष्करमेव । भागवृत्तिव्याख्याकारस्य श्रीसृष्टिधरस्य वचनानुसारेण भागवृत्तेः प्रणयनमपि वलभ्याः कस्यचित् श्रीधरसेननाम्नो नरेन्द्रस्य काले जातम् ।

---

१. भट्टि—भट्टिकाव्यम्, ( रावणवधम् ; २२।३५ ॥

२. दि कलेक्टेड वर्क्स ऑफ भण्डारकर, वाल्यूम ३, पृ० २२८ ॥

३. सेठ कन्हैयालाल पोद्दार : संस्कृत साहित्य का इतिहास, भाग १, पृ० १०६ ( १९३८ ) ।

श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयानां मतानुसारेण भागवृत्तेः प्रणयनं चतुर्थश्रीधरकाले ( सं० ७०२-७०५ वै० ), भट्टिकाव्यस्य च प्रणयनं तृतीयश्रीधरसेनस्य काले ( सं० ६६०–६७७ वै० ) जातम्। 'संस्कृत कवि दर्शन' इति ग्रन्थस्य प्रणेत्रा डॉ० भोलाशाङ्करव्यासमहोदयेन भट्टिकाव्यस्य रचना द्वितीयश्रीधरसेनस्य काले स्वीकृता, तत्समयश्च ६१० ई०–६१५ ई० ( ६६७ वै०–६७२ वै० ) सूचितः। द्वितीयश्रीधरसेनस्य कालः प्रायः ६२८ वै०–६४६ वै० (५७१ ई०—५८० ई०) स्वीक्रियते। अतः प्रतीयते यदनवधानतया डा० व्यासमहोदयेन 'तृतीयश्रीधरसेन' पाठस्य स्थाने 'द्वितीयश्रीधरसेन' इति लिखितं भवेत्। अतो महाकविभट्टेः कालः तृतीयश्रीधरसेनस्य काले अर्थात् सं० ६६० वैक्रमाब्दतः ६७१ वैक्रमाब्दं यावत् ( ६१० ईशवीयतः ६१५ ईशवीयं यावत् ) स्वीकर्तव्यः।

भट्टिकाव्यस्यान्तिमेन श्लोकेन ज्ञायते यत् महाकविर्भट्टिर्गुर्जरप्रदेशान्तर्गतायाः वलभीनगर्याः वास्तव्य आसीत्। भट्टिकाव्यस्य सुप्रसिद्धजयमङ्गलाटीकाकारमतानुसारेण महाकविभट्टेः पितुर्नाम श्रीस्वामीति, किन्तु भट्टिचन्द्रिकाप्रणेतुः श्रीविद्याविनोदस्य मतानुसारेण तन्नाम श्रीधरस्वामीति। सम्भवतः श्रीस्वामीतिनाम 'श्रीधरस्वामी'ति नाम्न एकदेशि वर्तते, अतो महाकविभट्टेः पितुर्नाम 'श्रीधरस्वामी' त्येव युक्तम्प्रतीयते।

केषाञ्चिदैतिहासिकानां विदुषाम्मतमस्ति यन्महाकविर्भट्टिरयं द्वितीयश्रीधरसेनस्य राजपुत्राणां गुरुरासीत्तेषां च शिक्षार्थमेव काव्यमय्यां भाषायां सः स्वीयव्याकरणशास्त्रपरकं भट्टिमहाकाव्यं प्रणिनाय।[1]

**भट्टिकाव्यप्रणेतुर्नाम**—भट्टिकाव्यस्य प्रणेतुर्वास्तविकं नाम किमासीदिति विषये विद्वत्सु पर्याप्तं वैमत्यमवलोक्यते। जटीश्वर-जयदेव-जयमंगलेत्येतैस्त्रिभिर्नामभिर्व्यवहृतेन विदुषा स्वीय 'जयमङ्गला' टीकायाः प्रारम्भे लिखितम्—

'लक्ष्यं लक्षणं चोभयमेकत्र प्रदर्शयितुं श्रीस्वामिसूनुः कविर्भट्टिनामा रामकथाश्रयमहाकाव्यं चकार।'

एतदनुसारेण कवेर्नाम भट्टिरस्ति। अन्ये प्रायः सर्वे टीकाकाराः भट्टिकाव्यस्य

१. डा० भोलाशंकर व्यास—संस्कृत कवि दर्शन, पृ १४२।

रचयितुर्नाम 'भर्तृहरि' रिति स्वीकुर्वन्ति । तथा हि—

१—भर्तृहरिकाव्यदीपिकाप्रणेत्रा श्रीजयमङ्गलमहोदयेनोक्तम्—

'कविकुलकृतिकैरवकरहाट: श्रीभर्तृहरिः कविर्भट्टिकाव्यं चिकीर्षुः ।[1]'

२—श्रीकन्दर्पशर्मणोक्तम्—

'अत्र तावन्महामहोपाध्यायश्रीभर्तृहरिकविना शब्दकाव्ययोर्लक्षण-लक्षितानि........[2] ।'

३—'भट्टिचन्द्रिका' ग्रन्थप्रणेत्रा श्रीविद्याविनोदेनोक्तम्—

"अत्र कविना श्रीधरस्वामिसूनुना भर्तृहरिणा सर्गबन्धो महाकाव्य-लक्षणसूचनाय.......... ।[3]"

४—'व्याख्यासार' नाम्न्या: टीकाया अज्ञातनाम्ना लेखकेनोक्तम्—

'अथाशेषविशेषेण बालान् व्युत्पिपादयिषुः श्रीमद्भर्तृहरिकृतस्य रामायणानुयायि-भट्ट्याख्यग्रन्थस्य..........[4] ।'

५—'भट्टिबोधिनी' टीकाप्रणेत्रा श्रीहरिहरेणोक्तम्—

'परिवृढ्यन् भर्तृहरिः काव्यप्रसंगेन.......... ।'

६—मल्लिनाथोऽपि भट्टिकाव्यं भर्तृहरेः कृतित्वेन स्वीकरोति ।

अनेकैर्ग्रन्थकारैर्भट्टिकाव्यं 'भर्तृकाव्य' नाम्ना समुद्धृतम् ।

तथाहि—

७—पञ्चपाद्युणादिवृत्तिकारेण श्रीश्वेतवनवासिनोक्तम्—

(क) 'तथा च भर्तृकाव्ये[5] प्रयोगः—भुवनहितच्छलेन ( भट्टि १।१ ) इति ।'

---

१. इण्डिया आफिस लाइब्रेरी सूचीपत्र, भाग १, खण्ड २ संख्या ९२१-९२२ ।

२. तदेव, भाग १, खण्ड २, संख्या ९२१ से आगे ।

३. मद्रास राजकीय हस्तलेख संग्रह, सूचीपत्र, भाग ९, पृ० ७६६२, संख्या ५७१२ ।

४. तदेव, भाग ९, पृ० ७६६१, संख्या ५७१० ।

५. उणादि २।८०, पृ० ८३ ।

(ख) 'तथा च भर्तृकाव्ये[1] प्रयोगः—

सम्प्राप्य तीरं तमसापगायाः गङ्गाम्बुसम्पर्कविशुद्धिभाजः ( भट्टि ३।३९ ) इति।'

श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयाः भट्टिकाव्यप्रणेतुर्नाम 'भर्तृहरि' रित्येव स्वीकुर्वन्ति। एवमत्र 'भर्तृ' रूपात् 'भट्टि' इति प्राकृतरूपं कल्पयित्वा भर्तृहरि-भट्टिकाव्योरभेदः साधितः। एवमेव चतुः शताब्दीशेषभागस्थ एव मन्दसौरसूर्य-मन्दिरे वत्सभट्टिशब्दोल्लेखात् प्रो० मजुमदारप्रभृतय ऐतिहासिकाः मन्दसौर-प्रशस्तिरचयितुर्वत्सभट्टितः भट्टिकवेस्सम्बन्धं योजयित्वा भट्टिकाव्यकारं गुप्तकालीनं साधयन्ति। किन्तु सम्प्रत्येतासां भ्रान्तिपूर्णधारणानां सर्वथा निराकरणं जातम्।[2] डा० हल्ट्स ( **Hultzsch** ) महोदयेन भ्रान्तीनामेतासां पूर्णरूपेण प्रत्याख्यानं विहितम्।[3]

महाकविकालिदासादारम्य भट्टि यावत् काव्यपरम्परायाः वैशिष्ट्यानि विभिन्न-ताश्च विश्लेषयता डा० भोलाशङ्करव्यासमहोदयेनोक्तम् यद् भारविकवौ कालि-दासोत्तरकाव्यस्य पाण्डित्यप्रदर्शनप्रवृत्तेः, कलात्मकसौष्ठवस्य चैकः पक्षो दृश्यते, भट्टिकवौ चाऽपरः। भारविर्मूलतः कविः, यः स्वकाव्यं विद्वद्भिरुच्यनुरूपं प्रणयति; किन्तु, भट्टिर्मूलतो वैयाकरणोऽलङ्कारशास्त्री चाऽस्ति; यो व्याकरणस्याऽलङ्कार-शास्त्रस्य च सिद्धान्तान् व्युत्पित्सूनां सुकुमारमतीनां राजपुत्राणां भाविकाव्यमार्ग-पथिकानाञ्च कृते काव्यव्याजेन निबध्नाति। भारविभट्टिमहोदययोः काव्यानां लक्ष्यं विभिन्नमस्ति। कालिदासो रसवादी कविः, भारविः कलावादी, अश्वघोषः दार्शनिकोपदेशवादी कविः, भट्टिश्च व्याकरणशास्त्रोपदेशी कविरस्ति।[4]

---

१. तदेव, ३।१ १, पृ० १२६॥

२. कीथ : हिस्ट्री आफ संस्कृत लिटलेचर, पृ० १७५-१७७ तथा जे० आर० ए० एस० पृ० ३९५३९७ ( १९०४ ) पृ० ४३५ ( १८०९ )॥

३. एपिग्राफिया इण्डिका, पृ० १२॥

४. डा० भोलाशङ्कर व्यास : संस्कृत कवि दर्शन, पृ० १४०।

## ९. भट्टिकाव्यस्य वैशिष्ट्यम्

काव्यशास्त्रस्य परम्परायां महाकविर्भट्टिः सर्वाग्रगण्यो मन्यते। अस्य कृतिः 'भट्टिकाव्य' नाम्नैव प्रसिद्धाऽस्ति। अस्याऽपरं नाम 'रावणवधम्' इत्यस्ति। भट्टिकाव्यम् महाकविक्षेमेन्द्रः स्वकीये सुवृत्ततिलके[1] 'काव्यशास्त्र' नाम्ना निरूपयति। तथाहि—

'शास्त्रं काव्यं शास्त्रकाव्यं काव्यशास्त्रं च भेदतः।
चतुष्प्रकारः प्रसरः सतां सारस्वतो मतः॥
शास्त्रं काव्यविदः प्राहुः सर्वकाव्याङ्गलक्षणम्।
काव्यं विशिष्टशब्दार्थसाहित्यसदलङ्कृति॥
शास्त्रकाव्यं चतुर्वर्गप्रायं सर्वोपदेशकृत्।
भट्टिभौमककाव्यादि काव्यशास्त्रं प्रचक्षते॥'

भट्टिमहाकाव्यस्य रचना स्वयं ग्रन्थकारस्य मतानुसारेण श्रीधरसेनस्य राज्यकाले सौराष्ट्रस्य वलभीनगर्यां जाता[2]। गुप्तसाम्राज्यस्य पतने वलभ्याः नरेशाः पण्डितेभ्य आश्रयं दत्तवन्तः।

महाकविभट्टे र्भट्टिकाव्यस्य (रावणवधकाव्यस्य) आधारो वाल्मीकीयरामायणमस्ति। श्रीरामजन्मतः श्रीरामराज्याभिषेकपर्यन्तस्य रामायणकथा भट्टिर्द्वाविंशति-
कीर्तिरतो भवतान्नृपस्य तस्य क्षेमकरः क्षिपतो यतः प्रजानाम्॥
सर्गेषु निबद्धवान्। भट्टेरुद्देश्यं काव्यस्येतिवृत्ते विशेषेणावधानं नास्ति, किन्तु तदीयं मुख्यमुद्देश्यमस्ति व्याकरणसम्मतानां शुद्धप्रयोगाणां निदर्शनम्। महाकविना एते द्वाविंशतिमिताः सर्गाश्चतुर्षु काण्डेषु विभक्ताः—प्रकीर्णकाण्ड-अधिकारकाण्ड-प्रसन्नकाण्ड-तिङन्तकाण्डभेदात्।

तत्र पूर्वपञ्चसर्गाः प्रकीर्णकाण्डनाम्ना प्रसिद्धाः। काण्डेऽस्मिन् श्रीरामजन्मतः श्रीरामप्रवाससीताहरणपर्यन्ता कथा वर्णिताऽस्ति। व्याकरणशास्त्रनियमदृष्ट्या पूर्वे चत्वारः सर्गाः योजनाबद्धा न सन्ति, भागेऽस्मिन्, प्रसन्नकाण्डे च भट्टेः कवित्वशक्तेरुत्तमः परिचय उपलभ्यते।

---

१. क्षेमेन्द्र—सुवृत्ततिलक, ३।२, ३, ४॥

२. काव्यमिदं विहितं मया वलभ्यां श्रीधरसेननरेन्द्रपालितायाम्।

षष्ठ-सप्तमाऽष्टम-नवमसर्गा अधिकारकाण्डनाम्ना प्रख्याताः। एतेषु चतुर्षु सर्गेषु सुग्रीवाभिषेक-सीतान्वेषणाऽशोकवनिकाभङ्ग-मारुतिसंयमादिवृत्तं वर्णितमस्ति। अधिकारकाण्डे प्रामुख्येन क्रियाणां प्रयोगविषयकनियमानां विवरणं प्रस्तुतम्।

तृतीये प्रसन्नकाण्डे च दशम-एकादश-द्वादश-त्रयोदशसर्गाः समाविशन्ति। तत्र दशमसर्गे शब्दालङ्काराणामर्थालङ्काराणाञ्च सोदाहरणं स्पष्टीकरणमस्ति। एकादशद्वादशसर्गयोः क्रमशो माधुर्यभाविकयोर्विवेचनमस्ति। त्रयोदशे सर्गे भाषासमाभिधेयश्लेषभेदस्य प्रदर्शनमस्ति।

चतुर्थतिङन्तकाण्डे संस्कृतव्याकरणस्य वैदिकांशवर्जितानां लौकिकनवलकाराणां निरूपणमस्ति। अत्रैव प्रसङ्गे चतुर्दशसर्गादारभ्य द्वाविंशतिसर्गं यावदेकैकस्मिन् सर्गे एकैकस्य लकारस्य प्रायोगिकं दिग्दर्शनमस्ति।

पुरा सर्वेऽपि व्याकरणशास्त्रमधीयानाः वटवः पाणिनीयाष्टककल्पं प्रकीर्णाऽधिकारप्रसन्नतिङन्तकाण्डेति काण्डचतुष्टयात्मकं प्रसादगुणगुम्फितं छन्दोऽलङ्कारध्वनिकोशपूर्णं भट्टिमहाकाव्यमधीत्य महावैयाकरणाः महाकवयश्च भवन्ति स्म।

काव्यशास्त्रमिदं बहूपयोगि माङ्गलिकं श्रीरामकथाऽमृतप्लावितं पाणिनीयव्याकरणशिक्षया सहैव साहित्यादिराजनीति शिक्षकभूतं विराजतेतमाम्। उक्तञ्च भट्टिकाव्यमहत्त्वविषये श्रीपण्डितगोपालशास्त्रिदर्शनकेशरि महाभागैः—

'योऽपाययत् पाणिनिशब्दवारिधेः पदामृतं रामकथाऽऽप्लुतं कविः।
सोऽयं महाशाब्दिकभट्टिकाव्यकृत् सदाऽभिवन्द्यःकविभिश्च शाब्दिकैः॥

व्याकृत्या कोशवृत्ताभ्यामलङ्कृत्या रसेन च।
पञ्चकेनान्वितं भव्यं भट्टिकाव्यं विराजते॥
व्याकृतेश्चषके पेयं रामराजकथामृतम्।
राजनीतिसमाजादिशिक्षासम्भृतमुत्तमम् ॥"

महाकाव्यशास्त्रेऽस्मिन् सर्वाभ्यर्हितः प्रसादो गुणोऽस्ति, वैदर्भी च रीतिः। बाल्मीकीयरामायणवदेव रावणवधोत्तरमयोध्यायां श्रीरामस्य परावर्तनं विवृतं विद्यते। अत्र मध्ये-मध्ये लक्ष्यदृष्ट्या द्वितीयसर्गे शरद्वर्णनमेकादशे च प्रभातवर्णनं सर्वकाव्यातिशायि वर्तते। दशमसर्गतस्त्रयोदशसर्गावधि प्रसन्नकाण्डे यमकादि

भाषासमालङ्कारान्तं साधुकाव्यच्छटोच्छ्वलनं लक्ष्यते। द्वादशे निरूपमं राजनीति-निरूपणं परिशीलनीयं मर्मज्ञैः।

## १०. भट्टिकाव्यस्य टीकाकाराः

काव्यग्रन्थानां टीकाकाररूपेण मल्लिनाथः प्रसिद्धः। तेन भट्टिकाव्यस्याऽपि टीका प्रणीता। मल्लिनाथस्य कालः सं० १२६४ वैक्रमाब्दात् पूर्वं यावत् स्वीकर्तुं शक्यते।

सं० १२२९ वैक्रमाब्दपूर्वजातेन श्रीजटीश्वरजयदेवजयमङ्गल नामाभिधेयविदुषा भट्टिकाव्यस्य "जयमङ्गला" नाम्नी व्याख्या प्रणीता। इयं व्याख्या पाणिनीय-व्याकरणानुसारिणी वर्तते।

उपर्युक्तजयमङ्गलभिन्नेन जयमङ्गलनामाभिधेयविदुषा भट्टिकाव्यस्य 'जयमङ्गला' नाम्नी टीका प्रणीता। अस्या हस्तलेखो लन्दननगरस्थे इण्डियाआफिससंग्रहे उपलभ्यते।[1] वृत्तेरारम्भे लिखितम्—

'तनुते जयमङ्गलः कृतीनिजनामाभिधभट्टिटिप्पणीम्।'

वृत्तेरन्ते लिखितम्—

'इति भर्तृहरिकाव्यदीपिकायां जयमङ्गलाख्यायां……।'

केनचिदज्ञातनामाभिधेयविदुषा 'व्याख्यासार' नाम्नी व्याख्या प्रणीता। मद्रासराजकीयहस्तलेखसंग्रहे ग्रन्थोऽयं 'भट्टिकाव्यस्थूलव्याख्यासार' नाम्ना निर्दिष्टोऽस्ति।[2]

वारेन्द्रवंशसम्भूतेन श्रीनयनानन्दचक्रवर्तिशिष्येण श्रीरामचन्द्रशर्मनामाभिधेय-विदुषा भट्टिकाव्यस्य 'भट्टिचन्द्रिका' नाम्नी व्याख्या प्रणीता। ग्रन्थारम्भस्य पाठोऽधोलिखितोऽस्ति—

'वन्दे दूर्वादलश्यामं रामं राजीवलोचनम्।
जानकीलक्ष्मणोपेतं भक्त्याभीष्टफलप्रदम्॥

---

१. इण्डिया आफिस, लन्दन सूचीपत्र, भाग १, खण्ड २, संख्या ९२१॥

२. द्र० मद्रास राजकीय हस्तलेख संग्रह सूचीपत्र, भाग ९, पृ० ७६६१, सं० ५७१०॥

नत्वा तातपदद्वन्द्वं ज्ञात्वा ग्रन्थकृदाशयम् ।
विद्याविनोदः कुरुते टीकां श्रीभट्टिचन्द्रिकाम् ॥'

श्रीकन्दर्पशर्मनामाभिधेयविदुषा सौपद्मप्रक्रियानुसारेण भट्टिकाव्यस्य टीका प्रणीता। ग्रन्थारम्भे तेन लिखितम्—

'सौपद्मानां प्रीयते भट्टिकाव्ये टीकां धीरकन्दर्पशर्मा ।
.... .... ... .... .... .... .... .... .... ... ... ....॥

विद्यासागरटीकायां कातन्त्रप्रक्रिया यतः ।
सुपद्मप्रक्रिया तस्मात् तस्मादेव प्रणीयते ॥'

श्रीमच्छ्रीकान्तपण्डितात्मजश्रीपुण्डरीकाक्षविद्यासागरभट्टाचार्यनामाभिदेयविदुषा भट्टिकाव्यस्य कातन्त्र—कलापव्याकरणानुसारिणी 'कलापदीपिका' नाम्नी व्याख्या प्रणीता। तथा चोक्तम् ग्रन्थान्ते—

"इति महामहोपाध्यायश्रीमच्छ्रीकान्तपण्डितात्मजश्रीपुण्डरीकाक्ष-विद्यासागरभट्टाचार्यकृतायां भट्टिटीकायां कलापदीपिकायां……।'

श्रीहरिहराचार्येण भट्टिकाव्यस्य 'भट्टिबोधिनी' नाम्नी व्याख्या प्रणीता। ग्रन्थारम्भे तेनोक्तम्—

'नत्वा रामपदद्वन्द्वमरविन्दभवच्छिदम् ।
द्विजो हरिहरार्यः कुरुते भट्टिबोधिनीम् ॥'

श्रीभरतसेनेन मुग्धबोधप्रक्रियानुसारिणी भट्टिकाव्यस्यैका टीका प्रणीता।

## ११. हलायुधः

श्री'हलायुध'नामाभिधेयविदुष 'कविरहस्' मित्याख्यमेकं लक्ष्यप्रधानं च काव्यम्प्रणीतम्। त्र धातुरूपाणां विशिष्टो निर्देशः कृतो वर्तते। तत्र २७४ मिताः लोकास्सन्ति। काव्यस्याऽस्य 'कविगुह्यम्' 'अपशब्दयकाव्य' मिति चाऽपिक्र नामान्तरमस्ति।

हलायुधः राष्ट्रकूटस्य तृतीयकृष्णराज्ञः (सं० ९९७–१०१३ वै०) सभा-पण्डित आसीत्। हलायुधस्यकालः सामान्यतया सं० ९७५ वैक्रमाब्दात् सं० १०५० वैक्रमाब्दं यावत् स्वीकतुं शक्यते। हलायुधप्रणीतौ द्वावन्यौ ग्रन्थावपि प्रसिद्धौ—पिङ्गलच्छन्दः सूत्रटीका 'मृतसञ्जीवनी', अभिधानरत्नमालाकोशश्च।

## १२. हेमचन्द्राचार्यः

आचार्येण हेमचन्द्रेण स्वीयशब्दानुशासनस्य संस्कृतप्राकृतोभयविधलक्षणानां लक्ष्यप्रदर्शनार्थं कुमारपालचरित' इत्याख्यम्महाकाव्यम्प्रणीतम्। अस्य प्रारम्भे विंशतिमिताः सर्गाः संस्कृते, अन्तिमाश्चाऽष्टसर्गाः प्राकृते सन्ति, अत एवेदं 'द्व्याश्रयकाव्य' मित्यप्युच्यते।

## १३. नारायणः (ब्रह्मदत्तसूनुः)

श्रीब्रह्मदत्तपुत्रेण श्रीनारायणकविना 'सुभद्राहरणं' नाम काव्यशास्त्रम्प्रणीतम्। तस्य द्वौ हस्तलेखौ मद्रासराजकीयहस्तलेखसंग्रहे उपलभ्येते।[1] द्वितीयहस्तलेखस्य प्रथमसर्गस्यान्तेऽधोलिखितोऽस्ति—

'ब्रह्मदत्त (सूनु) नारायणविरचितं व्याकरणोदाहरणे सविवरणे सुभद्राहरणे प्रकीर्णकाण्डं प्रथमः सर्गः............।'

काव्येऽस्मिन् षोडशसर्गास्सन्ति। अष्टाध्यायिक्रमेण सूत्राणां उदाहरणान्यवधाय कविना काव्यमिदम्प्रणीतम्। केषाञ्चित् प्रकरणानां नामान्यधोलिखितानि सन्ति—

(१) अव्ययकृद्विलसितम् (अष्टा० ३।४ पूर्वार्धम्)।
(२) प्राग्दीव्यतीयविलसितम् (अष्टा० ४।१-३)।
(३) प्राग्वहतीयादिविलसितम् (अष्टा० ४।४।१-५।३....)।
(४) स्वार्थिक प्रत्ययादिविलसितम् (अष्टा० ५।३-४)।

काव्येऽस्मिन् भट्टभूमसदृशपाणिनीयसूत्रक्रमाश्रयणेन स्पष्टम् यत् ग्रन्थस्याऽस्य रचना पाणिनीयसम्प्रदाये प्रक्रियाग्रन्थानां पठनपाठनव्यवहारात् पूर्वं जाता। अतः ग्रन्थोऽयं पञ्चदशवैक्रमशतकप्राचीनो भवितुमर्हति।

## १४. वासुदेवकविः

केनचिद् 'वासुदेव' नामाभिधेयकविना 'वासुदेवचरित' इत्याख्यं काव्यम्प्रणीतम्। तस्य 'वासुदेवविजय' इत्यपिनामान्तरमस्ति।

---

१. द्र० मद्रास राजकीय हस्तलेख संग्रह सूचीपत्र, भाग ३, खण्ड पर पृ० ३८८३, सं० २७२० तथा भाग ५, खण्ड १ बी, पृ० ६३५८, संख्या ४३२३॥

काव्येऽस्मिन् षट् सर्गास्सन्ति। अन्तिमसर्गत्रयं 'धातुकाव्य' नाम्नाऽप्युच्यते। मुम्बईस्थनिर्णयसागरमुद्रणालयात् प्रकाशितायां काव्यमालायामिदं मुद्रितम्।

संस्कृतहस्तलेखप्राइवेटलाइब्रेरीसाउथइण्डियासूचीपत्रे (ग्रन्थाङ्क २६२१, २८९०, पृ० २३८, २५६) धातुकाव्यस्य द्वौ हस्तलेखौ निर्दिष्टौ। तत्र तत्प्रणेतुर्नाम 'नारेरी वासुदेव' इत्यङ्कितमस्ति। उभौ हस्तलेखौ 'वासुदेवविजय' ग्रन्थस्योत्तरार्द्धस्थौ, स्वतन्त्रग्रन्थौ वेति वक्तुं दुष्करं प्रतीयते।

## ५. नारायणकविः

श्रीनारायणकविना धातुपाठोदाहरणानि लक्ष्यीकृत्य 'धातुकाव्यम्' प्रणीतम्। 'अपाणिनीयप्रामाणिकता' ग्रन्थसम्पादकस्य श्री ई० बी० रामशर्ममहोदयस्य मतानुसारेण नारायणभट्ट एव प्रक्रियासर्वस्व-अपाणिनीयप्रामाणिकता-धातुकाव्य-प्रभृति ग्रन्थानां प्रणेतेति। यद्येतन्मतं स्वीक्रियेत, धातुकाव्यप्रणेता नारायणकविः नारायणभट्ट एव स्यात्तर्हि तस्य कालः सं० १६१७–१७३३ वैक्रमाब्दमध्ये स्वीकर्तुं शक्यते।

काव्यस्याऽस्यैकः सव्याख्यो हस्तलेखो मद्रासशासकीयहस्तलेखसंग्रहे (सूचीपत्रे भाग ४, खण्डे १८) उपलभ्यते। तस्यारम्भे लिखितम्—

'उदाहृतं पाणिनिसूत्रमण्डलं प्राग्वासुदेवेन तदूर्ध्वतोऽपरः।
उदाहरत्यद्य वृकोदरोदितान् धातून् क्रमेणैव हि माधवसंश्रयात्॥'

मद्रासशासकीय सूचीपत्रे उक्तसव्याख्यधातुपाठकाव्यस्य टीकाकारः रामपाणिपादो निर्दिष्टः॥

॥ इति संस्कृतव्याकरणशास्त्रेतिह्यविमर्शे काव्यशास्त्रवैयाकरण-वर्णनं नाम द्वाविंशोऽध्यायः॥

त्रयोविंशोऽध्यायः

# अपाणिनीयाऽर्वाचीनवैयाकरणवर्णनम्

## १. प्रमुखाः वैयाकरणाः

पाणिनिपरवर्तिभिरनेकैर्वैयाकरणैरनेकानि व्याकरणानि प्रणीतानि, यद्यपि सर्वेषां व्याकरणानामुपजीव्यं मुख्यतया पाणिनीयव्याकरणमेव, तथापि पाणिनेरर्वाचीनानां विदुषां प्रतिभावैशद्येन किमपि वैशिष्ट्यं तेष्वस्त्येव। अर्वाचीनेषु व्याकरणेषु केवलं लौकिकानामेव शब्दानामन्वाख्यानमस्ति। अतः पाणिनेरर्वाचीनेषु वैयाकरणेषु प्रामुख्यम्भजमानानां शाब्दिकानां नामान्यत्र प्रस्तूयन्ते—

| | |
|---|---|
| १—कातन्त्रकारः | १०—बुद्धिसागरः |
| २—चन्द्रगोमी | ११—भद्रेश्वरसूरः |
| ३—क्षपणकः | १२—वर्धमानः |
| ४—देवनन्दी | १३—हेमचन्द्रः |
| ५—वामनः | १४—मलयगिरिः |
| ६—भट्टोऽकलङ्कः | १५—क्रमदीश्वरः |
| ७—पाल्यकीर्तिः | १६—सारस्वतव्याकरणकारः |
| ८—शिवस्वामी | १७—बोपदेवः |
| ९—भोजदेवः | १८—पद्मनाभदत्तः |

पण्डित गुरुपदहालदार महोदयेन स्वकीयस्य 'व्याकरणदर्शनेर इतिहास' इत्यभिधेयस्य ग्रन्थस्य ४४८ तमे पृष्ठे अधोलिखितानां पाणिनिपरवर्तिवैयाकरणानां तत्कृतीनाञ्चोल्लेखो विहितः—

| क्रमाङ्कः | ग्रन्थकारः | व्याकरणम् |
|---|---|---|
| १— | व्याघ्रपाद् ( द्वितीयः ) | वैयाघ्रपद्यं व्याकरणम् |

| | |
|---|---|
| २—यशोभद्र | जैनव्याकरणम् |
| ३—आर्यवज्रस्वामी | ,, |
| ४—भूतिबलिः | ,, |
| ५—इन्द्रगोमी ( बौद्धः ) | ऐन्द्रव्याकरणम् |
| ६—वाग्भट्टः | ,, |
| ७—श्रीदत्तः | जैनव्याकरणम् |
| ८—चन्द्रकीर्तिः | समन्तभद्रव्याकरणम् |
| ९—प्रभाचन्द्रः | जैनव्याकरणम् |
| १०—अमरसिंह | बौद्ध ,, |
| ११—अज्ञातः | अष्टधातुव्याकरणम् |
| १२—सिद्धनन्दिः | जैनव्याकरणम् |
| १३—भद्रेश्वरसूरिः | दीपकव्याकरणम् |
| १४—श्रुतपालः शिवस्वामी वा | ,, ,, |
| १५—शिवयोगी | ,, ,, |
| १६—बुद्धिसागरः | बुद्धिसागरव्याकरणम् |
| १७—केशवः | केशवीव्याकरणम् |
| १८—वाग्भट्टः ( द्वितीयः ) | ,, ,, |
| १९—विनतीकीर्तिः | ,, ,, |
| २०—विद्यानन्दः | विद्यानन्द |
| २१—अज्ञातः | यमव्याकरणम् |
| २२—अज्ञातः | वरुणव्याकरणम् |
| २३—अज्ञातः | सौम्यव्याकरणम् |

गायकवाड़संस्कृतसीरीजबड़ौदा'—प्रकाशिते सप्तदशवैक्रमशतकीयकवीन्द्राचार्यपुस्तकालयस्य सूचीपत्रे अधोलिखितानां व्याकरणानां विवरणमुपलभ्यते—

| | |
|---|---|
| १—हेमचन्द्रव्याकरणम् | १०—यमव्याकरणम् |
| २—सारस्वतव्याकरणम् | ११—वायुव्याकरणम् |

३—कालापव्याकरणम्
४—शाकटायनव्याकरणम्
५—शाकल्यव्याकरणम्
६—ऐन्द्रव्याकरणम्
७—चान्द्रव्याकरणम्
८—दौर्गव्याकरणम्
९—ब्रह्मव्याकरणम्
१२—वरुणव्याकरणम्
१३—सौम्यव्याकरणम्
१४—वैष्णवव्याकरणम्
१५—रुद्रव्याकरणम्
१६—कौमारव्याकरणम्
१७—बालभाषाव्याकरणम्
१८—शब्दतर्कव्याकरणम्

अतः परं पूर्वनिर्दिष्टानां आमुख्यम्भजमानानामष्टादशवैयाकरणानां क्रमशः संक्षिप्तः परिचय उपस्थाप्यते ।

## २. कातन्त्रव्याकरणकारः

व्याकरणवाङ्मये कातन्त्रव्याकरणस्य स्थानमतिमहत्त्वपूर्णमस्ति । कलापकं कौमारञ्चाऽस्यैव नामान्तरम् । अर्वाचीनाः वैयाकरणाः 'कलाप' शब्देनाऽप्यस्य व्यवहारं कुर्वन्ति । व्याकरणमिदं काशकृत्स्नतन्त्रस्य संक्षिप्तं रूपमस्ति । व्याकरणेऽस्मिन् द्वौ भागौ स्तः—आख्यातान्त-कृदन्तभेदात् ।

वैयाकरणेष्वियं जनश्रुतिरस्ति यत् कुमारकार्तिकेयस्याऽऽज्ञया शर्ववर्मा शास्त्रमिदं निर्ममे ।[१] इदं वक्तुं शक्यते यत् प्राचीनकाले कुमाराणां-बालकानां व्याकरणशास्त्रसामान्यबोधाय शास्त्रमिदमध्याप्यते स्म । अत एवाऽस्य नाम 'कुमाराणामिदं कौमारम्' इति व्युत्पत्त्या 'कौमारम्' इति संवृत्तम् ।

कातन्त्रव्याकरणस्य रचनाकालोऽतिविवादास्पदो दृश्यते, किन्तु श्रीपं० युधिष्ठिरमीमांसकमहोदयेन स्वकीये 'संस्कृतव्याकरण शास्त्र का इतिहास' इत्यभिधेये ग्रन्थे साधकबाधकयुक्तिभिः कातन्त्रव्याकरणस्य रचनाकालः वैक्रमाब्दाद् द्विसहस्रवर्षप्राचीनः साधितः ।

कातन्त्रव्याकरणस्य कर्तृत्वविषयेऽपि विवाद एव । कथासरित्सागर[२] कातन्त्र-

१. तत्र भगवत्कुमारप्रणीतसूत्रानन्तरं तदाज्ञयैव श्रीशर्ववर्मणा प्रणीतं सूत्रकथनमनर्थकं भवति । वृत्तिटीका, परिशिष्ट पृ० ४६९ ।।

२. कथासरित्सागर, लम्बक १, तरङ्ग ६, ७ ।

वृत्तिटीका[1] प्रभृतिग्रन्थानुसारं कातन्त्रव्याकरणस्य आख्यातान्तभागस्य कर्ता शर्ववर्माऽस्ति। कृदन्तभागस्य कर्ता कात्यायनोऽस्तीति कातन्त्रवृत्तिकारेण श्रीदुर्गसिंहेन सूचितम्। किन्तु तेनेदं न सूचितम् कोऽसौ कात्यायनः, यः कातन्त्रस्य कृदन्तभागस्य कर्ता। कातन्त्रे कृदन्तभागसमावेशानन्तरमपि तत्रावशिष्टान्यनेकानि न्यूनानि दूरीकर्तुं श्रीपतिदत्तः कातन्त्रपरिशिष्टं प्रणिनाय। कातन्त्रव्याकरणस्यवैशिष्ट्य-वर्धनाय श्रीविजयानन्दः 'कातन्त्रोत्तर' ग्रन्थं रचयामास। अमुष्य कालः सं० १२०० वैक्रमाब्दपूर्वमस्ति।

कातन्त्रव्याकरणोपरि शर्ववर्मणा 'बृहद्वृत्तिः' प्रणीता। दुर्गसिंहेन दुर्गवृत्तिः, वररुचिना चैत्रकूटी' वृत्तिः उमापतिना एकाव्याख्या, जिनप्रभसूरिणा 'कातन्त्रविभ्रम' नाम्नी टीका, श्रीजगद्धरभट्टेन च कातन्त्रस्य 'बालबोधिनी' वृत्तिः प्रणीता।

## ३. चन्द्रगोमी

आचार्येण चन्द्रगोमिना पाणिनीयव्याकरणमाश्रित्यैकं नवीनं व्याकरणं प्रणीतम्। ग्रन्थस्याऽस्य प्रणयने श्रीचन्द्रगोमिना पातञ्जलमहाभाष्यादपि महत् साहाय्यं गृहीतम्।

चन्द्राचार्यस्य वंशस्य कश्चन परिचयो नोपलभ्यते। चान्द्रव्याकरणस्य प्रारम्भे यः श्लोक उपलभ्यते, तेनेदं ज्ञायते यत् चन्द्रगोमी बौद्धमतावलम्बी आसीत्[2]। कल्हणस्य लेखानुसारं चन्द्राचार्यः काश्मीरनृपतेरभिमन्योः समकालिक आसीत्। तदाज्ञया चन्द्राचार्यः लुप्तप्रायस्य महाभाष्यस्य प्रचारमकरोत्, नवीनं व्याकरणञ्च प्रणिनाय।[3] तेनेदं न ज्ञायते यत् चन्द्राचार्यः कस्मिन् प्रदेशे जनि लेभे, किन्तु चन्द्राचार्यस्योणादिसूत्राणामन्तरङ्गपरीक्षया प्रतीयते यदयं बङ्गप्रदेशवास्तव्य

---

१. तत्र भगवत्कुमारप्रणीतसूत्रानन्तरं तदाज्ञयैव श्रीशर्ववर्मणा प्रणीतं सूत्रं कथमनर्थकं भवति। वृत्तिटीका, परिशिष्ट, पृ० ४६१॥

२. सिद्धं प्रणम्य सर्वज्ञं सर्वीयं जगतो गुरुम्।

३. चन्द्राचार्यादिभिर्लब्ध्वाऽऽदेशं तस्मात्तदागमम्। प्रवर्तितं महाभाष्यं स्वं च व्याकरणं स्मृतम्॥ राजतरङ्गिणी, १।१७६॥

आसीत्। कल्हणमतानुसारेणाऽभिमन्योः कालः वैक्रमाब्दादेकसहस्रवर्षपूर्वमस्ति, अत एव चन्द्राचार्यस्य कालोऽपि वैक्रमाब्दादेकसहस्रवर्षपूर्वं स्वीकर्तुं शक्यते।

चान्द्रवृत्तिग्रन्थे[1], वामनीयलिङ्गानुशासनवृत्तौ[2] च चान्द्रव्याकरणस्य वैशिष्ट्यमिदमेव प्रदर्शितम् यत् चान्द्रव्याकरणे पारिभाषिकसंज्ञाविधानाभाव एव तद्वैशिष्ट्यमस्ति। चन्द्राचार्येण स्वोपज्ञवृत्तावुक्तम्—

'लघुविस्पष्टसम्पूर्णमुच्यते शब्दलक्षणम्'

पाणिनीयव्याकरणे येषां शब्दानां साधुत्वप्रतिपादनं वार्तिकैर्महाभाष्येष्टिभिश्च विहितम्, चन्द्राचार्येण तेषां पदानां सन्निवेशः सूत्रपाठे विहितः। अत एव तेन स्वग्रन्थस्य विशेषणम् 'सम्पूर्ण' मित्युक्तम्।

चन्द्राचार्येण स्वव्याकरणप्रणयने पातञ्जलमहाभाष्यात् पर्याप्तं साहाय्यं गृहीतम्। पतञ्जलिना प्रोक्ताः पाणिनीयसूत्राणां निर्दोषाणि न्यासान्तराणि चन्द्राचार्येण स्वव्याकरणे प्रायः स्वीकृतानि, पतञ्जलिना विहितानि सूत्रसूत्रांशप्रत्याख्यानानि च सर्वथा त्यक्तानि। तथापि चन्द्राचार्योऽनेकत्र स्थलेषु पतञ्जलिव्याख्यानं प्रामाणिकं न मत्वाऽन्यान् ग्रन्थकारान् समाश्रयति।

चन्द्राचार्येण स्वव्याकरणस्य स्वोपज्ञवृत्तिः प्रणीता। बौद्धभिक्षुणा कश्यपेन 'बालबोधिनी' नाम्नी चान्द्रवृत्तिः प्रणीता। चन्द्राचार्येण धातुपाठ-गणपाठ-उणादि-सूत्र-लिङ्गानुशासन-उपसर्गवृत्ति-शिक्षासूत्र-कोषप्रभृतयो ग्रन्था अपि प्रणीताः।

### ८. क्षपणकः

वैक्रमप्रथमशतके समुत्पन्नेन क्षपणकचार्येण कस्यचन व्याकरणस्य प्रवचनं विहितमिति व्याकरणशास्त्रस्याऽनेकेषु ग्रन्थेषूपलब्धोद्धरणावलोकनेन ज्ञायते। तथाहि—

'अत एव नावमात्मानं मन्यते इति विगृह्य परत्वादनेन ह्रस्वत्वं बाधित्वा अमागमे सति नावं मन्ये इति क्षपणकव्याकरणे दर्शितम्[3]।'

---

१. चान्द्रवृत्ति, २।२।८६॥

२. वामनीयलिङ्गानुशासनवृत्ति, पृ० ७॥

३. तन्त्र प्रदीप १।४।५५॥ भारत कौमुदी भाग २, पृ० ८९३ पर उद्धृत।

एवमेव तन्त्रप्रदीपेऽपि 'क्षपणकव्याकरणे[१] महान्यासे' इत्युल्लेख उपलभ्यते।

कालिदासप्रणीते 'ज्योतिर्विदाभरण' इत्यभिधेये ग्रन्थे विक्रमसभायाः नवरत्नानां नामानि लिखितानि, तत्र क्षपणकोऽप्यन्यतमोऽस्ति।[२] अनेकेषामैतिहासिकानां मतमस्ति यद् जैनाचार्यस्य सिद्धसेनदिवाकरस्यैव नामान्तरं क्षपणकः, स व्याकरणशास्त्रप्रवक्ता। क्षपणकसिद्धसेनदिवाकरयोरैक्यं सिद्ध्येत चेन्निश्चितरूपेण क्षपणको महाराजस्य विक्रमादित्यस्य समकालिको भविष्यति। क्षपणकेन स्वव्याकरणस्य स्वोपज्ञवृत्तिः प्रणीता। क्षपणकव्याकरणस्य 'महान्यास' टीकाऽपि केनचित् प्रणीता, टीकाकारस्य नाम न ज्ञायते।

## ५. देवनन्दी

आचार्येण देवनन्दिना 'जैनेन्द्र' इत्यभिधेयं शब्दानुशासनम्प्रणीतम्। अस्य कालः सं० ५०० वैक्रमाब्दात् पूर्वमस्तीति पूर्वमेव वर्णितमस्माभिः।

जैनेन्द्रव्याकरणस्य सम्प्रति द्वे संस्करणे उपलभ्येते—औदीच्यम्, दाक्षिणात्यञ्चेति। औदीच्यसंस्करणे प्रायेण त्रिसहस्राणिसूत्राणि, दाक्षिणात्यसंस्करणे च त्रिसहस्रसप्तशतमितानि सूत्राणि सन्ति। दाक्षिणात्यसंस्करणे न केवलं सप्तशतसूत्राण्येवाऽधिकानि, किन्तु शतशः सूत्रेषु परिवर्तनं परिवर्धनमप्युपलभ्यते। औदीच्यसंस्करणस्य अभयनन्दिकृतायाम्महावृत्तौ बहूनि वार्तिकान्युपलभ्यन्ते, किन्तु दाक्षिणात्यसंस्करणे तानि वार्तिकानि प्रायेण सूत्रान्तर्गतान्येव। अत एवेदं विचारणीयं सम्पद्यते यत् कस्तावत् सूत्रपाठः पूज्यपाददेवनन्दिप्रणीतः। श्रीपं० युधिष्ठिरमीमांसकमहोदयेन साधितम् यत् औदीच्यसंस्करणमेव देवनन्दिप्रणीतः मूलसूत्रपाठः, दाक्षिणात्यसंस्करणञ्च जैनेन्द्रव्याकरणस्य परिष्कृतरूपान्तरम् तस्य वास्तविकं नाम 'शब्दार्णवव्याकरणम्' इत्यस्ति।

---

२. तन्त्रप्रदीप, धातु प्रदीप की भूमिकामें ४।१।१५५ संख्या निर्दिष्ट है, पुरुषोत्तम परिभाषावृत्ति की भूमिकामें ४।१।१३५ संख्या दी गयी है।

३. धन्वन्तरिः क्षपणकोऽमरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासाः। ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ॥२०॥

जैनेन्द्रव्याकरणे एकशेषप्रकरणं नास्ति। तत्रानेकाः नवीना अल्पाक्षरसंज्ञाः कल्पिताः। अतः शब्दलाघवेऽप्यर्थकृतगौरवात् पाणिनीयतन्त्रापेक्षया जैनेन्द्रव्याकरणं क्लिष्टम्। यद्यपि जैनेन्द्रव्याकरणस्य मुख्य आधारः पाणिनीयव्याकरम्, तथापि क्वचित् चान्द्रव्याकरणमपि समाश्रितम्।

जैनेन्द्रव्याकरणस्याऽनेकैर्विद्वद्भिष्टीकाः प्रणीताः। अत्र प्रमुखानां टीकाकाराणां नामानि प्रस्तूयन्ते—

१—देवनन्दी ( सं० ५०० वै० पू० )—'जैनेन्द्र' न्यासः।

२—अभयनन्दी ( सं० ९७४-१०३५ वै० )—'महावृत्तिः'।

३—प्रभाचन्द्राचार्यः ( सं० १०७५-११२५ वै० )—'शब्दाम्भोजभास्करन्यास' वृत्तिः।

४—अज्ञातभाष्यकारः ( सं० १२०० वै० पू० )—भाष्यम्।

५—महाचन्द्रः ( वै० विंशशतकम् )—'लघुजैनेन्द्र' वृत्तिः।

आर्यश्रुतकीर्तिना ( सं० १२२५ वै० ) जैनेन्द्रव्याकरस्य 'पञ्चवस्तु' इत्यभिधेयः प्रक्रियाग्रन्थः प्रणीतः। विंशवैक्रमशतकीयस्य वंशीधरस्याऽपि जैनेन्द्रप्रक्रियाग्रन्थस्य पूर्वार्धः सम्प्रति प्रकाशितः।

## ६. वामनः

वामनाचार्येण 'विश्रान्तविद्याधर' इत्यभिधेयं व्याकरणम्प्रणीतम्। अस्योल्लेखः आचार्येण हेमचन्द्रेण, वर्धमानसूरिणा च स्वग्रन्थेषु विहितम्। वर्धमानेन गणरत्नमहोदधौ व्याकरणस्याऽस्याऽनेकानि सूत्राणि समुद्धृतानि, वामनश्च 'सहृदयचक्रवर्ती' त्युपाधिना विभूषितः।[1] वामनस्य कालः सं० ६०० वै० पूर्वं स्वीकर्तुं शक्यते।

वर्धमानप्रणीत 'गणरत्नमहोदधि' ग्रन्थानुसारं वामनेन विश्रान्तविद्याधरस्य 'लघ्वी' 'बृहती' इत्याख्ये द्वे टीके प्रणीते। तार्किकशिरोमणिना मल्लवादिना वामनकृतव्याकरणे 'न्यास' ग्रन्थः प्रणीतः।

## ७. भट्टोऽकलङ्कः

भट्टअकलङ्कमहोदयेन कस्यचन व्याकरणस्य प्रवचनं विहितम्। तस्य

---

१. सहृदयचक्रवर्तिना वामनेन तु हेम्नः इति सूत्रेण"...... । पृ० १६८॥

स्वोपज्ञशब्दानुशासनस्य 'मञ्जरीमकरन्द' टीकायाः प्रारम्भिकभागस्यैको हस्तलेखो लन्दननगरस्थ इण्डियाआफिसपुस्तकालये सुरक्षितोऽस्ति । तत्र प्रथमपादस्यान्तेऽधोलिखितो लेखोऽस्ति—

'इति श्रीभट्टाकलङ्कदेवविरचितायां स्वोपज्ञशब्दानुशासनवृत्तेर्भाषामञ्जर्याष्टीकायां मञ्जरीमकरन्दसमाख्यायां प्रथमः पादः ।'

अकलङ्कचरितानुसारं भट्टाकलङ्कदेवस्य बौद्धैः सह यो महान् विवादः समजनि तस्य कालः सं० ७०० वै० स्वीक्रियते । श्रीसीतारामजोशिमहोदयेन स्वकीये 'संस्कृत साहित्य का संक्षिप्त इतिहास' इत्यभिधेये ग्रन्थे अकलङ्कमहोदयस्य कालः ७५० ई०=८०७ वै० स्वीकृतः ।[1]

## ८. पाल्यकीर्तिः ( शाकटायनः )

व्याकरणवाङ्मये 'शाकटायन' नाम्ना व्याकरणद्वयम्प्रसिद्धम्—आर्षं व्याकरणम्, अर्वाचीनं जैनव्याकरणञ्चेति भेदात् ।

अभिनवस्याऽस्य शाकटायनव्याकरणस्य प्रणेतुर्वास्तविकं नाम 'पाल्यकीर्ति'-रस्ति श्रीवादिराजसूरिणा पार्श्वनाथचरिते लिखितम्—

'कुतस्त्या तस्य सा शक्तिः पाल्यकीर्त्तेर्महौजसः ।
श्रीपदश्रवणं यस्य शाब्दिकान् कुरुते जनान् ॥'

श्लोकेऽस्मिन् 'श्रीपदश्रवणं यस्य' इति सङ्केतः शाकटायनव्याकरणस्य स्वोपज्ञामोघावृत्तिं प्रत्यस्ति । तन्मङ्गलाचरणाऽऽरम्भः 'श्रीवीरममृतं ज्योतिः' इत्यनेन जायते । पार्श्वनाथचरितस्य पञ्जिकाटीकाकर्त्रा श्रीशुभचन्द्रेण पूर्वोक्तं श्लोकं व्याचक्षाणेनोक्तम्—

'तस्य पाल्यकीर्त्तेर्महौजसः श्रीपदश्रवणं श्रिया उपलक्षितानि पदानि शाकटायनसूत्राणि, तेषां श्रवणमाकर्णनम् ।'

अनेन स्पष्टम् यत् शाकटायनव्याकरणस्य प्रणेतुर्नाम पाल्यकीर्तिरेवाऽस्ति ।

---

१. द्र० भारतवर्ष का बृहद् इतिहास भाग १, पृ० १२४ द्वि० सं० तथा सीतारामजोशी संस्कृत साहित्य का संक्षिप्त इतिहास, पृ० १७३ ॥

अनेके पाल्यकीर्ति जैनश्वेताम्बरसम्प्रदायस्य, केचन च दिगम्बरसम्प्रदायस्य स्वीकुर्वन्ति। किन्तु पाल्यकीर्तिर्यापनीयसम्प्रदायस्याऽऽसीत्। अयं दिगम्बरश्वेताम्बरयोरन्तरालवर्ती सम्प्रदाय आसीत्।

सम्भाव्यते यत् पाल्यकीर्तिर्महाराजस्याऽमोघदेवस्य सभ्यो भवेत्। महाराजोऽमोघदेवः सं० ८७१ वैक्रमाब्दे सिंहासनमलञ्चकार। तस्यैकं दानपत्रं सं० ९२४ वैक्रमाब्दस्योपलब्धम्। अतोऽयमेव समयः पाल्यकीर्तेरपि।

शाकटायनव्याकरणे इष्टीनामुपसंख्यानानाञ्चाऽऽवश्यकता नास्ति। इन्द्रचन्द्रादिरुक्तानि सर्वाण्यपि शब्दलक्षणानि व्याकरणेऽस्मिन् वर्तन्ते। व्याकरणेऽस्मिन् पाल्यकीर्तिना लिङ्गसमासान्तप्रकरणे समासप्रकरणान्तर्गते, एकशेषञ्च द्वन्द्वप्रकरणे पठित्वा व्याकरणस्य प्रक्रियानुसारिरचनाया बीजवपनं विहितमासीत्।

पाल्यकीर्तिना धातुपाठोणादिसूत्र-गणपाठ-लिङ्गानुशासन-परिभाषापाठ-उपसर्गार्थ-तद्धितसंग्रह-स्त्रीमुक्ति-केवलिभुक्तिप्रभृतयो ग्रन्था अपि प्रणीताः। काव्यमीमांसायां राजशेखरेण सूचितम् यत् पाल्यकीर्तिना साहित्यविषयकोऽपि कश्चन ग्रन्थः प्रणीतः। स्वशाकटायनव्याकरणोपरि पाल्यकीर्तिनाऽतिविस्तृता वृत्तिः प्रणीता, या 'अमोघा' नाम्नी प्रसिद्धा। प्रभाचन्द्रेण अमोघावृत्तेः 'न्यास' नाम्नी टीका प्रणीता। शाकटायनव्याकरणस्य 'अमोघविस्तर' इत्याख्याया: व्याख्याया उल्लेखः माधवीयधातुवृत्तौ ( पृ० ४४ ) उपलभ्यते। तस्याः कर्तुर्नाम न ज्ञायते। यक्षवर्मणा अमोघावृत्तिमेव संक्षिप्य शाकटायनव्याकरणस्य 'चिन्तामणि' नाम्नी लघ्वी वृत्तिः प्रणीता। श्री अभयचन्द्राचार्येण शाकटायनव्याकरणमाश्रित्य 'प्रक्रियासंग्रह' इत्याख्यः, श्रीभावसेनत्रैविद्यदेवेन 'शाकटायनटीका' इत्याख्यः, श्रीमुनिदयापालेन च 'रूपसिद्धि' इत्याख्यः प्रक्रियाग्रन्थः प्रणीतः ग्रन्थोऽयं प्रकाशितः।

## ९. शिवस्वामी

शिवस्वामी महाकविरूपेण प्रसिद्धः। तत्प्रणीतं 'कप्फणाभ्युदय' इत्याख्यं महाकाव्यमत्युच्चकोटेर्ग्रन्थोऽस्ति। वैयाकरणरूपेण शिवस्वामिन उल्लेखः क्षीर-

तरङ्गिणी[1]-कातन्त्रगणधातुवृत्ति-माधवीयधातुवृत्ति[2]प्रभृतिषु ग्रन्थेषूपलभ्यते। वर्धमानः पतञ्जलिकात्यायनाभ्यां सह शिवस्वामिनम् सर्वप्रथमं निर्दिशति[3]। द्वितीये स्थाने 'परः पाणिनिः, अपरःशिवस्वामी' इत्युदाहरति।[4] अनेन प्रतीयते यत् शिवस्वामी वर्धमानदृष्टौ पाणिनिसदृशो महावैयाकरण आसीत्।

कल्हणेन राजतरङ्गिण्यां सूचितम् यत् शिवस्वामि काश्मीराधिपतेः अवन्तिवर्मणो राज्यकाले विद्यमान आसीत्।[5] अवन्तिवर्मणो राज्यकालः सं० ९१४-९४० वैं० यावत् वर्तते। अतः स एव कालः शिवस्वामिनोऽस्ति।

शिवस्वामिप्रोक्तो व्याकरणग्रन्थः सम्प्रति नोपलभ्यते। पूर्वोद्धृतैरुद्धरणैर्ज्ञायते-यत् शिवस्वामिना स्वव्याकरणस्य काचिद् वृत्तिः प्रणीता, तत्सम्बद्धधातुपाठस्याऽपि प्रवचनं विहितम्।

## १०. महाराजो भोजदेवः

महाराजेन भोजदेवेन 'सरस्वतीकण्ठाभरण' इत्यभिधेय बृहत् शब्दानुशासनं प्रणीतम्। योगसूत्रवृत्तिप्रारम्भे तेन स्वयमेव लिखितम्—

शब्दानामनुशासनं विदधता पातञ्जलं कुर्वता
वृत्तिं राजमृगाङ्कसंज्ञकमपि व्यातन्वता वैद्यके।

---

१. चान्तोऽयं (न्स श्च) इति शिवः।१।१२२, पृ० ४१। धून् इति इहामुं शिवस्वामी दीर्घमाह ।।५।१०, पृ २२६, २२७।।

२. अत्र वृत्तिकारशिवस्वामिभ्यां भाष्योक्तमस्वस्य स्वत्वेन करणं प्रसिद्धिवशात् पाणिग्रहणविषय उपसंहृतम्। ( माधवीयधातुवृत्ति, पृ० १९६ ) शिवस्वामिकश्यपौ तु दीर्घान्तमाहतुः ( तदेव, पृ० ३१६) शिवस्वामी वकारोपधं पपाठ। ( तदेव, पृ० ३५७ )

३. मुक्यशब्दस्यादिवचनत्वात् शिवस्वामिपतञ्जलिकात्यायनप्रभृतयो लभ्यन्ते। ( मधवीयधातुवृत्ति, पृ० २ )

४. माधवीया धातुवृत्ति, पृ० २९।

५. मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः। प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः ।। ( राजतरङ्गिणी, ५।३४।। )

वाक्चेतोवपुषां मलः फणिभृतां भर्त्रेव येनोद्धृत-
स्तस्य श्रीरणरङ्गमल्लनृपतेर्वाचो जयन्त्युज्ज्वलाः ॥

एतच्छ्लोकानुसारेण सरस्वतीकण्ठाभरण-योगसूत्रवृत्ति-राजमृगाङ्कग्रन्थानां प्रणेता एक एवेति स्पष्टं भवति।

भोजदेवनामानोऽनेके राजानः संवृत्ताः, किन्तु सरस्वतीकण्ठाभरणप्रभृतीनां ग्रन्थानां प्रणेता, विदुषामाश्रयदाता भोजदेवः परमारवंशीयो धाराधीश्वरश्चैव प्रसिद्धः। भोजदेवोऽयं महाराजस्य सिन्धुलस्य पुत्रो, महाराजस्य जयसिंहस्य च पिताऽऽसीत्।

महाराजस्य भोजदेवस्यैकं दानपत्रं १०७८ वैक्रमाब्दीयमुपलब्धम्, तस्योत्तराधिकारिणो जयसिंहस्य च दानपत्रं १११२ वैक्रमाब्दीयमुपलब्धम्। अतो भोजदेवस्य काल एकदशशतकोत्तरार्द्धम्, राज्यकालश्च १०७५ वैक्रमाब्दात् १११० वैक्रमाब्दं यावत् सामान्यतया स्वीक्रियते।

**संस्कृतभाषायाः पुनरुद्धारकः**

महाराजो भोजदेवः स्वयं महाविद्वान्, विद्यारसिको, विदुषामाश्रयदाता चाऽऽसीत्। तेन लुप्तायाः संस्कृतभाषायाः पुनरेकधा समुद्धारो विहितः तथा चोक्तम् श्रीवल्लभदेवेन भोजप्रबन्धे—

चाण्डालोऽपि भवेद् विद्वान् यः स तिष्ठतु मे पुरि।
विप्रोऽपि यो भवेन्मूर्खः स पुराद् बहिरस्तु मे ॥

महाराजस्य भोजदेवस्यैतादृशौदार्यकारणेनैतस्य समये तन्तुवायाः ( जुलाहे ) काष्ठभारवाहका ( लकड़हारे ) श्चाऽपि संस्कृतभाषामर्मज्ञाः संवृत्ताः। भोजप्रबन्धानुसारेण-एकदा धारानगर्यां बहिर्देशात् कश्चन विद्वानागतः। तस्य निवासार्थं नगर्यां किञ्चिदपि गृहं तदा रिक्तं नाऽऽसीत्। अतो राज्यकर्मचारिण एकंतन्तुवायमूचुः, यत्, सः स्वगृहं रिक्तं कुर्याद्, तत्रैकस्य विदुषो निवासस्य व्यवस्था भविष्यति। तन्तुवायो राज्ञो राजसदने गत्वाऽधोलिखितेषु चमत्कारपूर्णेषु शब्देषु स्वदुःखं न्यवेदयत्—

काव्यं करोमि नहि चारुतरं करोमि
यत्नात् करोमि यदि चारुतरं करोमि।
भूपालमौलिमणिमण्डितपादपीठ !
हे साहसाङ्क कवयामि वयामि यामि ॥

एकदा भोजराज एकं वृद्धं काष्ठभारवाहकमुवाच—

भूरिभारभराक्रान्त ! बाधति स्कन्ध एष ते।

अस्योत्तरे तेन वृद्धेन काष्ठभारवाहकेनोक्तम्—

न तथा बाधते राजन् ! यथा बाधति बाधते ॥

अर्थाद्—हे राजन्, काष्ठभारेण नाऽहमियद् कष्टमनुभवामि, यावद् भवतो 'बाधति' शब्देन कष्टं जायते।

वस्तुतो महाराजस्य विक्रमादित्यस्य कालानन्तरं भोजराजेनैवैतादृशः प्रयत्नो विहितो, येन संस्कृतभाषा पुनस्तात्कालिकजनानां लोकव्यवहारभाषा संवृत्ता। भोजराजस्यैतादृशस्तुत्यप्रयत्नैरेव संस्कृतभाषाऽद्यावधि जीविता, या च यवनानां सुदीर्घशासनकालेऽपि न विनष्टा।

महाराजेन भोजदेवेन 'सरस्वतीकण्ठाभरण' नामानौ द्वौ ग्रन्थौ प्रणीतौ, तत्रैको व्याकरणशास्त्रविषयकोऽपरश्चाऽलङ्कारविषयकः। भोजदेवस्य 'सरस्वतीकण्ठाभरण' इत्यभिधेये शब्दानुशासनेऽष्टौ बृहदध्यायास्सन्ति, प्रत्यध्यायं चत्वारः पादास्सन्ति। शब्दानुशासनस्याऽस्य सम्पूर्णा सूत्रसंख्या च ६४११ ( एकादशोत्तरचतुश्शतषट्सहस्र ) परिमिताऽस्ति।

प्राचीनकाले विभिन्नशास्त्रीयग्रन्थानामुत्तरोत्तरं संक्षेपात् शब्दानुशासनस्य परिभाषापाठ-गणपाठोणादिसूत्रप्रभृतयो महत्त्वपूर्णाः भागाः शब्दानुशासनात्पृथग्भूताः, तेषामध्ययनाऽध्यापनञ्च विलुप्तं जातम्। अत एव महाराजेन भोजदेवेनैतन्न्यून्यदूरीकरणार्थं स्वशब्दानुशासने पुनः परिभाषापाठ-लिङ्गानुशासनोणादिपाठ-गणपाठानां यथास्थानं सन्निवेशो विहितः। भोजदेवस्य सरस्वतीकण्ठाभरणे प्रारम्भिकेषु सप्तस्वध्यायेषु लौकिकशब्दानां सन्निवेशोऽस्ति, अन्तिमेऽष्टमेऽध्याये च स्वरप्रकरणस्य वैदिकशब्दानाञ्चऽन्वाख्यानमस्ति। सरस्वतीकण्ठाभरणस्योपरि भोजराज-

दण्डनाथनारायणभट्ट-कृष्णलीलाशुकमुनि-रामसिंहदेवप्रभृतिभिर्विद्वद्भिष्टीकाः प्रणीताः। महाराजेन भोजदेवेन व्याकरणमतिरिच्य योगशास्त्र-वैद्यक-ज्यौतिष साहित्य कोषादिविषयका अनेके ग्रन्थाः प्रणीताः।

## ११. बुद्धिसागरसूरि

आचार्येण बुद्धिसागरसूरिणा 'बुद्धिसागर' अपरंन 'पञ्चग्रन्थी' इत्याख्यं व्याकरणम्प्रणीतम्। आचार्येण हेमचन्द्रेण स्वीयलिङ्गानुशासनविवरणे[१], हैमाऽभिधानचिन्तामणिव्याख्यायाञ्चा[२]ऽस्म निर्देशो विहितः।

बुद्धिसागरसूरिः श्वेताम्बरसम्प्रदायस्याऽऽचार्य आसीत्। अयं चन्द्रकुलस्य वर्धमानसूरेः शिष्यः, जिनेश्वरसूरेश्च गुरुभ्राता आसीत्। बुद्धिसागरव्याकरणस्याऽन्ते-

श्रीविक्रमादित्यनरेन्द्रकालात्[३] साशीतिके याति समासहस्रे।
सश्रीकजाबालिपुरे तदाद्यं दृब्धं मया सप्तसहस्रकल्पम्॥

विद्यमानस्याऽस्यश्लोकनेन ज्ञायते यद्बुद्धिसागरः सं० १०८० वैक्रमाब्दे व्याकरणग्रन्थममुं प्रणिनाय। एतच्छ्लोकानुसारं बुद्धिसागरव्याकरणे सप्तसहस्रमिताः श्लोका आसन्, किन्तु प्रभावकचरितस्य—

'श्रीबुद्धिसागरसूरिश्चक्रे व्याकरणं नवम्।
सहस्राष्टकमानं तद् श्रीबुद्धिसागराभिधम्॥'

एतच्छ्लोकानुसारं व्याकरणग्रन्थेऽस्मिन् अष्टसहस्रश्लोकसंख्या विराजते।

## १२. भद्रेश्वरसूरिः

श्रीभद्रेश्वरसूरिणा 'दीपक' इत्यभिधेयं व्याकरणम्प्रणीतम। ग्रन्थोऽय सम्प्रत्यनुपलब्धः। गणरत्नमहोदधिकारेण वर्धमानेनोक्तम्—

---

१. उदरम् जाठरव्याधियुद्धानि। जठरे त्रिलिङ्गमिति बुद्धिसागरः। पृ० १०। इसी प्रकार पृष्ठ ४, १०३, १३३ परं भी निर्देश मिलता है।

२. ( उदरम् ) त्रिलिङ्गोऽयमिति बुद्धिसागरः।

३. पं० चन्द्रसागरसूरि सम्पादित सिद्धहैमशब्दानुशास्त्रबृहद्वृत्ति, प्रस्तावना, पृ० 'ख'॥

समजनि। अस्य पितुर्नाम श्रीओङ्कारओझा इत्यासीत्, यो ब्राह्मणवृत्त्या स्वपरिवारस्य पालनं करोति स्म। चतुर्षु भ्रातृषु अयं कनिष्ठ आसीत्; तथा चाऽयं बाल्यावस्थात एव प्रतिभासम्पन्नः स्वाध्यायप्रियश्चाऽऽसीत्। निर्धनत्वकारणेनाऽस्य पिता इमं काशीप्रभृतिषु विद्याकेन्द्रेषु प्रेषयितुं न शशाक। कतिचिद् वर्षाणि सः ग्रामीणपाठशालायामेव शिक्षां गृह्णाति स्म।

मनसि स्वाध्यायस्याऽत्युत्कटाभिलाषुकोऽयं एकदा सहसा स्वगृहात् पलायितः। तन्निकषैव विजयानगरम् साम्राज्य प्रबन्धकस्तदा एको बङ्गप्रदेशीयः सज्जन आसीत्, योऽतीव सहृदय उदारश्चाऽऽसीत्। सः पठनाद्यर्थं श्रीयागेश्वरमहोदयं विशेषतः प्रोत्साहयन समये-समये आर्थिक साहाय्य प्रदानेन स्वकीयौदार्यं परिचाययति स्म। तस्यैव प्रोत्साहनेन श्रीयागेश्वरमहोदयः स्वीयाध्ययनपूर्तौ साहाय्यमवाप।

तदा यातायातसौविध्यं नाऽऽसीत्। अतः श्रीयागेश्वरमहोदयः पदाभ्यां गोरखपुर नगरं सम्प्राप्तः। तत्र तदा एको महान् वैयाकरणो निवसति स्म, यो व्याकरणाध्यापनेन स्वजीविकां निर्वहति स्म। श्रीयागेश्वरमहोदयस्तस्माद् विदुषः व्याकरणशास्त्रमधीतवान्। पुनश्चाऽयं पदयात्रामुखेन वाराणसीं सम्प्राप्तः। तथा च तात्कालिकमूर्धन्यस्य विदुषः श्रीकाशीनाथशास्त्रिणः गृहं सम्प्राप्य पाठं श्रोतुमारेभे। एकदा पाठश्रवणकाल एव श्रीयागेश्वरमहोदय एकं प्रश्नमकरोत्। श्रीशास्त्रीमहोदयः उत्तरश्वो दास्यामीत्युक्तवान्। द्वितीयदिने प्रश्नोऽयं विधिवत् समाहितः, किन्तु सर्वेऽपि यागेश्वरं प्रत्याकृष्टाः सञ्जाताः, श्रीशास्त्रीमहोदयोऽपि यागेश्वरादतीव प्रभावितः। तस्यां कक्षायां श्रीबालशास्त्री अप्यधीते स्म। उभयोर्मध्ये मैत्र्यं समपद्यत।

काश्यां तदा दाक्षिणात्यपण्डितानां प्रभाव आसीत्। किन्तु श्रीयागेश्वरशास्त्री एवैकमात्रं उत्तरभारतीयो ब्राह्मणविद्वान् प्रथमो वैयाकरणश्चाऽऽसीत्, यः पाणिनीयव्याकरणशास्त्रस्य कीर्तिरक्षुण्णा प्रतिष्ठापिता। अस्य जीवनं तपोमयं त्यागमयञ्चाऽऽसीत्। संवत् १९५६ वैक्रमाब्दे ( १८९९ ईशवीये ) श्रीयागेश्वरओझामहोदयो दिवङ्गतः। अस्याऽध्यापनविषयो व्याकरणशास्त्रमासीत् तथा चाऽस्याध्यापनस्य

प्रियग्रन्था इमे आसन्—सिद्धान्तकौमुदी, परिभाषेन्दुशेखरः महाभाष्यञ्चेति। अयं प्रक्रियाविधिसमर्थकः आसीत्, अतः व्याकरणस्य कृते परिष्कारस्याऽनिवार्यत्वं न स्वीकरोति स्म। श्रीयागेश्वरमहोदयस्यैकमात्रं कृतिरस्ति—'हैमवती' या परिभाषेन्दुशेखरस्य विद्वत्तापूर्णा व्याख्याऽस्ति।

## श्रीबालशास्त्री
## ( १८३९ ई० )

पण्डितप्रवरः श्रीबालशास्त्री स्वीययुगस्यैको विचक्षणो विद्वानासीत्। सः व्याकरणशास्त्रे नूतनपरिष्काराणामाविष्कर्ता, प्रवरतमोवेदपाठी, कर्मकाण्डी, धर्मशास्त्री तथा च गीर्वाणवाक्प्रवक्तृषु अपरो बृहस्पतिरिव मन्यते स्म।

काश्याम् संवत् १८८६ वैक्रमाब्दे ( सन् १८३९ ईशवीये ) पौषकृष्णद्वादश्यां चित्तपावने महाराष्ट्रियकोङ्कणस्थब्राह्मणकुले महाभागोऽयं जन्म लेभे। अस्य पितुर्नाम गोविन्दभट्ट आसीत्। अस्य गोत्रम् 'भारद्वाजः' उपनाम च 'रानाडे' इत्यासीत्। गोविन्दभट्टेन विहितस्य, शिवस्य उग्रावतारस्य शरभस्याऽनुष्ठानस्य फलस्वरूपमस्य महाभागस्य जन्म जातम्। अस्य पिता अस्य नाम "विश्वनाथ" इति विहितम्। बाल्यकाले सर्वप्रियत्वादयं 'बाल' इति नाम्ना सुप्रसिद्धः। तृतीयवर्षावस्थायां श्रीबालशास्त्रिणः पिता श्रीगोविन्दभट्टः स्वविदुषे सुहृदे श्रीरामकृष्णदीक्षिताय स्वपुत्रं समर्प्य दिवङ्गतः। श्रीदीक्षितमहोदयेन पुत्रवदस्य पालनं पोषणं विहितम्, उपनयनसंस्कारो विहितः, ततश्च कृष्णयजुर्वेदः पाठितः। अल्पीयसा कालेनैवाऽनेन सम्पूर्णा अपि मन्त्राः कण्ठस्थीकृताः। चित्रकूटे श्रीविनायकरावपेशवामहोदयस्य सभायां वैदिकविदुषाम्मध्ये अस्य 'बालखिल्यशास्त्र' माकर्ण्य सर्वेऽप्याश्चर्यचकितास्सञ्जाताः। तदा ऽयमष्टवर्षदेशीय आसीत्। तथा चाऽयं "बालसरस्वती" त्युपाधिनाऽलङ्कृतः।

श्रीशास्त्रिमहाभागः ग्वालियरनगरं गत्वा श्रीमतो बाबाशास्त्रिबापटमहोदयात् वैयाकरणसिद्धान्तकौमुदीं, श्रीकुप्पाशास्त्रिमहोदयात् पूर्वमीमांसां अधीतवान्; तथा च पुणेनिवासिनः श्रीमोरशास्त्रिमहोदयात् न्यायशास्त्राध्ययनं पूर्णं विहितवान्। संवत् १९१२ वैक्रमाब्दे श्रीपण्डितबच्चाशास्त्रिणः कन्यया साकमस्य विवाहः

सम्पन्नः । ततो श्रीबालशास्त्री काशीमागत्य काशिकराजकीयसंस्कृतपाठशालायां व्याकरणबिभागाध्यक्षात् श्रीपण्डितकाशीनाथशास्त्रिमहोदयात् ईषद् व्याकरणमधीतवान् । ततश्चाऽनेन पण्डितराजारामशास्त्रिमहोदयात् सम्पूर्णं व्याकरणशास्त्रम्, व्याकरणमहाभाष्यञ्च गाम्भीर्येणाऽधीतम् । फलतः श्रीबालशास्त्रिणः व्याकरण-योग-न्यायशास्त्रेषु वैदुष्यं देदीप्यमानमिव सञ्जातम् । संवत् १९२१ वैक्रमाब्देऽयं काशिकराजकीयसंस्कृतपाठशालायां सांख्यशास्त्राध्यापकरूपेण नियुक्तः ।

अस्य प्रामुख्यम्भजमानाः शिष्या आसन्——महामहोपाध्यायपण्डितशिवकुमारशास्त्री, महामहोपाध्यायगङ्गाधरशास्त्री, महामहोपाध्यायदामोदरशास्त्री, महामहोपाध्यायश्रीरामकृष्णशास्त्री ( तात्याशास्त्री ) चेति ।

श्रीबालशास्त्री व्याकरणशास्त्रे ग्रन्थद्वयं प्रणिनाय । व्याकरणमहाभाष्योपरि टिप्पणी, या कैयटकृतटीकया सह राजराजेश्वरीमुद्रणालयात् काशीतः प्रकाशिता । परिभाषेन्दुशेखरस्योपरि "सारासारविवेक" नामकं व्याख्यानम् ।

एतदतिरिच्य श्रीशास्त्रिणा ब्रह्मसूत्रशाङ्करभाष्यस्य टीका 'भामती' संशोध्य प्रकाशिता । श्रौतविषये 'बृहद ज्योतिष्टोमपद्धति' नामा ग्रन्थः प्रणीतः, तथा च "विधवोद्वाहशङ्कासमाधिः" ग्रन्थोपरि स्वटीका प्रणीता ।

## पण्डितजयदेवमिश्रः

### ( १८४४ ई० तः १९२५ ई० यावत् )

पण्डितजयदेवमिश्रस्य जन्म मिथिलायां "गजहड़ा" ग्रामे संवत् १९११ वैक्रमाब्दे ( १८४४ ईशवीये ) वर्षे पवित्रतमे 'सोदरपुर' इत्याख्ये विद्वत्कुले सम्बभूव । उपनयनसंस्कारानन्तरं सः तात्कालिक प्रतिष्ठित वैयाकरणात् पण्डितहल्लीझामहोदयाद् व्याकरणशास्त्रस्य प्रारम्भिकान् ग्रन्थानधीतवान् । ततः 'गन्धवारि' इत्याख्ये ग्रामे महामहोपाध्यायपण्डितरज्जोमिश्रमहोदयाद् व्याकरणशास्त्रस्य सुप्रसिद्धटीकाग्रन्थान् शब्देन्दुशेखरप्रभृतीनधीतवान् । अत्र पण्डितमण्डल्यां सर्वत्राऽयं सुविख्यातो बभूव । शास्त्रार्थेऽस्य प्रारम्भकालादेवाऽभिरुचिरासीदेव । ततः काशीमागत्य श्रीमिश्रमहोदयः पण्डितशिवकुमारशास्त्रिणः सान्निध्यमङ्गीचकार ।

अस्य सुप्रसिद्धयाऽतीव प्रभावितो दरभङ्गानरेशः श्रीलक्ष्मीश्वरसिंहः काशीस्थ-दरभंगापाठशालायामिमम्ध्यापकत्वेन नियोजयामास। तत्र तदानीं म० म० पं० शिवकुमारशास्त्री, पण्डिततात्याशास्त्री, म० म० सुधाकरद्विवेदी च। ऽध्यापन-कर्मणि निरता आसन्।

अस्य ग्रन्था इमे—

(१ परिभाषेन्दुशेखरस्य 'विजया' टीका।

(२) शास्त्रार्थरत्नावली।

(३) व्युत्पत्तिवादस्य 'जया' टीका।

परिभाषेन्दुशेखरस्य 'विजया' इति टीकायां जयदेवः नागेशरहस्यावबोधने साफल्यमवाप। तात्याशास्त्रिप्रणीतायां 'भूति' इत्याख्यटीकायां सत्यामपि 'विजया' टीकाया लोकप्रियत्वावाप्तिरिदं साधयति यत् श्रीमिश्रमहोदयस्य टीका सरला, सुबोधा, बोधगम्या चास्ति। 'शास्त्रार्थरत्नावली' इति ग्रन्थे सः पाणिनीय सूत्राधारिताः शास्त्रार्थकोटीः लिपिबद्धाः कृतवान्। व्युत्पत्तिवादस्य 'जया' इत्याख्य टीकायां सः क्लिष्टस्थलेषु सुबोधत्वापादने साफल्यमवाप।

श्रीपं०जयदेवमिश्रस्य शिष्येषु महामहोपाध्यायः डॉ० गंगानाथझाः पण्डित-राजः राजनारायणःशास्त्री चेति प्रमुखाः। सं० १८८२ वैक्रमाब्दे (१९२५ ईशवीये फाल्गुनमासे शुक्लपक्षस्य सप्तम्यां तिथौ पं० जयदेवमिश्रो दिवङ्गतः।

## महामहोपाध्यायः श्रीरामकृष्णशास्त्री (तात्याशास्त्री)
## ( सन् १८४५ ई० तः सन् १९१९ ई० यावत् )

''तात्याशास्त्री''ति नाम्ना प्रसिद्धः पं० श्रीरामकृष्णशास्त्री महाराष्ट्रप्रदेशीयः कोङ्कणवंशीयो ब्राह्मण आसीत्। अस्य पूर्वजानां मूलस्थानं अयमेव कोङ्कणप्रदेश आसीत्। पटवर्धनश्रीपण्डितकृष्णशास्त्री अस्य श्रीतात्याशास्त्रिणः पूर्वज आसीत्। सः 'सतारा' ग्रामः स्वकर्मक्षेत्रत्वेन निर्धारितः।

श्रीतात्याशास्त्रिणः पितुर्नाम श्रीमहादेवभट्ट आसीत्। अयं स्वपितुर्द्वितीयः पुत्र आसीत्। संवत् १९०२ वैक्रमाब्दे ( सन् १८४५ ईशवीये ) वर्षे आषाढ-शुक्लत्रयोदश्यां नागपुर एव श्रीतात्याशास्त्रिणो जन्म बभूव। सार्धद्विवर्षावस्थाया-

मस्य मातापितरौ दिवङ्गतौ। अस्य पितृव्यः श्रीनागेश्वरभट्टः इमं काशीं नीतवान्, अस्य पालनपोषणं च चकार। अस्य पितृव्यः आवश्यककार्यवशात् नागपुरं गतस्तदा इममपि नीतवान्। नागपुरे सः षड् वर्षाणि 'खरे उप' इत्याख्यविदुषः सकाशे काव्यकोशादिकं विधिवदधीतवान्। पुनः चतुर्दशवर्षदेशीयः सः काशीमागत्य वेदान्कर्मकाण्डञ्च सम्यगधीतवान्। श्रीबालशास्त्रिमहोदयादयं सम्पूर्णपरिष्कारेण सह व्याकरणशास्त्रम्, वेदान्तम्, धर्मशास्त्रञ्चाऽधीतवान्।

सकलशास्त्राणामध्ययनानन्तरं श्रीतात्याशास्त्री वाराणस्यां दरभंगा संस्कृत-पाठशालायां नियुक्तः। पुनश्च वाराणस्यां सन् १८८० ईशवीये अयं काशिक-राजकीयसंस्कृतमहाविद्यालये व्याकरणविभागाध्यक्षपदे नियुक्तः। अनेनाऽनेके छात्राः प्रकाण्डवैयाकरणाः कारिताः। सः काशिकराजकीयसंस्कृतपाठशालायां सन् १९१९ ईशवीयं यावत् कार्यरत आसीत्। संवत् १९७६ वैक्रमाब्दे ( सन् १९१९ ईशवीये ) वर्षे फाल्गुनशुक्लतृतीयायां तिथाऽवयं दिवङ्गतः।

श्रीतात्याशास्त्रिणः कृतिषु सुप्रसिद्धा कृतिरस्ति—नागेशभट्टप्रणीतस्य परिभाषेन्दु-शेखरस्य टीका 'भूतिः'। अस्यां टीकायां मूलग्रन्थस्य भावानां विवेचनमतीव मार्मिकरित्या सरलशब्दैर्विहितम्। नागेशभट्टप्रणीतस्याऽन्यस्य ग्रन्थस्य "शब्देन्दु-शेखर" इत्याख्यस्य चाऽपि टीकाऽनेन प्रणीता इति श्रूयते, किन्तु सा टीका नाऽद्यावधिमुद्रिता। श्रीतात्याशास्त्रिणा सम्पादिताः ग्रन्था इमे—वाक्यपदीयस्य हस्तलेखानां संशोधनं विधाय प्रकाशनम्। सः विज्ञानभिक्षुप्रणीतं योगवार्तिक-ग्रन्थं सम्पादितवान् यः काशीस्थमेडिकलहाल द्वारा प्रकाशितः। अयं सन् १९०९ ईशवीये वर्षे ब्रिटिशसर्वकारेण 'महामहोपाध्याय' इत्युपाधिना विभूषितः।

श्रीतात्याशास्त्रिणोऽनेके सुयोग्यशिष्या आसन्—मैथिलाः, महाराष्ट्रवंशीयाः एतद्देशीयाश्च। मैथिलशिष्येषु महामहोपाध्यायशशिनाथझा, पण्डितद्रव्येशझा, श्रीधरझा, महावीरझा चेति प्रमुखाः। महाराष्ट्रवंशीयशिष्येषु प्रामुख्यम्भजमानौ शिष्यौ स्तः—पण्डितरामशास्त्री परांजपे, दामोदरशास्त्री सहस्रबुद्धे चेति। एत-द्देशीयशिष्येषु प्रामुख्यं भजमानाः सन्ति—पण्डितरामयशास्त्रिपाठी ( महाशयजी ) पं० विद्याविलासशुक्लः, पं० रामदेवद्विवेदी चेति।

## महामहोपाध्यायः श्रीदामोदरशास्त्री भारद्वाजः
### ( सन् १८४७ ई० तः १९०९ ई० यावत् )

प्रायेण चतुःशतवर्षेभ्यः पूर्वमेव भारद्वाजवंशीयानां महाराष्ट्रिय ब्राह्मणानां कुलं काश्यां प्रतिष्ठितमासीत्। काशीस्थमहाराष्ट्रिय ब्राह्मणेषु श्रेष्ठत्वेन विश्रुतेन भट्टभट्टकुलेन सह भारद्वाजानां वैवाहिकः सम्बन्धः स्थाप्यते स्म। सप्तदशशतके भट्टभट्टवंशस्य सुविख्यातो वंशजः धर्मशास्त्रप्रवीणः मयूखकारः श्रीनीलकण्ठभट्टः स्वपुत्र्याः विवाहः भारद्वाजकुलस्य श्रीमहादेवभट्टेन सह कृतवान्। श्रीमहादेवभट्टस्य द्वौ पुत्रावास्ताम्—दिनकरभट्टः, दिवाकरभट्टश्चेति। सम्प्रति प्रवर्तमानायां श्रीदिवाकरभट्टस्य वंशपरम्परायां श्रीबालकृष्णभट्टो बभूव। श्रीबालकृष्णभट्टस्य चतुर्षु पुत्रेषु म० म० श्रीदामोदरशास्त्री तृतीयपुत्र आसीत्।

श्रीदामोदरशास्त्रीभारद्वाजस्य जन्म संवत् १९०४ वैक्रमाब्दे ( सन् १८४७ ईशवीये ) वर्षे बभूव। अस्य प्रारम्भिकी शिक्षा गृहे जाता। कालान्तरे तस्याग्रजः श्रीरामशास्त्री स्वभ्रातॄन् विशिष्टाध्ययनार्थं काशीं प्रापितः, तथा च तेन श्रीबालशास्त्रिमहोदयस्य पाठशालायां तेषां प्रवेशः कारितः। श्रीबालशास्त्रिमहोदयात् तेन सर्वाण्यपि शास्त्राण्यधीतानि। प्रातःकाले अयमधीते स्म, अपराह्णे च स्वगृहे मैथिलछात्रान् अध्यापयति स्म।

पितुः रुग्णत्ववृत्तान्तमाकर्ण्य श्रीरामशास्त्री स्वभ्रातृभिः सह स्वग्रामं प्राप्तः। मार्गे 'ग्वालियर' नगरे महाराजस्य जयाजीरावस्य राज्यसभायां स्थानीयपण्डितैः सह भयङ्करः शास्त्रार्थोऽभूत्, यत्र श्रीदामोदरशास्त्री विजयी बभूव। महाराजः श्रीशास्त्रिणः प्राचुर्येण सम्मानमकरोत्; पञ्चशतरूप्यकैः सह बहुमूल्यमौत्तरीयवस्त्रञ्चाऽस्मै प्रादात् ससम्मानमुं तद्गृहं समप्रापयच्च। गृहे सम्प्राप्त्यनन्तरं पुत्रस्य राजकीयसम्मानेन तत्पिताऽतीव प्रसन्नः सञ्जातः। किञ्चित् कालानन्तरं सः काशीं सम्प्राप्तः, काश्यामेव च तस्य प्राणान्तो बभूव।

सन् १८७९ ईशवीये श्रीदामोदरशास्त्री काशीकराजकीयसंस्कृतपाठशालायां काश्यां व्याकरणशास्त्राध्यापको नियुक्तः। अस्य प्रसिद्धेः फलस्वरूपम् ब्रिटिश सर्वकारेण सन् १८९९ ईशवीये अयं 'महामहोपाध्याय' उपाधिनाऽलङ्कृतः।

सन् १९०६ ईशवीये शृङ्गेरीस्थशारदापीठस्य शङ्कराचार्येणाऽयं 'अशेषवाङ्मय-पारग'—'वैयाकरणकेसरी' इत्युपाधिभ्यां विभूषितः। राघोपुरे श्रीपं ऋद्धिझा-महोदयेन, काश्याञ्च पण्डितबच्चाझा महोदयेन सहाऽस्य शास्त्रार्थः प्रसिद्धः। काश्यामयं सन् १९०९ ईशवीये वर्षे दिवङ्गतः। श्रीदामोदरशास्त्रिणः शिष्येषु प्रामुख्यम्भजमानाः शिष्याः सन्ति—पं० रामभवनउपाध्यायः, पं० चन्द्रधरशर्मा, पं० देवनारायण त्रिपाठी, पं०ठाकुरप्रसादद्विवेदी चेति।

## गंगाधरशास्त्रीतैलङ्गः

## ( सन् १८५३ ई० तः १९१३ ई० यावत् )

काश्याः विद्वन्मंडल्यां महामहोपाध्याय श्रीपं०गङ्गाधरशास्त्रीतैलङ्गस्य स्थानमतीव प्रकृष्टतमं स्वीक्रियते। सोऽतीवप्रतिभासम्पन्नः, पटुलेखकः, व्यवहार कुशलश्चाऽऽसीत्। अस्य मूलस्थानम् 'बंगलूर' नगरं निकषा 'यस्सरगट्टा' नामा ग्राम आसीत्। तत्रैव गौतमगोत्रोत्पन्नः श्रौतस्मार्तः श्रीसुब्रह्मण्यशास्त्री मानवल्ली नामा विज्ञब्राह्मणो वसति स्म। तस्य पुत्रः श्रीनृसिंहशास्त्री बाल्यकाले पित्रोः मृत्युकारणेनाऽनाथावस्थायां बंगलूरनगरे स्वमातुलस्य गृहे उषितुमारेभे। तत्रैव-स्वपरम्परागतकृष्णयजुर्वेदीयाऽऽपस्तम्बशाखाया विधिवदध्ययनं साहित्यशास्त्रेऽऽलौकिकं पाण्डित्यञ्च सम्पाद्य काशीं सम्प्राप्तः। काश्यां न्यायवेदान्तादिशास्त्राणा-मध्ययनं विधाय काश्यामेवाऽयं परिणयसूत्रे आबद्धः; तथा च काशिराजस्य महाराजस्य ईश्वरीनारायणसिंहस्य राज्यसभापण्डितः संवृत्तः।

श्रीनृसिंहशास्त्रिणो ज्येष्ठपुत्रस्य श्रीगंगाधरशास्त्रिणो जन्म काश्यां संवत् १९१० वैक्रमाब्दे ( सन् १८५३ ईशवीये ) वर्षे गंगादशहरादिवसे बभूव। पिता स्वपुत्रस्य 'सुब्रह्मण्य' इति नाम चकार, किन्तु मातामही गंगादशहरादिवसे जातत्वात् बालकस्य नाम 'गंगाधर' इति कृतम्; तदेव च नाम सर्वत्र सुप्रसिद्धम्। त्रिवर्षावस्थायां माता दिवंगता। पिता बाल्यसंस्कारसम्पादनपूर्वकं बालकं स्वयमेव प्राथमिकीं शिक्षां शिक्षितवान्।

उपनयनसंस्कारानन्तरं श्रीगङ्गाधरमहोदयः पण्डितश्रीबालकृष्णभट्टाख्यस्य महतो वैदिकपण्डितस्य पाठशालायां साङ्गां कृष्णयजुर्वेदस्य आपस्तम्बशाखा-

मधीतवान् षोडश वर्षाणि यावत् अयं वेद-वेदांग-कर्मकाण्ड-काव्यशास्त्राणामध्ययनं पूरितवान्। पितुराज्ञया श्रीगंगाधरमहोदयः काशीं सम्प्राप्तः, तथा काशिकराज-कीयसंस्कृतपाठशालायां श्रीपण्डितराजारामशास्त्रिणः सकाशे दशवर्षाणि यावद् व्याकरणशास्त्रमधीतवान्। श्रीराजारामशास्त्रिमहोदयः श्रीगंगाधरमहोदयं सपरिष्कारं सम्पूर्णं व्याकरणशास्त्रम्, धर्मशास्त्रम्, सांख्ययोगं वेदान्तं च विधिव-दध्यापितवान्। संवत् ९३२ वैक्रमाब्दे ( सन् १८७५ ईशवीये ) वर्षे पण्डित-राजारामशास्त्रिण स्वर्गवासो जातः। फलतः सः स्वदिवंगतगुरोः स्वप्ने शिक्षामवाप्तवान्।

संवत् १९३६ वैक्रमाब्दे ( सन् १८७५ ईशवीये ) वर्षे तात्कालिक संस्कृत-पाठशालायाः (काशी) प्राचार्यः श्रीथीबोमहोदयः श्रीगंगाधरशास्त्रिणं साहित्य दर्शनशास्त्राध्यापकत्वेन नियोजितवान्।

श्रीगंगाधरशास्त्रिमहोदयः पदमञ्जरी-रसगंगाधर-वाक्यप्रदीय-तन्त्रवार्तिकाषां टिप्पणीः परिष्कारादिना समलङ्कृत्य 'पण्डित' पत्रे विजयानगरम् संस्कृतसीरीज-संस्थाने प्रकाशिताः। संवत् १९४४ वैक्रमाब्दे ब्रिटिशशासकै रयं 'महामहोपाध्याय' इत्युपाधिना समलङ्कृतः। सन् १९०३ ईशवीये वर्षे लार्डकर्जनमहोदयो वाराणसीं सम्प्राप्तः। तस्य सम्मानार्थं आयोजितायां सभायां श्रीगंगाधरशास्त्रिणो व्यवहारेण कर्जनमहोदयोऽतिप्रसन्नः सञ्जातः; तथा च तेनाऽयं 'सी० आई० ई०' इति विशिष्टसम्मानोपाधिना सम्मानितः। संवत् १९७० वैक्रमाब्दे ( सन् १९१३ ईशवीये ) वर्षे ज्येष्ठशुक्लप्रतिपदि श्रीगंगाधरशास्त्रिमहोदयो दिवंगतः।

श्रीगंगाधरशास्त्रिमहोदयस्याऽनेके शिष्याः समभूवन्, यत्र प्रमुखाः पण्डित-हेमराजशर्मा-पं०दिवाकरभट्ट-महाराजाप्रभुनारायणसिंह प्रभृतयो वर्तन्ते।

## पं० उमापतिर्द्विवेदी ( नकछेदराम दूबे )
## ( सन् १८५३ ई० तः १९११ ई० यावत् )

पण्डितप्रवर उमापतिर्द्विवेदी बालशास्त्रीयुगस्यैकोऽलौकिकः शेमुषीसम्पन्नो विद्वानासीत्। अस्याऽऽदिमस्थानं गोरखपुरमण्डलान्तर्गतस्य "बाँसगाँव" इत्याख्य-पत्तनस्य "सहुआपार" इत्याख्ये ग्रामे आसीत्। ततोऽस्य परिवारः गोरखपुर-

मण्डलस्य अलीनगराख्ये ( साम्प्रतिके आर्यनगरे ) स्थाने समागतः । कुलमस्य गोरखपुरमण्डलस्य प्रतिष्ठितः परिवारः गौतमगोत्रीयः काञ्चनीयः गुरुदुबानसरयूपारीणब्राह्मण आसीत् ।

अस्य पितुर्नाम श्रीहरिदत्तो द्विवेदो आसीत्, यः तस्मिन् क्षेत्रे व्याकरण-न्याय-वेदान्तविषयाणां प्रकाण्डः मन्यते स्म । गोरखपुरमण्डल एव संवत् १९१० वैक्रमाब्दे ( सन् १८५३ ईशवीये ) वर्षे चैत्रशुक्लद्वितीयायां उमापतिमहोदयस्य जन्म बभूव । काश्याम् अष्टपञ्चाशद्वर्षपरिमितायामवस्थायां सं० १९६८ वैक्रमाब्दे ( सन् १९११ ईशवीये ) वर्षे अयं दिवङ्गतः ।

स्वपितुः सकाशे श्रीउमापतिमहोदयः सर्वाणि शास्त्राण्यधीतवान् । प्रारम्भेऽयं गोरखपुरीयपाठशालास्वेवाऽध्यापनं चकार । कालान्तरे सः अयोध्यानगर्याः विशिष्ट-पाठशालायामध्यापनकार्यार्थं नियोजितः ।

श्रीउमापतिमहोदयः "नकछेदरामद्विवेदी" ति नाम्नाऽधिकं प्रसिद्धः । अस्यैको ग्रन्थोऽस्ति—"सनातनधर्मोद्धारः", यस्य चत्वारि खण्डानि सन्ति । अत्र वेदशास्त्र-स्वरूपम्, सनातनधर्मस्य मौलिकाः सिद्धान्ताश्चात्र प्रामाणिकतया विवेचिताः । पण्डितमदनमोहनमालवीयमहोदय इमं हिन्दीभाषानुवादेन सह विश्वविद्यालयात् प्रकाशितः तथा चाऽनेन शब्देन्दुशेखरपरिभाषेन्दुशेखराख्ययोर्ग्रन्थयोरुपरि "जटा" नाम्नी टीका प्रणीता । अस्याऽन्योग्रन्थोऽस्ति—नारायणकाव्यम्, योऽद्यावधि न मुद्रितः ।

## श्रीपण्डितराजारामशास्त्री कार्लेकरः
### ( १८५५ ई० तः १८७५ ई० यावत् )

'कार्लेकरे'त्युपाह्वः श्रीपण्डितराजारामशास्त्री संस्कृतभाषायाः नानाशास्त्र-प्रौढित्वसम्पन्नः अव्यावहारिकयोगविद्यायाश्चाऽपि मनीषी विद्वानासीत् । पाणिनीय-व्याकरणे तु सः महाभाष्यप्रणेतुः पतञ्जलेराचार्यस्य नूतनावतार एव स्वीक्रियते स्म । बुद्धेर्निमलविलासात्, प्रतिभाया उदात्तचमत्कारवशेन, अध्यात्मज्ञानस्य, चाऽन्तर्मर्मज्ञत्वकारणेन च सः स्वकालिककाशीस्थविद्वन्मण्डल्यां श्रेष्ठत्वेन स्वीक्रियते स्म ।

काश्यां खलु श्रीगोविन्दशर्मनामा श्रौतविद्याधुरन्धरः, दाक्षिणात्यः, चित्तपावनजातीयो विद्वान् वसति स्म। तस्य त्रिषु पुत्रेषु कनिष्ठपुत्रः श्रीपण्डितराजारामशास्त्री आसीत्। दशवर्षावस्थायां तस्य पिता दिवङ्गतः। फलतः पण्डितराजारामशास्त्रि महाभागः स्वीयां चित्तवृत्तिं संस्कृताध्ययनम्प्रति केन्द्रितवान्। तथा च काश्यां त्रिलोचनघट्टे तपोमूर्तेः श्रीपण्डितहरिशास्त्रिरानाडेमहोदयस्याऽन्तिके स्वीयाध्ययनमारेभे। स्वल्पकालेनैवाऽयं कौमुदीसकलकाव्यादिषु प्रौढित्वमवाप। ततः तात्कालिकात् महतो विदुषो नैयायिकात् श्रीपण्डितदामोदरशास्त्रिमहाभागात् तर्कशास्त्रमपि सम्यग् अधीत्य श्रीपण्डितराजारामशास्त्रिमहाभागस्य चरणयोः स्थित्वा व्याकरणशास्त्रस्य प्रौढग्रन्थानधीतवान् गुरोश्च नैसर्गिकानुग्रहेण सः तद्विषयस्य पारङ्गमोविद्वान् समपद्यत। सं० १९३२ वैक्रमाब्दे (सन् १८७५ ईशवीये) अयं दिवङ्गतः।

अस्य एक एव ग्रन्थोऽस्ति—विधवोद्वाहशङ्कासमाधिः। अस्य रचनाकालः संवत् १९१२ वैक्रमाब्दः ( सन् १८५५ ईशवीयः ) वर्तते। अयं धर्मशास्त्रस्य ग्रन्थोऽस्ति।

## पंण्डितगंगादत्तशास्त्री

### ( १८५६ ई० तः १९२३ ई० यावत् )

सर्वशास्त्रनिष्णातः पण्डितगङ्गादत्तशास्त्री बुलन्दशहरमण्डलस्य 'बेलोन' इत्याख्ये पत्तने सनाढ्यब्राह्मणकुले संवत् १९२३ वैक्रमाब्दे ( १८५६ ईशवीये ) वर्षे जनिं लेभे। अस्य प्रारम्भिकी शिक्षा खुर्जानगरे जाता। तत्रोषित्वा सः व्याकरणशास्त्रम् ज्योतिषशास्त्रञ्चाऽधीतवान्। ततः १९४४ वैक्रमाब्दात् १९४५ वैक्रमाब्दं यावत् मथुरामण्डले सः दण्डिनः विरजानन्दस्य सुविख्यातशिष्यात् पण्डित-उदयप्रकाशाद् अष्टाध्यायीमधीतवान्। ततः १९४६ वैक्रमाब्दे काशीमागत्य सः १९५१ वैक्रमाब्दं यावत् सुविख्यातविदुषः पं० काशीनाथ शास्त्रिणः नव्यव्याकरणम्, दर्शनशास्त्रञ्च, पण्डितहरनामदत्तभाष्याचार्यात् व्याकरणमहाभाष्यम् चाऽधीतवान्। अत्रैव सः पण्डितकृपाराम ( दर्शनानन्द )—पण्डित भीमसेनशर्मा—पण्डितआर्यमुनिमहाभागैः सह परिचितो बभूव। एतेषामेव संसर्गादयं आर्यसमाजे दीक्षितः।

कालान्तरे पण्डितगङ्गादत्तः जालन्धरनगरे वैदिकपाठशालायामध्यापनकार्यम-करोत्। ततः "गुरुकुल गुजराँवाला" इति संस्थाने सः मुख्याधिष्ठातृपदे नियोजितः। सन् १९०२ ईशवीये गुरुकुलकांगड़ीसंस्था प्रारब्धा। तस्य गुरुकुलस्य संस्थापकस्य महात्मनः मुन्शीरामस्य (स्वामिश्रद्धानन्दस्य) अनुरोधेन सः तत्राऽऽगतः आचार्यपदे च स्थित्वा उच्चश्रेणिछात्रान् व्याकरणवेददर्शनादिविषया-नध्यापयितुमारेभे। कालान्तरे सः ज्वालापुरगुरुकुले आगतः। सं० १९७२ वैक्रमाब्दे सः ब्रह्मचर्याश्रमात् सन्यासदीक्षां गृहीतवान् "शुद्धबोधतीर्थ" इति नाम अवाप। सः सफलसंस्कृताध्यापकरूपेण प्राचुर्येण सुविख्यातो बभूव। संवत् १९९० वैक्रमाब्दे (१९२३ ईशवीये) वर्षे ज्वालापुरगुरुकुले पण्डितगङ्गादत्तो दिवङ्गतः।

गङ्गादत्तेन पाणिनीयाष्टाध्याय्याः "तत्त्वप्रकाशिका" नाम्नी परमोपयोगिनी व्याख्या प्रणीता, या संवत् १९६२ वैक्रमाब्दे गुरुकुलकाङ्गड़ीविश्वविद्यालयेन प्रकाशिता।

## स्वामी दर्शनानन्दसरस्वती
### (१८६१ ई० तः १९१३ ई० यावत्)

पञ्जाबप्रदेशे "जगराँव" पत्तने सन् १८६१ ईशवीये पं० कृपारामो जनिं लेभे, यः कालान्तरे स्वामीदर्शनानन्द नाम्ना सुविख्यातः, आर्यसमाजस्य तेषु विद्वत्सु परिगण्यते, येषां अध्ययनस्थलं कार्यस्थलञ्चापि काशी एवासीत्। पं० कृपारामः जन्मना सारस्वतब्राह्मण आसीत्। तस्य परिवारः व्यापारव्यवसाय-कारणेन प्राचुर्येण द्रव्योपार्जनं कृतवानासीत्। कृपारामः स्वयौवन एव इतस्ततः भ्रमन् काशीमागतः। तथा चाऽथं सुप्रसिद्धस्य पं० हरिनाथस्य (स्वामिमनीष्या-नन्दस्य) विदुषोऽन्तेवासी संवृत्तः। तस्य सकाशेऽयं शास्त्राध्ययनमकरोत्। अध्ययनसमाप्त्यनन्तरमपि सः काश्यामेव वसति स्म। तथा चाऽनेन संस्कृत-च्छात्राणां दुर्लभशास्त्रग्रन्थाः सारल्येन यथा सुलभाः स्युरेतदर्थं "तिमिरनाशक-प्रेस" इत्याख्यो मुद्रणालयः संस्थापितः। तस्मात् मुद्रणालयात् सः मूलसामवेद-अष्टाध्यायी-काशिका-महाभाष्य-दर्शन-उपनिषद् प्रभृतीननेकान् ग्रन्थान् मूलरूपेण

मुद्रापयित्वा न्यूनमूल्ये छात्रेभ्यः प्रादात्। उदाहरणरूपेण एकमात्रं तात्कालिक प्रकाशकः 'लाजरस कम्पनी' काशिका पञ्चदशरुप्यकैः महाभाष्यञ्च त्रिशत्रुप्यकैर्ददाति, तावेव ग्रन्थौ कृपारामः क्रमशः त्रिरुप्यकैः दशरुप्यकैश्च छात्रेभ्यः प्रादात्।

कालान्तरे सन्यासं गृहीत्वा 'स्वामी दर्शनानन्द' इति नाम्ना ख्यातः सनातन-वैदिकधर्मप्रचारक महामनीषी पं० कृपारामः न्यायवैशेषिकसांख्यवेदान्तदर्शनानां व्याख्याः उर्दूभाषयाऽपि प्रणीतवान्। तथा च सः ईशादिषण्णामुपनिषदां उर्दू-भाषायां भाष्यं प्रणीतम्। सः सिकन्दराबाद-बदायूं-ज्वालापुर-रावलपिण्डी प्रभृतीन् स्थलानि निकषा गुरुकुलानि संस्थाप्य संस्कृतविद्यायाः प्रचारमकरोत्। सन् १९१३ ईशवीये वर्षे मई मासस्य एकादशदिनांके स्वामी दर्शनानन्दो दिवङ्गतः।

## पण्डितदेवनारायणस्त्रिपाठी ( तिवारीजी )
### ( १८६६ ई० तः १९४१ ई० यावत् )

पण्डितदेवनारायणत्रिपाठिमहोदयः पण्डितमण्डल्यां "तिवारीजी" ति नाम्ना सुविख्यात आसीत्। सः भाष्यान्तव्याकरणस्य प्रौढः प्रवीणश्च पण्डित आसीत्। अध्यापक रूपेण तस्येदृशी ख्यातिरासीत् यत् तस्य गृहे छात्राणां सम्मर्द एव दृश्यते स्म। अस्याऽध्यापनशैली अतीव विचित्रा आसीत्। सः व्याकरणशास्त्रस्य मूर्धन्यग्रन्थानामीदृशं मननमकरोत्, यत् सर्वाण्यपि शास्त्राणि तस्य जिह्वाग्रे विद्यमानान्यासन्। अस्याऽध्यापनशैल्या इदं वैशिष्ट्यमासीत् यत् पाणिनेः किमपि सूत्रं व्याचक्षाणोऽयं सूत्रस्याऽस्य विषये अनेकेषु टीकाग्रन्थेषु महाभाष्ये च यत् किञ्चिदपि लिखितम् तत् सर्वमपि छात्रान् पाठयति स्म। अनेन शिष्याणां विभिन्नटीकाग्रन्थेषु विहितस्य विवेचनस्य सारांशः एकवारमेव सारल्येन अवगम्यते स्म।

बिहार प्रदेशे 'गया' क्षेत्र निकषा 'पुनपुन' इत्याख्यनद्यास्तीरे एकस्मिन् ग्रामे श्रीपण्डितदेवनारायणत्रिपाठी संवत् १९२३ वैक्रमाब्दे (सन् १८६६ ईशवीये) वर्षे समजनि। अस्य पितुर्नाम श्रीरामचरणत्रिपाठी आसीत्। सः सरयूपारीण-ब्राह्मण आसीत्। पिता नियमानुसारेण जन्मनः द्वादशे दिवसे अस्य नाम देव-नारायण इति विहितम्। केचन जना एनम् 'हरिनारायण' नाम्नाऽपि जानन्ति।

बाल्यावस्थायामयमतिप्रतिभासम्पन्नः विनयशीलश्चाऽऽसीत्। स्वसच्चारित्र्यकारणेन 'टेकारी' इत्याख्यस्थानस्य राजगुरुः शाकद्वीपीयो विद्वान् एतेनाऽतीव प्रभावितः। फलतः देवनारायणः व्याकरणशास्त्रस्य विधिवदध्ययनं विधाय सम्पूर्णेऽपि शास्त्रे व्युत्पत्तिमवाप्तवान्। ततः काशीमागत्य सः म० म० पण्डितशिवकुमारशास्त्रिणः म० म० पण्डितदामोदरशास्त्रिमहोदयाच्च व्याकरणशास्त्रस्य प्रगाढमध्ययनं कृतवान्। नूतनपरिष्कारानाविष्कृत्य सः काश्याः विद्वन्मण्डलीमाश्चर्यचकितानकरोत्। अनेकपण्डितानामाग्रहवशादयं काशीतः व्याकरणाचार्यं परीक्षां ससम्मानमुत्तीर्णवान् अयं तस्मिन् वर्षे उत्तीर्णेषु वैयाकरणच्छात्रेषु सर्वप्रथमं स्थानमवाप्तवान्। श्रोत्रिपाठिनोऽध्यापनकार्यमस्यां काश्यामेवाऽऽरब्धम्।

गुरोर्नानकदेवस्य पुत्रेण श्रीचन्द्रेण उदासीनसम्प्रदायः प्रवर्तितस्तस्यैव पाठशालैका आसीत्—श्रीचन्द्रपाठशाला। तत्र प्रारम्भकालेऽनेनाऽध्यापनकार्यं विहितम्। अस्याऽध्यापनस्य कीर्तिः काश्यामतीव सुप्रसिद्धा। सन् १९१९ ईशवीये तात्कालिक प्राचार्येण डॉ० गंगानाथझामहोदयेनाऽयं काशिकराजकीयसंस्कृतपाठशालायां नियुक्तः। सन् १९२० ईशवीयतः १९३८ ईशवीयं यावदयं संस्कृतपाठशालायामस्यां कार्यरत आसीत्। सन् १९४१ ईशवीये पण्डितदेवनारायणत्रिपाठी दिवङ्गतः। अस्य शिष्येषु पण्डितरामाज्ञापाण्डेय-पण्डितनृसिंहत्रिपाठी-पण्डितरामप्रसादत्रिपाठिचरणाः प्रमुखास्सन्ति।

## पण्डितनित्यानन्दपन्तः "पर्वतीयः"
## ( सन् १८६७ ई० तः १९३१ ई० यावत् )

महामहोपाध्यायः पण्डितनित्यानन्दपन्तः "पर्वतीयः" कूर्माचलस्य (अल्मोड़ा) विशिष्टब्राह्मणकुलोत्पन्न आसीत्। पर्वतीयस्य प्रपितामहः श्रीनीलाम्बरपन्तः "अल्मोड़ा" मण्डलस्य "तिलाडी" ग्रामात् काश्यां त्यागमयं तपोमयं च जीवनं यापयितुं, भूतभावनस्य भगवतो विश्वनाथस्य पादार्चनं च विधातुमिच्छया समागतः। अयमतीव तपस्वी, दार्शनिको योगी चाऽऽसीत्। श्रीपर्वतीयमहोदयस्य पितुः प्रपितामहस्य चोभयोर्जन्म काश्यामेव बभूव।

अस्मिन्नेव समये एकोऽन्यः पर्वतीयब्राह्मणपरिवारः—पण्डितगंगारामशास्त्रि-

त्रिपाठिनः परिवारोऽपि 'अल्मोड़ा' मण्डलस्य 'न्योली' इत्याख्यग्रामादागत्य काश्यां वसति स्म। श्रीगङ्गारामत्रिपाठिमहोदयः काश्याः नव्यव्याकरणपरम्पराया उद्भावक आसीत्। सः नागेशभट्टप्रणीतस्य लघुशब्देन्दुशेखर-परिभाषेन्दुशेखरेत्युभयोर्ग्रन्थयोः अध्ययनाऽध्यापनस्य परिष्कारशैलीमुद्भाव्य व्याकरणशास्त्रस्यैका नवीना परम्परा प्रवर्तिता, याऽद्यापि अबाधगतिना प्रचलति। पं० नित्यानन्दमहोदयो ऽस्यैव श्रीपं० गङ्गारामस्य दौहित्रपुत्रोऽस्ति।

पण्डितनित्यानन्दपर्वतीयस्य पितुर्नाम श्रीनामदेवपन्त आसीत्। श्रीनित्यानन्द-महोदयस्य जन्म काश्यामेव सं० १९३४ वैक्रमाब्दे ( सन् १८६७ ईशवीये ) वर्षे बभूव। यज्ञोपवीतसंस्कारानन्तरं सः स्वपितुरन्तिके एव स्वीयवाजसनेयशाखायाः संहिताया विधिवदध्ययनं कृतवान्। वेदादिशास्त्राभ्यासवशादयं शीघ्रमेव कर्मकाण्डस्य धर्मशास्त्रस्य चाऽधिकारी विद्वान् समपद्यत। ततोऽयं पंडित गङ्गाधर-शास्त्रिमहाभागाद् व्याकरण-न्याय-मीमांसा-वेदान्त-धर्मशास्त्राणां मनोयोगेनाऽध्ययनं कृतवान्। सन् १८८६ ईशवीये सोऽतीवगौरवेण सम्मानेन च सह व्याकरणाचार्यो-पाधिमवाप।

सन् १८९८ ईशवीये काश्यां "सेण्ट्रल हिन्दू स्कूल" इत्याख्यो विद्यालयः प्रारब्धः, यत्र श्रीनित्यानन्दमहोदयस्य पूर्णः सहयोग आसीत्। कालान्तरे सः महाविद्यालयेऽस्मिन् अध्यापनकार्यमारब्धवान्। किन्तु पत्न्याः एकमात्रपुत्रस्य च मृत्युना दुःखितः सः सन् १९०६ ईशवीये उक्तविद्यालयसेवातः त्यागपत्रं ददौ, स्वगृहे च छात्रान् निःशुल्कमध्यापयितुमारेभे। सन् १९२१ ईशवीये ब्रिटिशसर्वकारेणाऽयं "महामहोपाध्याय" इत्युपाधिना विभूषितः। सन् १९३१ ईशवीये आतुरसन्यासग्रहणानन्तरमयं दिवङ्गतः।

श्रीपण्डितनित्यानन्दपन्तपर्वतीयप्रणीताः ग्रन्थास्त्विमे—

**मीमांसायाः**—जैमिनिसूत्रवृत्तिः ( टिप्पणीयुक्तं सम्पादनम् ), मीमांसापरिभाषा (टिप्पणीयुक्तं सम्पादनम्), कात्यायनश्रौतसूत्रम् (सम्पादनम्) चेति।

**कर्मकाण्डस्य**—संस्कारदीपकः ( द्वौ भागौ ), परिशिष्टदीपकः, अन्त्यकर्मदीपकः, वर्षकृत्यदीपकः, कातीयेष्टिदीपकः, सापिण्ड्यदीपकश्चेति।

**व्याकरणस्य**—लघुशब्देन्दुशेखरस्य ( अव्ययीभावप्रकरणान्तस्य ) 'दीपक'

नाम्नी टीका, परमलघुमञ्जूषायाः "तत्त्वप्रकाशिका" नाम्नी टीका।

नागेशभट्टप्रणीतस्य लघुशब्देन्दुशेखराख्यग्रन्थोपरि सन् १९१८ ईशवीये श्रीनित्यानन्दमहोदयेन "दीपक" नाम्नी टीका प्रणीता। अस्याष्टीकायाः द्विविधमस्ति वैशिष्ट्यम्—अर्थपरकम्, परिष्कारपरकञ्चेति। अध्येतॄणामध्यापकाञ्च कृते टीकेयमेकमात्रम् सर्वमान्यटीका सिद्धा। नागेश भट्टः कैयटमतं प्रत्याख्यातवान्। उक्तखण्डनस्य युक्तायुक्तत्वविषये पारम्परिकविचारपद्धतेः सैद्धान्तिकरूपप्रकटनमस्याः टीकायाः प्रामुख्यम्भजमानं वैशिष्ट्यमस्ति।

परमलघुमञ्जूषा व्याकरणशास्त्रस्य शास्त्रीयपदार्थान् विवेचयितुं नागेशेन विहिता कृतिरस्ति। तेषां शास्त्रीयपदार्थानां विषये नैयायिकैर्मीमांसकैश्च सह मतवैपरीत्ये सति तेषां स्वरूपम् लक्षणसमन्वयादिकञ्च श्रीनित्यानन्दमहोदयः तत्त्वप्रकाशिका" इत्याख्यायां स्वटिप्पण्यां स्पष्टीकृतवान्। क्वचिद् अस्पष्टशब्दानां सरलार्थोऽपि लभ्यते।

महामहोपाध्यायपण्डितश्रीनित्यानन्दपन्तपर्वतीयमहोदयस्य शिष्येषु पं० सीतारामशास्त्री शेंडे, माधवशास्त्रीभण्डारी, पण्डितगोपालशास्त्री 'नेने', पण्डितगोपालदत्तपाण्डेयश्चेति प्रामुख्यम्भजमानास्सन्ति।

## महामहोपाध्यायपंडितगिरिधरशर्माचतुर्वेदी

## ( सन् १८८१ ई० )

महामहोपाध्यायः पण्डितगिरिधरशर्मा चतुर्वेदः संस्कृतस्य भाषणलेखनोभयपटुः विद्वानासीत्। विद्वत्समाजेनाऽयं "व्याख्यानवाचस्पति" इत्युपाधिना "विद्यावाचस्पति" इत्युपाधिना च सम्मानितः। पं० गिरिधरशर्मचतुर्वेदिनः पितुर्नाम श्रीगोकुलचन्द्र आसीत्। तस्यैव गृहे जयपुरे सं० १९३८ वैक्रमाब्दे ( सन् १८८१ ईशवीये ) वर्षे श्रीचतुर्वेदिनो जन्म बभूव। अस्य प्रारम्भिकी शिक्षा जयपुरे अभूत्। अनेन प्रवेशिका मध्यमा ( उपाध्याय ) शास्त्री चेति स्थानीय परीक्षाः समुत्तीर्णाः। अस्य परीक्षका आसन्–म० म० पं० शिवकुमारशास्त्री, दामोदरशास्त्री, गंगाधरशास्त्री चेति। ततः तैः पंजाबविश्वविद्यालयात् "शास्त्री" परीक्षा समुत्तीर्णा।

अनेनाऽनेके निबन्धाः ग्रन्थाश्च प्रणीताः। अनेन वैयाकरणसिद्धान्तकौमुद्याः 'बालमनोरमा' 'तत्त्वबोधिनी' इत्याख्ययोष्टीकयोर्वैदुष्यपूर्णं सम्पादनं विहितम्, यत् मोतीलालबनारसीदासेन प्रकाशितम्। तथा चैतस्याऽन्ये ग्रन्था अपि प्रकाशिताः— पुराणपारिजातः, प्रमेयपारिजातः, चतुर्वेदिसंस्कृतनिबन्धावली चेति। अनेन हिन्दी भाषायामपि ग्रन्थाः प्रणीताः। भारतस्य ब्रिटिशसर्वकारेण श्रीचतुर्वेदमहोदयो 'महामहोपाध्याय' इत्युपाधिनाऽलङ्कृतः। स्वतन्त्रभारतस्य राष्ट्रियसर्वकारेण श्रीचतुर्वेदमहोदयः 'विशिष्ट पण्डित' इत्युपाधिना, वाराणसीस्थसम्पूर्णानन्दसंस्कृत-विश्वविद्यालयेन च 'विद्यावाचस्पति' इति सम्मानोपाधिना विभूषितः। अस्याऽनेके शिष्या बभूवः।

## पं० सभापति उपाध्यायः

### ( १८८२ ई० तः १९६६ ई० यावत् )

पण्डितसभापतिउपाध्यायमहोदयो बलियामण्डलस्य पौरस्त्यभागस्य गंगातट-वर्तिनी 'उदयी छपरा' इत्याख्ये ग्रामे संवत् १९३७ वैक्रमाब्दे (सन् १८८२ ईशवीये) भाद्रपदशुक्लद्वितीयातिथौ जनिं लेभे। अस्य पितुर्नाम पं० रामपलट उपाध्यायः मातुश्च नाम सखीदेवी आसीत्। पितुस्त्रिषु पुत्रेष्वयं कनिष्ठ आसीत्। सः स्वग्रामस्यैव श्रीपं० बाबूरामोपाध्यायात् सारस्वतव्याकरणम्, 'बड़की सेरिया' ग्रामवास्तव्यात् पं० रामझ्यादिपाठकात् ज्योतिषशास्त्रम्, तथा च काश्याम् पं० देवनारायणत्रिपाठिमहाभागात् व्याकरणशास्त्रस्योच्चग्रन्थानधीतवान्। किञ्चित् कालं यावत् सः श्रीदामोदरशास्त्रिणः शिष्य आसीत्। अनेन काशिकराजकीय-संस्कृतपाठशालातः व्याकरणाचार्यपरीक्षोत्तीर्णा। पं० शिवकुमारशास्त्रिणोऽनेन शब्दखण्डम्, वेदान्तशास्त्रञ्चाऽधीतम्।

प्रारम्भेऽयं वाराणस्यां 'सेण्ट्रलहिन्दूस्कूल' इत्याख्यसंस्थायां संस्कृताध्यापक आसीत्। ततः सन् १९१४ ईशवीयतः बिरलासंस्कृतमहाविद्यालयस्य प्रधानाचार्यं पदे कार्यमकरोत्। सं० २०२१ वैक्रमाब्दे ( सन् १९६६ ईशवीये ) वर्षे आषाढ-कृष्णचतुर्थ्यां सोमवासरे पं० सभापतिउपाध्यायमहोदयो दिवङ्गतः।

पण्डित सभापति उपाध्याय महोदयो व्याकरणशास्त्रस्योच्चतमपरिष्काराणां परिज्ञानार्थं न्यायशास्त्रं गाम्भीर्येणाऽधिजगे। अस्य चत्वारः ग्रन्थाः सन्तिवैयाकरण-सिद्धान्तलघुमञ्जूषायाः 'रत्नप्रभा' टीका, 'शब्दरत्न' सहितायाः प्रौढमनोरमायाः 'प्रभा' टीका, सिद्धान्तकौमुद्याः "लक्ष्मी" व्याख्या तथा वैदिकधर्मरहस्यम्।

पण्डितसभापतिउपाध्यायमहोदयस्य शिष्येषु पण्डितगणपतिशास्त्रिमोकाटे-महोदयस्य नाम उल्लेखनीयमस्ति। सः श्रीतात्याशास्त्रिप्रणीतायां "भूति" टीकायां नवीनां व्याख्यां विलिख्य तां सरलां सुबोधाञ्च कृतवान्। तच्छिष्यः पण्डितमुरलीधरमिश्र महोदयः (सं० सं० वि० वि० वाराणस्यां व्याकरण-विभागाध्यक्षचरः) रामचन्द्राचार्यप्रणीतायाः प्रक्रियाकौमुद्याः श्रीशेषकृष्णप्रणीतां "प्रकाश" नाम्नीं व्याख्यां सम्पादितवान्। तथा चाऽनेन तस्या उपरि 'रश्मि' इत्याख्यटिप्पणीं विलिख्य गूढस्थलानि सरलीकृतानि। पण्डितसभापतिमहोदयस्या-ऽन्यः शिष्यः पं० बालकृष्णः पञ्चोली गुर्जर प्रदेशीयो ब्राह्मणः। तस्य ग्रन्थद्वय-मस्ति। पण्डितसभापति महोदयस्याऽन्यतमः शिष्यः पण्डितकालिकाप्रसादशुक्ल-महोदयः गोरखपुरमण्डलस्य सरयूपारीणोब्राह्मणः। अयं वाराणसीस्थसम्पूर्णानन्द संस्कृतविश्वविद्यालये वाराणस्यां व्याकरणविभागाध्यक्ष आसीत्। अयं पण्डित-यागेशशास्त्रिप्रणीतां परिभाषेन्दुशेखरस्य "हैमवती" इति टीकां वैयाकरणसिद्धान्त-मञ्जूषाञ्च सम्पादितवान्।

## स्वामीब्रह्ममुनिः परिव्राजकः

### (सन् १८८३ ई०)

वैश्यकुले जन्म गृहीत्वाऽपि स्वाध्यायबलेन समुपलब्ध सर्वोत्कृष्टशास्त्रीपाण्डित्यः स्वामिब्रह्ममुनिः पूर्वस्मिन्नाश्रमे पण्डितप्रियरत्न 'आर्ष' नाम्ना प्रसिद्ध आसीत्। अयं सहारनपुरमण्डलस्य 'लखनोती' इत्याख्ये ग्रामे संवत् १९५० वैक्रमाब्दे (सन् १८८३ ईशवीये) वर्षे एकस्मिन्नग्रवालपरिवारे समजनि। अयं खलु स्वमातुलात् आर्यसमाजीयसंस्कारानवाप, तथा च अष्टाध्यायी प्रभृतीनार्षग्रन्थान् पिपठिषुः गृहत्यागञ्चकार। मथुरानगर्यां सः स्वामिदयानन्दस्य सहपाठिनः स्वामिविरजानन्दशिष्यात् पण्डित वनमालीदत्तचौबेमहोदयात् "पाणिनीयाष्टाध्यायी"

ग्रन्थमधिजगे । अन्यस्मात् 'स्वामिपूर्णानन्द' इत्याख्यवैयाकरणादध्ययनेन किञ्चित् कालमध्ययनं विहितम् ।

व्याकरणमहाभाष्याध्ययनचिकीर्षुः पण्डितप्रियरत्नः काशीमाजगाम, तथा च पण्डितदेवनारायणत्रिपाठि महोदयात् वाराणसेय सुविख्यातवैयाकरणाद् व्याकरणमहाभाष्यमधिजगे । काश्यामुषित्वा प्रियरत्नः पण्डितढुण्ढिराजशास्त्रि-महोदयात् न्यायदर्शनस्य वात्स्यायनभाष्यम्, पिङ्गलशास्त्रञ्चाऽधिजगे । सः एक-पञ्चाशन्मितावस्थायां प्रियरत्नः सन्यासाश्रममङ्गीकृतवान् 'ब्रह्ममुनि' नाम्ना च सुविख्यातः । अस्य उपनिषद् सांख्य वैशेषिक वेदान्तदर्शननिरुक्तानां संस्कृतटीका-प्रभृतयोऽनेके सुविख्याताः ग्रन्थास्सन्ति ।

## पं० रामयशस्त्रिपाठी ( महाशयजी )
## ( सन् १८८४ ई० तः १९६६ ई० यावत् )

त्यागतपोमूर्तिः, निःस्पृहतायाः नवीनविग्रहः, अध्यात्ममार्गस्य नैष्ठिक उपासकः पाणिनीयव्याकरणस्य पारङ्गमो मूर्द्धन्यो विद्वान् पण्डितरामयशस्त्रिपाठी काशीस्थ-विद्वन्मण्डल्या आधुनिकपण्डितेष्वतिशयेनाग्रगण्यः सुप्रतिष्ठितः सुविख्यातश्च बभूव । सः एकैकमागन्तुकं, शिष्यञ्चाऽपि 'महाशयजी' व्याख्येन आदरार्थकसम्बोधनेन सम्बोधयति स्म, इति कृत्वाऽयं "महाशयजी" ति नाम्ना सुविख्यातः ।

श्रीत्रिपाठिनो जन्म वाराणस्यां "निमैचा" इति ग्रामे सं १९४१ वैक्रमाब्दे ( १८८४ ईशवीये ) वर्षे अभूत् । अस्य पितुर्नाम पण्डितबालमुकुन्दत्रिपाठी, मातुश्च नाम अन्नपूर्णादेवी आसीत् । बाल्यकाल एवाऽस्य विवाहः 'अनेई' इत्याख्य-ग्रामस्य पण्डितकवलेश्वरस्य पुत्र्या सह सम्पन्नः सन् १९५८ ईशवीये अस्य पत्नी दिवङ्गता ।

श्रीत्रिपाठीमहोदयः ग्रामे कस्माच्चिद् विदुषः मुहूर्तचिन्तामणिमधीतवान् । पुनः काश्यां जगतगंज निवासिनः रईसबाबूकवीन्द्रनारायणसिंहस्य शिवालये वसताऽनेन काशिकराजकीयसंस्कृतपाठशालातो व्याकरणाचार्यपरीक्षा समुत्तीर्णा । अयं वैयाकरणकेसरिणः पूज्यस्य श्रीदामोदरशास्त्रिणः, भूतिकारस्य श्रीतात्या-शास्त्रिणश्च शिष्य आसीत् । अध्ययनकाले सोऽध्यापयत्यपि स्म ।

वाराणस्यां मीर घट्टे मारवाडीसंस्कृतमहाविद्यालये सन् १९१८ ईशवीयतः सः प्रधानाचार्यरूपेण कार्यारम्भमकरोत्। तथा च सन् १९२६ ईशवीयतः १९४१ ईशवीयं यावत् ललिताघट्टे वाराणस्याम् गोयनकासंस्कृतमहाविद्यालये अध्यापनं चकार। पत्न्याः निधनानन्तरं सः सन्यासी संवृत्तः, १९६६ तमे ईशवीये जनवरी-मासस्य २३ तमे दिनाङ्के च दिवङ्गतः।

श्रीत्रिपाठिमहोदयस्याऽनेके शिष्याः समभूवन, येषु श्रीनिरञ्जनदेवतीर्थः, श्रीदेवनायकाचार्यः, श्रीस्वामीरामानन्दसरस्वती, मुरलीधरउपाध्यायः, डॉ० श्रीकृष्ण-मणित्रिपाठी, पण्डितचण्डीप्रसादपाठकः, श्रीलालबिहारी, पण्डितशुकदेव झा श्चेति प्रमुखास्सन्ति।

## पं० कालीप्रसाद मिश्रः

### ( सन् १८८९ ई० तः १९७७ ई० यावत् )

पण्डितबालकृष्णस्य आकस्मिकनिधनानन्तरं काशीहिन्दूविश्वविद्यालयस्य संस्कृतमहाविद्यालये रिक्ते अध्यक्ष पदे पण्डितकालीप्रसादमिश्रमहोदयो नियुक्तः। पूर्वमेवाऽयमुपाध्यक्ष आसीत्। फलतोऽयं निर्बाधरूपेण महाविद्यालयस्य 'आचार्य' पदे नियोजितः।

पण्डितकालीप्रसादमिश्रमहोदयः गोरखपुरमण्डलस्य 'टिकरिया' इत्याख्ये ग्रामे संवत् १९४९ वैक्रमाब्दे ( सन् १८८९ ईशवीये ) वर्षे सरयूपारीणब्राह्मणकुले समजनि। अस्य पितुर्नाम श्रीजयजयराममिश्रः मातुश्च नाम सुखदादेवी आसीत्। अष्टादशवर्षावस्थायामयं अयोध्यानगर्याः वैष्णवधर्मप्रवर्धिनीपाठशालातः सन् १९०२ ईशवीये व्याकरणमध्यमापरीक्षामुत्तीर्णवान्। ततः काशीमागत्य पण्डितदामोदर-शास्त्रिमहोदयादयं आचार्यग्रन्थानामध्ययनं कर्तुमारेभे, किन्तु, तस्य निधनानन्तरं सः तस्यैव पदे नियुक्तस्य पण्डितरामभवनोपाध्यायस्य शिष्यत्वमङ्गीकृतवान्। षट्सुवर्षेष्वनेन व्याकरणाचार्यस्य षण्णा खण्डानां परीक्षाऽतीव योग्यतयोत्तीर्णा। अनेन पण्डितजीवनाथमिश्रात् सविधि न्यायदर्शनमधीतम्।

सः अनेकवर्षाणि यावत् प्रयागस्थ धर्मज्ञानोपदेशसंस्कृतपाठशालायां व्याकरणा-ध्यापकपदे कार्यमकरोत्। अत्रैव सः पण्डितमदनमोहनमालवीयमहोदयेन परिचितो-ऽभवत्। तस्मिन्नेव महाविद्यालये सः सन् १९२३ ईशवीये व्याकरणविभागा-

ध्यक्षत्वेन नियुक्तः। सन् १९३७ ईशवीये उपाध्यक्षोऽपि संवृत्तः। अस्य कार्य कौशलम् अनुशासनपरायणत्वमवलोक्य काशीहिन्दूविश्वविद्यालयस्य कुलपतिः डॉ० राधाकृष्णन् महोदयः सन् १९४३ ईशवीये वर्षे एतं संस्कृतमहाविद्यालयाध्यक्ष पदे नियोजितवान्। सन् १९५२ ईशवीये पण्डित कालीप्रसादमिश्रमहोदयः सेवानिवृत्तः, तथा च अष्टाशीतिमितवर्षावस्थायां सन् १९७७ ईशवीये वर्षे दिवङ्गतः।

पण्डितकालीप्रसादमिश्रमहोदयस्य शिष्येषु पण्डितनिरीक्षणपतिमिश्रः अध्यापनमुखेन विमलां कीर्तिमवाप्तवान्। अयं काशीहिन्दूविश्वविद्यालयीयसंस्कृत-महाविद्यालयस्य व्याकरणविभागाध्यक्षपदात् सेवानिवृत्तः। अन्येषु शिष्येषु—डा० टी० वी० मूर्तिः, पं० करुणापतित्रिपाठी, पं० रामचन्द्रमालवीयः, पं० कमलाकान्तमिश्रः, मुनिवरमिश्रः, पं० महादेवशास्त्री, पं० रामप्रसादत्रिपाठी चेति प्रामुख्यम्भजमानास्सन्ति।

## पं० गोपालशास्त्री नेने

### ( सन् १८९२ ई० तः १९६७ ई० यावत् )

पण्डितनित्यानन्दपन्तपर्वतीयमहोदयस्य शिष्यस्य पण्डितगोपालशास्त्रीनेने-महोदयस्य जन्म काश्यां सन् १८९२ ईशवीये जातम्। अस्य पूर्वजाः अनेकेभ्यः वर्षेभ्यः काश्यां निवसन्ति स्म। अस्य पितुर्नाम श्रीबाबूभट्टनेने इत्यासीत्। सः वैदिकः कर्मकाण्डी चाऽऽसीत्। कृष्णयजुर्वेदस्य आपस्तम्बशाखायाः वैदिकेषु श्रीबाबू-भट्टो गण्यते। अस्य पुत्रः श्रीपण्डितगोपालशास्त्रीनेने महोदयो व्याकरण-धर्मशास्त्र-वेदान्तादिशास्त्राणामध्ययनं पर्वतीयमहाभागानां चरणयोर्मध्ये स्थित्वा विहितम्। व्याकरणाचार्यपरीक्षोत्तरणानन्तरं किञ्चित्कालानन्तरं स किञ्चित्कालं यावत् हरिद्वारनगरे ऋषिकुलब्रह्मचर्याश्रमे अध्यापनकार्यं कृतवान्। ततः राजकीयसेवायां चितत्वात् "जालौन" मण्डले 'उरई' ग्रामे 'राजकीय हाई स्कूल' इति विद्यालये संस्कृताध्यापक आसीत्। ततः सन् १९२८ ईशवीये वर्षे अयं व्याकरणधर्मशास्त्र-विषययोरध्यापकत्वेन नियुक्तः, यतः सन् १९५७ ईशवीये वर्षे सेवानिवृत्तः। तत्राऽध्यापनकाले सः राजकीयसंस्कृतमहाविद्यालयसम्बद्धसरस्वतीभवनपुस्तकालयात्

प्रकाश्यमानानामनेकेषां पुस्तकानां सम्पादनकार्यमकरोत् ।

श्रीनेनेमहोदयः कौण्डभट्टप्रणीतस्य वैयाकरणभूषणसारस्य 'सरला' नाम्नी व्याख्या प्रणिनाय, यत्र शाब्दबोधप्रक्रियायाः स्वरूपं सारल्येन बोधितमस्ति । नागेशभट्टस्य "लघुशब्देन्दुशेखरस्य" "भैरवी" टीकायुतस्य तत्पुरुषसमासादारभ्य स्वरप्रक्रियान्तभागस्याऽनेन सम्पादनं विहितम् । धर्मशास्त्रविषयस्य सुप्रसिद्धग्रन्थस्य "निर्णयसिन्धु" इत्याख्यस्य ( "कृष्णम्भट्टी" टीकायुतस्य ) आद्योपान्तं सम्पादनं विधायाऽयं ग्रन्थममुं वाराणसीस्थचौखम्बासंस्कृतसीरिज प्रकाशकात् प्राकाश्यमानीतवान् । तथा च श्रीनेनेमहोदयः "वैयाकरणसिद्धान्तकौमुद्यां टिप्पणीं विलिख्याऽनेकेषु खण्डेषु प्रकाशितवान् । काश्यामेव पञ्चसप्ततिवर्षावस्थायां मार्चमासस्य द्वितारिकायां सप्तषष्ठ्युत्तरैकोनविंशतिशततमे ईशवीये वर्षे श्रीपण्डितगोपालशास्त्रीनेनेमहोदयो दिवङ्गतः ।

## पण्डित ब्रह्मदत्तो जिज्ञासुः

### ( सन् १८९२ ई० तः १९६४ ई० यावत् )

वेदानां तलस्पर्शी विद्वान् पाणिनीयपद्धत्या च सरलसंस्कृतशिक्षणस्याऽऽविष्कर्ता पदवाक्यप्रमाणज्ञः पण्डितब्रह्मदत्तो जिज्ञासुः सन् १८९२ ईशवीये अक्टूबर मासस्य चतुर्दशदिनाङ्के पञ्जाबप्रदेशस्य जालन्धरमण्डलस्य एकस्मिन् ग्रामे सारस्वतब्राह्मणे-पाठकगोत्रीये परिवारे जनिं लेभे । अस्य पितुर्नाम रामदासः मातुश्चनाम परमेश्वरी आसीत् । अस्य बाल्यावस्थायाः नाम 'लभुराम' आसीत् । नववर्षावस्थायां पितरौ दिवङ्गतौ । आर्षग्रन्थान् पठितुं प्रबलेच्छया विंशतिमितवर्षावस्थायां जूनमासे सन् १९१२ ईशवीये सः पितुर्गृहात् पलायितः । सः स्वामिपूर्णानन्दसरस्वतिमहाभागस्य शिष्यत्वमङ्गीकृतवान् । तेन नवीनं नाम दत्तम्—ब्रह्मदत्तो जिज्ञासुरिति । तत्सकाशात् सः अष्टाध्यायिक्रमेण पाणिनीयव्याकरणशास्त्रमधिजगे ।

सन् १९२० ईशवीये वर्षे श्रीमतः स्वामिसर्वदानन्दस्य साधु आश्रमे (पुलकाली नदी हरदुआगञ्ज जि० अलीगढ़) श्रीजिज्ञासुमहोदयः अष्टाध्यायिक्रमेण पाणिनीयव्याकरणस्याऽध्यापनकार्यमारब्धवान् । सन् १९२१ ईशवीयस्यान्ते सः "गण्डासिंहवाला अमृतसर" नगरस्थे विरजानन्दाश्रमेऽध्यापयन्नासीत् ।

सन् १९२६ ईशवीये वर्षे श्रीजिज्ञासुमहोदयः कैश्चित् छात्रैः सह काशीमागत्य "सप्तसागर" इत्याख्ये स्थाने वसतिं चकार। अत्र सः वैयाकरण मूर्धन्यात् पण्डितदेवनारायणत्रिपाठिमहाभागात् समग्रं व्याकरणमहाभाष्यमधीतवान्। अत्रैव सः पण्डित ढुण्ढिराजशास्त्रि-पण्डितगिरीशजीशुक्ल-गोस्वामि दामोदरलालमहोदयेभ्यः प्राचीनानि दर्शनान्यधिजगे। पण्डितभगवद्दत्तमहोदयात् सः शोधविषयं ज्ञातवान्। १९२६ ईशवीयस्यान्ते एकेन आततायिना यवनेन स्वामी श्रद्धानन्दमहोदयो हतः। फलतः श्रीत्रिपाठिमहोदयस्यादेशेन सः काशीं निकटस्थमण्डलेषु शुद्धिकार्यं चकार। पुनः सन् १९२८ ईशवीयस्य मध्ये सः अमृतसरनगरं सम्प्राप्तः तत्र सः व्याकरणनिरुक्तादिग्रन्थानध्यापयति स्म। सन् १९३२ ईशवीये पण्डितब्रह्मदत्तो जिज्ञासुमहोदयो विस्तरेण मीमांसादर्शनमध्येतुं कतिपयैः स्वशिष्यैः सह काशीं सम्प्राप्तः। अत्र सः महामहोपाध्यायात् पण्डितचिन्नस्वामिशास्त्रिमहोदयात्, तच्छिष्यात् पण्डितपट्टाभिरामशास्त्रिमहोदयाच्च गाम्भीर्येण पूर्वमीमांसाशास्त्रमधीतवान्। तेन श्रीपण्डितरामरट्टरटाटेमहोदयात् श्रौतग्रन्थानामध्ययनं विहितम्। सन् १९३५ ईशवीये सः पुनः लाहौरनगरम्प्रति प्रस्थितः। सन् १९४७ ईशवीयं यावत् सः लाहौरनगरे उषित्वा संस्कृतशास्त्राणां पठनपाठनकार्ये प्रवृत्त आसीत्।

देशविभाजनानन्तरं सः काशीमागतः, 'मोतीझील' इत्याख्ये स्थाने "पाणिनिमहाविद्यालयं संस्थाप्य छात्रेभ्यः आर्षपद्धत्या संस्कृतशिक्षणं कुर्वन्नासीत्। भारतसर्वकारेण सन् १९६२ ईशवीये श्रीजिज्ञासुमहोदयः "संस्कृतविद्वान्" रूपेण "पद्मविभूषण" इति सम्मानोपाधिना सम्मानितः पुरस्कृतश्च। श्रीजिज्ञासुमहोदयस्य शिष्याणामेका सुदीर्घा परम्परा वर्तते। काश्यामेव सन् १९६४ ईशवीये दिसम्बरमासस्य एकविंशतितमे दिनाङ्के श्रीजिज्ञासुमहोदयो दिवङ्गतः।

पण्डितब्रह्मदत्तजिज्ञासुमहोदयः पाणिनीयाष्टाध्याय्या उपरि भाष्यप्रणयनं कर्तुमिच्छति स्म। तस्य शिष्यायाः प्रज्ञादेव्याः साहाय्येन सः कार्येऽस्मिन् साफल्यमवाप। सः स्वजीवनकाले पञ्चाध्यायमात्रमेव अष्टाध्याय्याः भाष्यलेखनं पूरयितुमशक्नोत्। तस्य निर्देशने तच्छिष्या सुश्री प्रज्ञादेवी (वाराणसीस्थ पाणिनिकन्यामहाविद्यालयस्याचार्या) पाणिनीयाष्टाध्याय्याः भाष्यलेखनं प्रारब्धवती। ग्रन्थस्य नाम "प्रथमावृत्ति" रिति निर्धारितम्। पञ्चानामध्यायानां पाण्डुलिपिः सम्पूर्णा

प्रथम-द्वितीय-तृतीयाध्यायात्मकः प्रथमो भागः प्रकाशितः। सहसा श्रीजिज्ञासु-महोदयो दिवङ्गतः। पुनः सुश्रीप्रज्ञादेवी अवशिष्टमेतत् कार्यं सम्पूर्य अवशिष्टं भागद्वयमपि प्रकाशितवती। पण्डितजिज्ञासुमहोदयः काशिकावृत्तेः भूमिकां लिलेख, मूलामष्टाध्यायीं च सम्पादयामास। तेन स्वामिदयानन्दप्रणीतस्य यजुर्वेदभाष्यस्य पञ्चदशस्वध्यायेषु विस्तृतं विवरणं लिखितम्, यत्र विविधटिप्पणीभिः स्वामिनो व्याकरणप्रक्रिया सम्पुष्टा। सममेव तेन वेदविषयकं दयानन्दमतसम्पुष्टिपूर्वकमेका विस्तृता वैदुष्यपूर्णा भूमिकाऽपि लिखिता। अनेनाऽनेके निबन्धाः लिखिताः तेषां संग्रहः पण्डितयुधिष्ठिरमीमांसकेन प्रकाशितः। काश्याः विद्वत्सु पदवाक्यप्रमाणज्ञः पण्डितब्रह्मदत्तजिज्ञासुः सर्वदा समाहृत आसीत्। तथा च सः आर्षपठनपाठन-प्रणाल्याः आविष्कारकप्रयोगकर्तृरूपेण सुविख्यातोऽभवत्। अनेन भर्तृहरिप्रणीता व्याकरणमहाभाष्यटीकाऽपि सम्पादिता।

## पण्डितगोपालशास्त्री ( त्रिपाठी ) दर्शनकेशरी

### ( १८९२ ई० )

पण्डितगोपालशास्त्री दर्शनकेशरी संस्कृतशास्त्राणां गभीरो विद्वान्, तथा च पाणिनीयव्याकरणस्य प्रचारस्य प्रसारस्य नूतनाया दिश उद्भावक एको महान् कर्मठो मनुष्य आसीत्। सन् १८९२ ईशवीये बिहार प्रदेशस्य "सीवाना" मण्डलस्य "जगन्नाथपुर" ग्रामे श्रीदर्शनकेशरीमहोदयो जनिं लेभे। अयं शाण्डिल्यगोत्रीयः सरयूपारीणो ब्राह्मण आसीत्। स्वमण्डलीयपाठशालायां प्रारम्भिकीं संस्कृतशिक्षा-मवाप्य सः काशीमागतः। तथा चाऽत्र सः तात्कालिक महद्भ्यः पण्डितेभ्यः व्याकरणशास्त्रस्य दर्शनशास्त्रस्य च गभीरमध्ययनं विधाय शास्त्रयोरनयोः प्रावीण्यं लब्धवान्। सन् १९१५ ईशवीये अनेन काशीहिन्दूविश्वविद्यालयात् व्याकरणविषये "शास्त्राचार्य" परीक्षा समुत्तीर्णा। 'बिहार' तोऽनेन काव्यन्यायविषययोः "तीर्थ" इत्याख्या सर्वोच्चपरीक्षाऽपि समुत्तीर्णा। अध्ययनसमाप्तिकाल एवाऽस्याभिरुचिः कांग्रेसपक्षीया जाता। फलतः श्रीशिवप्रसादगुप्तमहोदयस्य विशिष्टाग्रहेण सः काशीविद्यापीठे संस्कृताध्यापकपदं स्वीकृतवान्, यस्मिन् पदे सः सन् १९२१ ईशवीयतः १९४७ ईशवीयं यावत् षड्विंशतिमितानि वर्षाणि यावद् व्याकरण-दर्शनशास्त्राध्यापनं कुर्वाण आसीत्। अत्राऽनेन अनेके शिष्याः संस्कृतानुरागिणः

दर्शनानुरागिणश्च सम्पादिताः।

ततः सेवानिवृत्त्यनन्तरं श्रीपण्डितगोपालशास्त्रीदर्शनकेशरीमहोदयः ज्योतिर्मठे श्रीबदरीनाथवेदवेदाङ्गमहाविद्यालये प्राचार्यरूपेण द्वादशवर्षाणि यावत् कार्यरत आसीत्। श्रीदर्शनकेशरीमहोदयः आर्षपद्धत्त्या पाणिनीयव्याकरणस्य पठनपाठनक्षेत्रे सक्रिय आसीत्। तथा च अष्टाध्यायिक्रमेण जनान् परिचाययन्नयमनेकान ग्रन्थान् नाटकादीन् प्रणिनाय। काशीविद्वत्परिषदा अयं "पण्डितराज" इत्युपाधिना सम्मानितः। अनेन विंशतिमिताः ग्रन्थाः प्रणीताः, तत्र इमे प्रामुख्यम्भजमानास्सन्ति—

पाणिनीय प्रशस्तिः, पाणिनीयप्रदीपः, पाणिनीयप्रशस्तिनाटकम्, पाणिनीयप्रबोधनाटकम्, ऋजुपाणिनीयम्, संस्कृतशिक्षकम्, ऋजुपाणिनीयम् ( अत्यावश्यकसूत्राणां क्रमानुसारि सङ्कलनम् ), बृहदृजुपाणिनीयम्, सवृत्तिः अष्टाध्यायी, पाणिनीयप्रबोधव्याकरणम्, प्रशिक्षणसंविधानम् चेति।

## पण्डितसूर्यनारायणशुक्लः

### ( सन् १८९५ ई० तः १९४४ ई० यावत् )

पण्डितउमापतिद्विवेदिनः शिष्यः, पण्डितरामेश्वरदत्तशुक्लस्य पुत्रः पण्डितसूर्यनारायणशुक्लमहोदयः स्वीयप्रकृष्टवैदुष्येण, शास्त्रीयानुशीलनेन प्राचीनग्रन्थानाञ्च विमर्शात्मकसंस्करणैः काश्याः विद्वत्समाजे सम्मानित आसीत्। अस्य जन्म सन् १८९५ ईशवीये वर्षे समजनि। स्वपितुरेवाऽनेन प्रारम्भिकी शिक्षाऽवाप्ता, सिद्धान्तकौमुद्याश्चाऽध्ययनं विहितम्। ततोऽयोध्यानगर्यां अनेन राजगोपालपाठशालायां पण्डितचन्द्रधरपाण्डेयाद् व्याकरणम्, साहित्यञ्चाऽधीतम्; तथा च श्रीश्रीदत्ताद् दर्शनस्य विशिष्टमध्ययनं विहितम्।

काशीहिन्दूविश्वविद्यालयस्य संस्कृतमहाविद्यालये पण्डितचन्द्रधरमहोदयस्य नियुक्तिवशात् तस्य रिक्तस्थाने ( राजगोपालपाठशालायां ) अयं नियुक्तः। ततः काश्यः गोयनकासंस्कृतमहाविद्यालये सः व्याकरणाध्यापकत्वेन नियुक्तः। काश्यामेव श्रीवामाचरणभट्टाचार्यादनेन न्यायस्य विशिष्टमध्ययनं विहितम्। १९२९ ईशवीये वर्षे भट्टाचार्यस्य निधनानन्तरम् तस्य रिक्ते स्थाने अयं काशीहिन्दूविश्वविद्यालयस्य संस्कृतमहाविद्यालये दिसम्बरमासे सन् १९३० ईशवीये वर्षे नियुक्तः, यत्र सः

चतुर्दशवर्षाणि यावदध्यापनकार्यरत आसीत् । अप्रैलमासे सन् १९४४ ईशवीये ४८ वर्षावस्थायामयं दिवङ्गतः ।

पं० सूर्यनारायणमहोदयो यथा सफलोऽध्यापकस्तथैव प्राचीनतमग्रन्थानां संशोधकः, व्याख्याकारः सम्पादकश्चाऽऽसीत् । अस्याऽनेके सुयोग्याः शिष्या आसन् । श्रीशुक्लमहोदयस्य कृतयस्त्विमे—

वादरत्नम्, माध्यभ्रान्तिनिरासः, माध्वमुखभङ्गः, निर्विकल्पकतावादः, आशौचशङ्करव्यवस्था, वसन्तोत्सवनिर्णयश्च । अस्य टीकाग्रन्थाः—

मुक्तावलीमयूखः, तत्त्वचिन्तामणिमिताक्षरा, न्यायमतरक्षणन् वाक्यपदीयम् ब्रह्मकाण्डम्, लघुमञ्जूषा, आकाशादिप्रकरणभाट्टचिन्तामणिमयूखः, खण्डनरत्नमालिका चेति ।

अस्य ज्येष्ठपुत्रः व्याकरणाचार्यपण्डितरामगोविन्दशुक्लः संस्कृतविश्वविद्यालयस्य अनुसन्धानविभागे अध्यापक पदे नियुक्तः ।

## महामहोपाध्यायपण्डितमाधवशास्त्रीभाण्डारी

## ( १९ तमं शतकम् )

महामहोपाध्याय पण्डितनित्यानन्दपर्वतीयमहोदयस्य शिष्यस्य महामहोपाध्यायपण्डितमाधवशास्त्रीभाण्डारिणो मूलं निवासस्थानं 'मेर' इत्याख्यो ग्राम आसीत् । वाराणसीमागमनात् पूर्वमयमपि माध्यन्दिनशाखाया वाजसनेयिसंहितां स्वनिवासस्थानेऽधीतवान् । अस्य पितुर्नाम श्रीहरिशास्त्री आसीत् । वाराणस्याम् अनेन सहैवाऽस्य लघुभ्राता श्रीश्रीरामशास्त्रीभाण्डारीमहोदयोऽप्यध्ययनार्थमागतः । उभयोरेकतरो व्याकरणस्याऽध्येता संवृत्तः, अपरश्च न्यायशास्त्रस्य । श्रीमाधवशास्त्री श्रीपण्डितनित्यानन्दपर्वतीयस्य शिष्यत्वं स्वीचकार; तथा च श्रीश्रीरामभाण्डारीमहामहोपाध्यायवामाचरणभट्टाचार्यस्य शिष्यत्वमाश्रितवान् । पण्डितमाधवशास्त्रीभाण्डारीमहोदयेन वाराणसीतो व्याकरणाचार्यपरीक्षा, कलिकातातः ( कलकत्ता ) साहित्यमीमांसयोर्विषययोः "तीर्थ" परीक्षा, बिहारतश्च वेदान्ताचार्यपरीक्षाश्चोत्तीर्णाः । ज्योतिषशास्त्रस्य गभीराध्ययनकारणेनाऽस्य गणितफलितोभयोरपि ज्योतिषशास्त्रयोः समानरूपेण प्रावीण्यमासीत् । सर्वप्रथममनेन काशीस्थमारवाड़ीसंस्कृतमहाविद्यालये व्याकरणशास्त्राध्यापनं विधायोत्तमा ख्याति-

रञ्जिता, शास्त्रार्थे च पाटवमवाप्य शास्त्रार्थेऽपि स्वगुरुपरम्परायाः यशो वर्द्धितम् ।

काश्यामुषित्वा श्रीमाधवशास्त्रीभाण्डारीमहोदयोऽनेकान् ग्रन्थान् सम्पादितवान् । तत्र प्रामुख्यम्भजमानौ ग्रन्थौ स्तः—व्याकरणसिद्धान्तसुधानिधिः ( अध्यायत्रयमात्रम् ) प्रौढमनोरमा ( अव्ययीभावप्रकरणान्ता ) चेति । "प्रौढमनोरमा" इत्याख्ये ग्रन्थे तेन विषमस्थलेषु टिप्पणी अपि लिखिता । प्रस्तुता टिप्पणीयं न केवलं परिष्कारदृष्ट्योपयोपयोगी वर्तते, अपितु प्राचीनवैयाकरणस्य ( कैयटस्य ) नागेशस्य च मतभेदे सति वस्तुस्थितेः समीक्षाप्रस्तुतिदृष्ट्याऽप्युपयोगो वर्तते । तथ्यमेतत् पण्डितगङ्गारामशास्त्रिणा प्रवर्तितानां वैयाकरणसिद्धान्तानामाधारेण गुरुपरम्पराप्राप्तस्याऽर्थोन्मेषस्य निदर्शनमवगन्तुं शक्यते ।[1]

महामहोपाध्यायपण्डितशिवदत्तदाधिमथेस अवकाशे गृहीते सति लाहौरमहाविद्यालये डॉ० ए० सी० वूलनरमहोदयेनाऽस्य वैदुष्यलाभार्थं अयं तत्र प्रधानाध्यापकपदे नियुक्तः । तत्र वसन् श्रीमाधवशास्त्रीभाण्डारीमहोदयो व्याकरणमहाभाष्यस्य प्रारम्भिकाह्निकद्वयोपरि "स्फोटविमर्शिनी" इत्याख्या व्याख्या सन् १९२९ ईशवीये प्रणीता । व्याख्यायामस्यां व्याकरणसिद्धान्तानुसारेण स्फोटस्याऽऽवश्यकता, स्फोटस्वरूपम्, अपभ्रंशेषु शक्तिविचारः, माहेश्वरसूत्राणाम् अद्वैत-

---

१. "अकथितं चेति" सूत्रे अकथित शब्दः असंकीर्तितपर्यायः, न अप्रधानपर्यायः । एवञ्च पूर्वविधिविषयप्रसक्तिपूर्वकं तदविवक्षायां सर्वथा पूर्वविधेः अप्रसक्तौ च चैतत् प्रवृत्तिरिति सर्वसम्मतम् । तत्राद्योदाहरणम् "गां दोग्धि पयः" इत्यादि । द्वितीयोदाहरणम् याचिपृच्छिभिक्षियोगे बलिं याचते वसुधाम् इत्यादि । तत्र प्रथमस्योदाहरणेषु गोर्दोग्धि पयः, गां पयो दोग्धि इत्यादिप्रयोगद्वैविध्यसम्भवेऽपि द्वितीयप्रकारोदाहरणेषु बलिं याचते वसुधाम् इत्यादिषु न तादृशप्रयोगद्वैविध्यमिति । अत एवाऽत्र कैयटेनोक्तम्—"असंकीर्तितपर्यायाकथितग्रहणे 'गां दोग्धि' 'गोर्दोग्धि' इति च । याचि-पृच्छि-भिक्षियोगे कर्मसंज्ञैव इत्येषा व्यवस्थेति ।" प्रभा टिप्पणी–अकथितं च ( पा० सू० १-४-५७ ) प्रौढमनोरमा ॥

—द्रष्टव्य, पं० बलदेव उपाध्याय—काशीकी पाण्डित्य परम्परा वि० वि० प्रकाशन, वाराणसी, सन् १९८३ ई० प्रथम संस्करण पृष्ठ ३९४ ॥

ब्रह्मप्रतिपादकता प्रभृतिषु विषयेषु स्फुटं प्रतिपादितम्। स्वयं भाण्डारीमहोदय-ष्टीकाया अस्या अन्ते पुष्पिकामिमां विलिख्य तथ्यमेतदभिव्यञ्जितम्। तथा हि—

"सच्चिन्नित्यानन्दरूप-नित्यानन्दाख्यसद्गुरोः।
पर्वतीयस्य चरणद्वन्द्वासज्जित चेतसा॥
लवपुर्यां प्राच्यमहाविद्यालयविराजितम्।
प्रधानाध्यापकपदमध्यासीनेन धीमता॥
मीमांसायुगले शब्दशास्त्रे तर्केष्वधीतिना।
भाण्डारिणा माधवेन शास्त्रिणाऽऽरचिता स्फुट॥
पातञ्जले महाभाष्ये व्याख्या स्फोटविमर्शिनी।
भूरि भद्राय भवताच्छब्दब्रह्मविचारिणाम्॥

## पण्डितअनन्तशास्त्रीफड़के

पण्डितअनन्तरामशास्त्रीमहोदयः स्वयमेव काश्यामध्ययनार्थमाजगाम। सर्वप्रथममनेन पण्डितश्रीगणपतिशास्त्रिमोकाटेमहोदयाद् व्याकरणशास्त्रमधीतम्। काशीतो अयं व्याकरणाचार्यपरीक्षामुत्तीर्य पण्डितनित्यानन्दानन्तपर्वतीयमहोदयानां चरणयोर्मध्ये स्थित्वा मीमांसा-वेदान्त-पुराणशास्त्राण्यधीतवान्। श्रीफड़केमहोदयेन कलिकातानगरतः मीमांसाविषये "तीर्थ" परीक्षा समुत्तीर्णा। काशीस्थविदुषां संस्तुत्यनुसारं किञ्चित् कालं यावत् श्रीफड़केमहोदयः लाहौरनगरस्य सुप्रसिद्धस्य डाक्टरबालकृष्णकौलस्य पौत्रान् संस्कृतमध्यापयामास। ततः सः काशीस्थस्याद्वाद-दिगम्बरजैनविद्यालये व्याकरणाध्यापकत्वेन नियोजितः। ततश्च सः महामहोपाध्यायपण्डितनित्यानन्दपर्वतीयमहोदयस्य विशिष्ट संस्तुतिकारणेन काशीस्थ-राजकीयसंस्कृतमहाविद्यालये नवसृष्टे पुराणेतिहासाध्यापक पदे नियुक्तः। सेवा-निवृत्तेरनन्तरं सः विश्वसंस्कृतपरिषदः तत्वावधाने सम्मानिताचार्यरूपेणानेकेषु स्थानेषु गत्वा देववाण्याः प्रचारे प्रसारे च महद् योगदानं कृतवान्। आचार्य-परीक्षोत्तरणानन्तरं सः "काशिका" "वैयाकरणभूषणसार" (दर्पणटीकायुत) इत्यनयोर्ग्रन्थयोः सम्पादनकार्यं विहितवान्।

## पण्डितगोपालदत्तपाण्डेयः
### ( १९ तमं शतकम् )

पण्डितगोपालदत्तपाण्डेयः खलु श्रीनित्यानन्दपर्वतीयमहोदयस्य दौहित्रः, तच्छिष्यश्च । पण्डितनित्यानन्दपर्वतीयमहोदयादनेन सिद्धान्तकौमुदी अन्ये च टीकाग्रन्था अधीताः । ततोऽनेन व्याकरणाचार्यपरीक्षा, एम० ए० परीक्षा च समुत्तीर्णा । उत्तरप्रदेशस्य राजकीयमहाविद्यालयेषु अनेकवर्षाणि यावत् तेन "प्रोफेसर" पदे योग्यतापूर्वकं कार्यं विहितम् । नैनीतालस्थराजकीयस्नातकोत्तर-महाविद्यालये आचार्यः संस्कृतविभागाध्यक्षश्चाऽऽसीदयम् । ततः उत्तरप्रदेशस्य शिक्षाविभागे उपशिक्षानिदेशकः आसीदयम् । सेवानिवृत्त्यनन्तरमयं काश्यामेव निवसति । अनेन वैयाकरणसिद्धान्तकौमुद्याः "दीपिका" नाम्नी प्रामाणिकी हिन्दी व्याख्या प्रणीता, सा च श्रीवासुदेवदीक्षितप्रणीतया "बालमनोरमा" टीकया सह सम्पादिता, त्रिषु भागेषु च प्रकाशिता । श्रीपाण्डेयमहोदय प्रणीता "दीपिका" व्याख्या हिन्दी भाषायां तत्तत्सूत्राणां गभीरं शास्त्रीयं विवेचनमपि सारल्येन प्रकटीकरोति । अनेन प्रणीता अन्ये ग्रन्था अपि सन्ति ।

## पं० रामाज्ञापाण्डेयः
### ( १९०० ई० तः १९७८ ई० यावत् )

पण्डितरामाज्ञापाण्डेयः पण्डितदेवनारायणत्रिपाठिनः शिष्यमण्डल्यां लब्ध-कीर्तिर्विद्वानासीत् । उत्तरप्रदेशस्य पौरस्त्यमण्डलस्य "बलिया" जनपदस्य "रतसड़" इत्याख्ये ग्रामे एकस्मिन् सदाचारशीले वैष्णवमतानुयायिनि ब्राह्मणपरिवारे प्रायेण १९०० ईशवीये वर्षे अयं जनिं लेभे । अयं पण्डितदेवनारायणत्रिपाठि-महोदयात् व्याकरणशास्त्रमधीतवान् । तथा चाऽयं पण्डितदामोदरशास्त्री-गङ्गा-धरशास्त्री-शिवकुमारशास्त्रिमहाभागेभ्योऽपि शब्दखण्डस्योच्चस्तरीयग्रन्थानध्यगीष्ट । आचार्यपरीक्षोत्तरणानन्तरमनेकवर्षाणि सः साधोलाल स्कालररूपेण डा० वेनिस-महोदयादपि अनेकान् नवीनानावश्यकविषयानपि श्रुतवान्, विचारितवांश्च, येन तस्य प्रतिभायाः विकासः परिष्कारश्च सम्पन्नः । ततः प्रभृति एव कालात् अस्य व्याकरणशास्त्रीयदार्शनिकतत्त्वानामन्वेषणस्य शोधस्य च प्रवृत्तिरुदिता ।

श्रीपाण्डेयमहोदयः काश्यां प्राचुर्येणाऽध्ययनं चकार, किन्तु तस्य प्रतिभया न काशीस्थाः, अपितु उत्कलप्रदेशीयास्संस्कृतच्छात्रा एव लाभान्विताः सञ्जाताः। काश्यामयमध्यापनमपि चकार। किन्तु अयम् सन् १९२१ ईशवीये पुर्यां राजकीय संस्कृतमहाविद्यालये व्याकरणाध्यापक पदे नियुक्तः। फलतस्तत्र स्थित्वा अयमनेकानुत्कलप्रदेशीयच्छात्रान् पाणिनीयव्याकरणमध्याप्यतान् सुबोधान् वैयाकरणान सम्पादितवान्।

अनेन व्याकरणस्य दार्शनिकस्वरूपपरिष्कारे स्वीयः सम्पूर्णोऽपि समयो यापितः। संस्कृतभाषायाः व्याकरणमेकं प्रौढ दर्शनमस्ति, यत्र दार्शनिकसम्प्रदायत्वस्य पूर्णं सामर्थ्यमस्ति। प्रातिशाख्येषु, निरुक्ते, पातञ्जलमहाभाष्ये, भर्तृहरिप्रणीते वाक्यपदीये, नागेशभट्टप्रणीतायां सिद्धान्तमञ्जूषायाञ्च व्याकरणस्य दार्शनिकं रूपम्, तस्य वर्ण्यसिद्धान्ताः पदार्थचिन्तनम् प्रभृतयो विषयाः गाम्भीर्येण विवेचिता एव पण्डितरामाज्ञापाण्डेयमहोदयः स्वीयप्रखरबुद्ध्या एतेषां विचारः अतीव गाम्भीर्येण अन्वेषणधिया च विहितः। फलतः वाराणसीस्थसम्पूर्णानन्दसंस्कृतविश्वविद्यालयाद् अस्य "व्याकरणदर्शनम्" इत्याख्यो ग्रन्थस्त्रिषुभागेषु प्रकाशितः—व्याकरणदर्शनभूमिका, व्याकरणदर्शनपीठिका, व्याकरणदर्शनप्रतिमा चेति। सन् १९७८ ईशवीये श्रीपाण्डेयमहोदयो दिवङ्गतः।

## पण्डितनृसिंहत्रिपाठी
### ( १९ तमं शतकम् )

अस्य प्रसिद्धं नाम नृसिंह त्रिपाठी इत्यासीत्। उत्तरप्रदेशस्य 'गाजीपुर' मण्डलस्य 'खढिया' ग्रामवास्तव्योऽयं बाल्यकालादेवाऽतिप्रतिभासम्पन्नश्छात्र आसीत्। अस्य प्रारम्भिकमध्ययनं तस्य ग्रामीणपाठशालायामेव बभूव। ततोऽयं विशिष्टयोग्यतावाप्त्यर्थं काशीमागतः, तथा च श्रीदेवनारायणत्रिपाठिनश्चरणयोः स्थित्वा व्याकरणशास्त्रस्य दुरूहग्रन्थानधिजगे। अयं खलु श्रीत्रिपाठिनो नितान्तमनुगतश्छात्र आसीत्। व्याकरणशास्त्राचार्यपरीक्षायां श्रेष्ठत्वेनोद्घोषितत्वादयं विशिष्टं पारितोषिकं लब्धवान्। अनेकवर्षाणि यावत् पोस्ट-आचार्यकक्षायां इतराणि शास्त्राण्यपि सम्यगधीतवानयम्। न्यायशास्त्रे साहित्यशास्त्रे चोभयत्राऽस्य

व्युत्पत्तिरुत्तमा आसीत्। अत्र काश्यामेव स्थित्वाऽयमध्यापनकार्यं सम्पादयामास। सः श्रीत्रिपाठिना साकं श्रीचन्द्रमहाविद्यालये अध्यापनं करोति स्म। कालान्तरे सः तत्रैव महाविद्यालये प्रधानाध्यापकः संवृत्तः। ततोऽयं मारवाड़ीसंस्कृतमहाविद्यालयेऽपि प्रधानाध्यापक आसीत्। व्याकरणग्रन्थाध्यापने तस्याऽपि कीर्तिः गुरुवदेव आसीत्।

अस्य ग्रन्थद्वयं प्रसिद्धम्—मुक्तावली प्रकाशः तथा च वाक्यपदीयब्रह्मकाण्डस्य टीका। गाजीपुरस्थश्रीगिरिजाप्रसादशर्मणा संवत् १९८९ वैक्रमाब्दे प्रकाशितः 'मुक्तावलीप्रकाशः' लघुकायो ग्रन्थः। अत्र न्यायसिद्धान्तमुक्तावल्याः शब्दखण्डस्य व्याख्यानम् प्रश्नोत्तर रूपेणास्ति। अत्र ग्रन्थकारः न्यायस्य क्लिष्टतत्त्वानि सारल्येन बोधयितुं साफल्यपूर्णं प्रयत्नं चकार। वाक्यपदीयस्य ब्रह्मकाण्डे अनेन 'प्रकाश' नाम्नी व्याख्या प्रणीता। इयं वाक्यपदीयप्रथमकाण्डस्य प्रामाणिकी व्याख्याऽस्ति, यत्र सर्वेऽपि पदार्था अत्यन्तं स्फुटा अभिव्यक्ताश्च जाताः।

## पं० शुकदेवझाः
## ( सन् १९००—१९७६ ई० )

पण्डितरामयशस्त्रिपाठिनः ( महाशयजी ) शिष्येष्वग्रगण्यः पण्डितशुकदेवझामहोदयः सुयोग्यवैयाकरण आसीत्। अयं खलु प्राचीननव्योभयपरम्परया व्याकरणाध्यापनस्य विशेषज्ञ आसीत्। नित्यानन्दवेदमहाविद्यालये वाराणस्याम् सः प्रधानाचार्यरूपेण यावज्जीवं व्याकरणाध्यापनं चकार। इयं प्रसिद्धिरस्ति यत् काशिका, सम्पूर्णं महाभाष्यम्, वाक्यपदीयञ्चैते ग्रन्थास्तेन कण्ठस्थीकृता आसन्। महाभाष्यमर्मज्ञत्वं तु समीचीनमस्ति, किन्तु, ततोऽपि महत्त्वपूर्णमस्ति वाक्यपदीयरहस्यज्ञातृत्वम्। अनेन परिभाषेन्दुशेखरस्य महाभाष्यस्य चोपरि सहायकग्रन्थाः प्रणीताः। विद्यालये गृहे चाऽपि सोऽध्यापयति स्म। लेखकोऽपि श्रीझामहाभागाद् अध्ययनस्य सौभाग्यमवाप्तवान्। पण्डितशुकदेवझामहोदयोऽनेकान् शिष्यान् वैयाकरणान् सम्पादितवान्। तत्र डॉ० सत्यव्रतशास्त्री, डा० भागीरथप्रसादत्रिपाठी ( वागीशशास्त्री ) प्रभृतयः प्रमुखाः। प्रायेण सन् १९७६ ईशवीये काश्यामयं दिवङ्गतः।

डॉ० सत्यव्रतशास्त्री पण्डितचारुदेवशास्त्रिणः पुत्रः, येन व्याकरणमहाभाष्यस्य नवाह्निकमात्रस्य हिन्दी टीका, व्याकरणचन्द्रोदयः उपसर्गार्थचन्द्रिका, प्रस्तावतरङ्गिणी चेति ग्रन्थाः प्रणीताः। डॉ० सत्यव्रतशास्त्री सम्प्रति दिल्ली विश्वविद्यालये संस्कृतविभागे "आचार्य" ( प्रोफेसर ) पदमलङ्कुर्वन्ति। अनेन 'काल' विषये शोधप्रबन्धो लिखिताः। तथा चाऽनेन रामकीर्तिकौमुदी, गोविंदसिह चरितम्, इन्दिरागान्धिचरितम्प्रभृतयो ग्रन्था अपि प्रणीताः।

## पं० रघुनाथशर्मा

### ( ई० १९ तमं शतकम् )

उत्तरप्रदेशस्य "बलिया" मण्डलान्तर्गते "छाता" इत्याख्ये ग्रामे पण्डितश्रीकाशीनाथशास्त्रिणो गृहे पण्डितरघुनाथशर्मा जनि लेभे। सः व्याकरणवेदान्तशास्त्रयोर्विशिष्टो विद्वान्, विलक्षणबुद्धिसम्पन्नः, नितान्तं मेधावी, शास्त्रज्ञः व्यावहारिकबुद्धि वैभवमण्डितः अत्यन्तं लोकव्यवहारकुशलः पण्डित आसीत्। व्याकरणशास्त्रस्य प्रक्रियापरिष्कारयोरुभयोरंशयोस्तस्य प्रचुर प्रतिभायाः विलासो दृश्यते। भर्तृहरेराचार्यस्य वाक्यपदीयस्य, यत् दुरुहः दार्शनिकश्च ग्रन्थो वर्तते, तस्य विशदां विस्तृताञ्च व्याख्यां प्रणीय सः स्वीयगभीरवैदुष्यस्य प्रसादं व्याकरणतत्त्वजिज्ञासुजनेषु मुक्तहस्तेन वितरितवान्। व्याख्येयं "अम्बाकर्त्री" नाम्ना प्रसिद्धा। पञ्चसु खण्डेषु टीकेयं मूलपाठ पाठभेदमीमांसापूर्वकं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन प्रकाशिता। वाक्यपदीयस्य प्राचीना व्याख्याः काश्मीराणामेव प्रत्यभिज्ञादर्शनस्य मार्मिकैर्विद्वद्भिर्विहिताः। श्रीशर्मा स्वव्याख्यायां तासु व्याख्यासु अव्याख्यातान् अल्पव्याख्यातांश्च अंशानपि व्याख्याय मूलग्रन्थं सुबोधं, सरलं बोधगम्यञ्च कृतवान्। वाक्यपदीयस्याऽस्य 'अम्बाकर्त्री' व्याख्यायाः द्वयोः खण्डयोः वाक्यपदीयस्य पाठभेदानामपि मीमांसा अतिविस्तरेण विहिता। अस्याः टीकायाः रचनायै पण्डितसमाजः पण्डितरघुनाथशर्ममहाभागानां सर्वदा कृतज्ञः स्थास्यति।

## पं० गुरुप्रसादशास्त्री

### ( सन् १९०० ई० तः १९७२ ई० यावत् )

श्रीशिवनारायणशास्त्रिणो ज्येष्ठतनयः आचार्यगुरुप्रसादशास्त्रिमहोदयः

राजस्थानप्रदेशे संवत् १९५७ वैक्रमाब्दे ( सन् १९०० ईशवीये ) वर्षे ज्येष्ठशुक्लपञ्चम्यां जनिं लेभे। अस्य मातुर्नाम राजलक्ष्मीदेवी इत्यासीत्। सः प्रारम्भिकमध्ययनं पूज्यपितामहचरणानां पितृचरणानाञ्च चरणयोः स्थित्वा सम्पादयामास। ततः सः स्वीय वाराणसीप्रवासकाले वैयाकरणकेसरिणः पण्डितदेवनारायणत्रिपाठिनः व्याकरणशास्त्रम्, न्यायमार्तण्डात् महामहोपाध्यायस्वर्गीय श्रीवामाचरणभट्टाचार्यात् न्यायशास्त्रञ्च गाम्भीर्येणाऽधीतवान्। पितुःसंसर्गजेन प्रभावेणाऽयं शीघ्रमेव शास्त्राणां प्रौढो विद्वान् संवृत्तः। विंशतिवर्षदेशीय एव सः काशिकराजकीयसंस्कृतमहाविद्यालयात् व्याकरणाचार्यपरीक्षां प्रथमश्रेण्यामुत्तीर्य सर्वतोऽधिकानङ्कानवाप्तवान्। ततः सः न्यायाचार्य-दर्शनाचार्य-आयुर्वेदाचार्य प्रभृतीः परीक्षाअपि प्रथमश्रेण्यामुत्तीर्य विशिष्टं कीर्तिमानं स्थापितवान्। सर्वकारीयसेवाविरुद्धत्वात् सः कुतश्चिदनुदानस्वीकारमन्तरेण "राजस्थानसंस्कृतकालेज" इत्याख्या संस्था स्थापिता, यत्र सः प्रधानाचार्य आसीत्। संवत् २०२९ वैक्रमाब्दे ( सन् १९७२ ईशवीये ) वर्षे श्रावणकृष्णचतुर्दश्यां सः दिवङ्गतः।

अस्य ग्रन्थेषु प्रामुख्यम्भजमानाः सन्ति—(१) सप्तटीकाविभूषितः लघुशब्देन्दुशेखरः, (२) राजलक्ष्मीसंवलितं सम्पूर्णमहाभाष्यम् (३) लघुशब्देन्दुशेखरसहिता सिद्धान्तकौमुदी चेति।

पण्डितगुरुप्रसादशास्त्रिणः पुत्रः पण्डितसीतारामशास्त्रीमहोदयोऽपि व्याकरणे साहित्ये च आचार्योत्तीर्णो विद्वानस्ति। सः हिन्दूविश्वविद्यालयस्य संस्कृतमहाविद्यालये व्याकरणाध्यापकरूपेणाधिकं समयो यापितः। सन् १९८८ ईशवीये सः सेवामुक्तो जातः।

## पं० देवदत्तशर्मोपाध्यायः
## ( सन् १९०५—१९७१ ई० )

संस्कृतभाषाया प्रकाण्डो विद्वान् मीमांसादर्शनस्य च भाष्यकारः पण्डितदेवदत्तशर्मोपाध्यायः उत्तरप्रदेशस्य अलीगढमण्डलान्तर्गते भमसोई नामक एकस्मिन् ग्रामे सन् १९०५ ईशवीये जनिं लेभे। अयं भारद्वाजगोत्रीयः माध्यन्दिनशाखाध्यायी यजुर्वेदीयब्राह्मण आसीत्। गुरुकुलमहाविद्यालयज्वालापुरे स्वामिशुद्धबोध-

तीर्थमहोदयानां सान्निध्येएतस्याऽध्ययनं जातम्। गुरुकुलस्य "विद्याभास्कर" इत्युपाधिमवाप्य सः आचार्यं तीर्थं एम्० ए० प्रभृतीः उपाधी अपि लब्धवान्। सन् १९३९ ईशवीये सः काशीं सम्प्राप्तः। तथा च सः डॉ० मङ्गलदेवशास्त्रिणा सह काशिकराजकीयसंस्कृतमहाविद्यालयस्य सरस्वतीभवने वर्तमानानां त्रिसहस्र-मितानां पाण्डुलिपीनां सूचीं निर्मापितवान्। सन् १९४३ ईशवीयत एव सोऽस्मिन्नेव महाविद्यालये वेदान्ताध्यापक पदे नियुक्तः। १९४९ ईशवीयतः सन् १९५८ ईशवीयं यावत् सः दर्शनविभागाध्यक्षपदे कार्यरत आसीत्। यदा राजकीय-संस्कृतमहाविद्यालयः वाराणसेयसंस्कृतविश्वविद्यालये विलीनो जातस्तदा सः संस्कृतसंकायस्य अधिष्ठाता अप्यासीत्। विश्वविद्यालयस्य प्रथमकुलपतिः डॉ० आदित्यनाथझामहोदयो विश्वविद्यालये प्राचीनव्याकरणविभागं स्थापितवान्, तथा च तेन पण्डितदेवदत्तशर्मोपाध्यायमहोदयः प्राचीनव्याकरणदर्शनागम विभागे प्रथम आचार्यः ( प्रोफेसर ) विभागाध्यक्षश्च नियुक्तः। सः सन् १९६५ ईशवीये विश्वविद्यालयतः सेवानिवृत्तः। १९७१ ईशवीये अक्टूबरमासे शरत्पूर्णिमातिथौ पं० उपाध्यायः दिवङ्गतः।

"तत्त्वपरिशुद्धिः" इत्याख्यग्रन्थसम्पादने कृते काशीहिन्दूविश्वविद्यालयेन सः "पी-एच० डी०" इत्युपाधिनाऽलङ्कृतः। अनेन गूढजटिलदर्शनस्य मीमांसायाः सरलहिन्दीभाषायां भाष्यम्प्रणीतम्। भाष्यमिदम् अध्यायत्रयपर्यन्तम् सन् १९५७ ईशवीये वर्षे प्रकाशितम्।

व्याकरणशास्त्रस्य वैयाकरणभूषणसार ग्रन्थस्य हिन्दीभाष्यं एतेषां बहुलोकोपकारकं वर्तते।

एतेषां शिष्येषु पं० रामनाथवेदालकार प्रो० डा० श्रीपतिरामत्रिपाठी पं० रामरङ्गशर्मा, आचार्य नरेन्द्रदेव पाण्डेय प्रभृतयः सन्ति।

अस्यपुत्रः डा० भुवनेशकुमारशर्मोपाध्यायमहोदयः सम्प्रति राष्ट्रियसंस्कृत-संस्थानस्य पुरीस्थ श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठे शिक्षाशास्त्रविभागे वरिष्ठ व्याख्यातृपदेकार्यरतोऽस्ति।

## पं० ब्रह्मदत्तद्विवेदी विद्यावाचस्पतिः
## ( सन् १९०६ ई० तः १९८७ ई० यावत् )

लघुशब्देन्दुशेखरग्रन्थस्य "राधिका" नाम्न्याः संस्कृतटीकायाः, हिन्दीटीकायाश्च प्रणेता विद्यावाचस्पतिः पण्डितब्रह्मदत्तद्विवेदीमहोदयः उत्तरप्रदेशस्य 'प्रयाग' मण्डले "करछना" खण्डे "पण्डितपुरा" भिधाने ग्रामे सारस्वतवैभवमूले वंशे १९६३ तमे वैक्रमाब्दे ( १९०६ तमे खीष्टाब्दे ईशवीये ) वर्षे जनिं लेभे। अस्य पितामहामहोपाध्यायपण्डितहरिहरकृपालुद्विवेदी संस्कृतस्य पाण्डित्यपरम्परायामनुपम आसीत्। अयं स्वपितुश्चरणयोः काणादं पाणिनीयञ्च शास्त्रम् साहित्यञ्च यथाविध्यध्यगीष्ट। सर्वप्रथमं सन् १९२७ ईशवीये अनेन व्याकरणाचार्यं परीक्षा समुत्तीर्णा। ततः सन् १९३० ईशवीये न्याये, सन् १९३२ ईशवीये साहित्ये च आचार्यं परीक्षामुत्तीर्य सर्वत्र प्रथमश्रेण्यां प्रथमं स्थानं लब्धम्।

अयं खलु सन् १९३२ ईशवीयतः पाटलिपुत्रनगर्यां बिहारप्रान्ते मुरारकासंस्कृतमहाविद्यालये 'प्राचार्य' पदमलञ्चकार। सन् १९५५ ईशवीये वर्षे पाटलिपुत्रे स्थापिते महाविद्यालये अयं सादरमामन्त्रितो नियोजितश्च। अस्मिन्नेव वर्षे अयं श्रीमता महाराजाधिराजेन मिथिलायां विशिष्टसम्मानेन सम्मानितः। सन् १९७६ ईशवीये कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयेनाऽयं "विद्यावाचस्पति" इत्युपाधिना सम्मानितः। सन् १९७८ ईशवीये अयं वाराणस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य अतिथिप्राध्यापक आसीत्। अयं सन् १९८१ ईशवीये सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य दीक्षान्तसमारोहे "शब्दाद्वैतबिन्दु" विषये व्याख्यानं दत्तवान् सन् १९८२ ईशवीये अयं इलाहाबाद नगरस्थ गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठे शास्त्रचूडामणि योजनायामध्यापयामास। अस्मिन्नेव वर्षेऽयं उत्तरप्रदेशसंस्कृतअकादम्या संस्कृते विशिष्ट योगदानाय सम्मानितः। सन् १९८६ ईशवीये महामहिम राष्ट्रपतिमहोदयैरयं सम्मानितः।

अनेन प्रणीताः ग्रन्थास्त्विमे—मधुसूदनीगीताभाष्यस्य हिन्दी व्याख्या, वैयाकरणभूषणसारस्य संस्कृतहिन्दीभाष्यम् १९८५ ईशवीये वर्षे प्रकाशिते। लघुशब्देन्दुशेखरस्य 'राधिका' नाम्नी संस्कृत हिन्दी टीका सन् १९८८ ईशवीये प्रकाशिता।

सन् १९८७ ईशवीये अगस्तमासे पञ्चदशदिनाङ्के अयं शिवसायुज्यमवाप।

## पं० युधिष्ठिरमीमांसकः
### ( १९०९ ई० तः १९९४ ई० )

महामहोपाध्यायपण्डितचिन्नस्वामीशास्त्रिणः शिष्यः पण्डितयुधिष्ठिरमीमांसक-महोदयः संस्कृतभाषायाः गभीरो विद्वानासीत्। अयं खलु व्याकरणशास्त्रम् मीमांसाशास्त्रञ्च गुरुमुखाद् विधिवदधीत्य तत्र पाण्डित्यं लब्धवान्। मीमांसाशास्त्रस्य प्रकाण्डपण्डितत्वादयं "मीमांसक" इत्युपाधिं धारयति।

पण्डित युधिष्ठिरमीमांसकमहोदयस्य पूर्वपुरुषः राजस्थानराज्यस्य पुष्करक्षेत्रा-न्तर्गते अजमेरमण्डले वास्तव्यः भारद्वाजगोत्रीयः यजुर्वेदीयमाध्यन्दिनशाखाया अध्येता सारस्वतब्राह्मण आसीत्। अस्य पितामहस्य नाम रघुनाथः, पितुर्नाम पण्डितगौरीलाल आचार्यः, मातुश्च नाम यमुनाबाई आसीत्।

श्रीमीमांसकस्य पिता तात्कालिक बीकानेरराज्ये किशनराज्ये चाऽध्यापनं चकार, किन्तु सन् १९०८ ईशवीये सः जीविकार्थं इन्दौर राज्ये गतवान्। अतः श्रीमीमांसकमहोदयः इन्दौरराज्यस्य 'नीमाड' मण्डलस्य 'मुहम्मदपुर' इत्याख्ये ग्रामे सं० १९६६ वैक्रमाब्दे भाद्रपदशुक्लनवम्यां तदनुसारं सन् १९०९ ईशवीये सितम्बरमासे द्वाविंशतितारिकायां जनिं लेभे।

श्रीपण्डितयुधिष्ठिरमीमांसकस्य पिता आर्यसमाजमतानुयायी आसीत्। अतः सः स्वपुत्रं स्वामिदयानन्दप्रदर्शितशिक्षणपद्धत्या शिक्षितुं निश्चयञ्चकार। तदनु-सारं सः स्वपुत्रं गुरुकुलकाङ्गडीहरिद्वारे, बम्बईस्थे गुरुकुले च प्रेषयितुमियेष, किन्तु तत्र प्रवेशो न लब्धः। ततः श्रीमीमांसकः स्वामिसर्वदानन्दस्थापिते अलीगढनगरस्थे साधुआश्रमे गत्वा स्वाध्यायनिरतो बभूव। तत्र सः पण्डितब्रह्म-दत्तजिज्ञासु-पण्डितबुद्धदेवप्रभृतिभ्यो विद्वद्भ्योऽध्ययनं चकार। किञ्चिद्वर्षानन्तरं सः स्वगुरुणा पण्डितब्रह्मदत्तजिज्ञासुमहोदयेन सह काशीं सम्प्राप्तः। अत्र श्री-मीमांसकः महामहोपाध्यायचिन्नस्वामीशास्त्रिणः तच्छिष्याच्च पं० पट्टाभिराम-शास्त्रिमहोदयाच्च मीमांसाशास्त्रम्, पण्डितढुण्ढिराजशास्त्रिणः न्यायवैशेषिकम्, पण्डितभगवत्प्रसादमिश्राच्च कर्मकाण्डम्, विशेषतः कात्यायनश्रौतसूत्रम् प्राचीन-प्रणाल्यनुसारं गुरुमुखाद् यथाविधि अध्यगीष्ट। सन् १९२१ ई० तः १९३५ ई०

यावत् सः पण्डितब्रह्मदत्तजिज्ञासुमहोदयस्य शिष्यत्वं स्वीचकार। अतः श्रीमीमांसकः वेदानामपि सम्यगनुशीलनपुरस्सरं व्याकरणमीमांसा-कर्मकाण्डवेदादिविषयेषु गभीरं पाण्डित्यं लब्धवान्।

श्रीमीमांसकोऽनेकानि शास्त्राण्यध्यगीष्ट, किन्तु तेन परीक्षाविषयिणी काचिदप्युपाधिर्नैवाऽवाप्ता। अतो जीविकार्थं सः यत्र तत्र भ्रमति स्म। सः १९३६ ई० तः १९४२ ई० यावत् लाहौरस्थे विरजानन्दसाङ्गवेदविद्यालये, सन् १९४३ ई० तः १९४७ ई० यावद् अजमेरनगरे, सन् १९५० ई० तः १९५५ ई० यावच्च वाराणस्यां मोतीझीले पाणिनीयमहाविद्यालये व्याकरणमध्यापयामास। ततः सः स्वतन्त्ररूपेण दिल्ल्यां अजमेरनगरे च अध्यापयति स्म। सन् १९६७ ईशवीये सः उत्कलप्रदेशे भुवनेश्वरनगरे सान्ध्यसंस्कृतमहाविद्यालये अध्यक्षपदमलञ्चकार। सन् १९६७ ई० तः अन्तं यावत् हरयाणाप्रदेशे बहालगढे सोनीपतस्थाने पाणिनीय-विद्यालये अध्यापनरत आसीत्। मईमासे सन् १९९४ ईशवीये श्रीमीमांसक-महोदयो दिवङ्गतः।

पण्डितयुधिष्ठिरमीमांसकमहोदयस्य प्रवृत्तिः छात्रावस्थात एव शोधकार्योन्मुखी दृश्यते। फलतः श्रीमीमांसकमहोदयेन संस्कृतभाषायामेकादश, हिन्दीभाषायाञ्च षोडशमिताः शोधपूर्णाः निबन्धाः प्रणीताः। शिक्षा निरुक्तव्याकरणवेदादिविषय-सम्बद्धाः विंशतिमिताः दुर्लभाः महत्त्वपूर्णाश्च ग्रन्थाः सम्पादिताः। अयं प्राचीनप्रौढशास्त्राणां ग्रन्थानां हिन्दीभाषायामनुवादेन सह व्याख्यामप्यकरोत्। तत्र महाभाष्यस्य प्रथमद्वितीयाध्याययोः, मीमांसासूत्रेषु शाबरभाष्यस्य च हिन्दी व्याख्या प्रकाशिता।

श्रीमीमांसकमहोदयः अनेकान् मौलिकान् शोधपरकांश्च ग्रन्थान् प्रणिनाय। तथा हि—

(१) संस्कृत व्याकरण शास्त्र का इतिहास ( त्रिषु भागेषु )

(२) वैदिकसिद्धान्तमीमांसा ( द्वयोः भागयोः )

(३) वैदिक स्वरमीमांसा।

(४) वैदिक छन्दोमीमांसा।

(५) श्रौतयज्ञमीमांसा।

(६) काशकृत्स्नधातुव्याख्यानम् ।

(७) माध्यन्दिनपदपाठः

(८) महाभाष्यस्य हिन्दी व्याख्या ( त्रिषु भागेषु )

(९) ऋग्वेदभाष्यम् ( स्वामिदयानन्द कृतम् )—सम्पादनम्

(१०) ऋग्वेद की ऋक्संख्या ।

(११) निरुक्तसमुच्चयः ।

(१२) मीमांसा शाबर भाष्य ( हिन्दी अनुवाद तथा व्याख्या सहित )

(१३) उणादि कोष ( स्वामीदयानन्द कृत ) सम्पादन

(१४) जिज्ञासु रचना मञ्जरी ( द्वयोः भागयोः ) ।

श्रीपण्डितयुधिष्ठिरमीमांसकमहोदयो गभीरवैदुष्यार्थमनेकानि सम्मानानि, उपाधीश्च लेभे । भारतसर्वकारेणाऽयं सन् १९७७ ईशवीये राष्ट्रपतिपुरस्कारेण सम्मानितः । राजस्थानराज्यस्य संस्कृतशिक्षाविभागद्वारा अयं वेदसंस्कृतव्याकरणविषयकशोधकार्यार्थं सन् १९६३ ईशवीये त्रिसहस्ररुप्यकाणामनुदानं लब्धवान् । अनेकधाऽस्य ग्रन्थेषु उत्तरप्रदेशसर्वकारोऽपि श्रीमीमांसकमहोदयं पुरस्कृतवान् । एवम् श्रीमीमांसकमहोदयः स्वीयवैदुष्यार्थमनेकाभिः संस्थाभिः सर्वकारैश्च सम्मानितो विधीयत एव ।

## पण्डितविजयमित्रशास्त्री गौडः

### ( सन् १९१८ ई० )

ग्रन्थकृत्पिता आचार्य श्रीविजयमित्रशास्त्री गौडः साङ्गोपाङ्गवेदवित् प्राच्यनव्योभयव्याकरणविशेषज्ञः ब्रह्मलीनात्मनां श्रीकान्धजीसहायगौडअग्निहोतृमहाभागानां, ब्रह्मलीनमातृचरणानां श्रीमतीगोदादेवीनां च सुपुत्रोऽयम् उत्तरप्रदेशे-''मऊ'' मण्डलान्तर्गते ''घोसी'' इत्याख्ये पत्तने चैत्रशुक्लनवम्यां ( रामनवम्याम् ) शुक्रवासरे सन् १९१८ ईशवीये वर्षे जनिं लेभे ।

अष्टवार्षिकोऽयं महाभागो ब्रह्मलीनश्रीमत्स्वामित्यागानन्दसरस्वतीमहाभागैः संस्थापिते अयोध्यानिःशुल्कगुरुकुलमहाविद्यालये गुरोरन्तिकेव्रतचर्ययावसन् चतुर्दश-

वर्षाणि साङ्गोपाङ्गां वेदविद्यामध्यगीष्ट। तथा चाऽयं सन् १९५० ईशवीये वर्षे तैरेव संस्थापककुलपतिमहाभागैः "विद्यावारिधि" समाख्यया सर्वोच्चोपाधिना समलङ्कृतः। सन् १९६२ ईशवीये सम्पूर्णानन्दसंस्कृतविश्वविद्यालयात् प्राचीन-व्याकरणाचार्योपाधिमपि सादरमुपलब्धवान्।

कर्मक्षेत्रेऽवतीर्णोऽयं सन् १९४२ ईशवीयतः १९४३ ई० यावत् बिजनौरनगरे निगमागमसंस्कृतविद्यालये 'आचार्य' पदे, १९४३ ईशवीयतः १९४४ ईशवीयं यावत् झज्झरगुरुकुले, १९४४ ई० तः १९४७ ई० जुलाईपर्यन्तं लाहौरनगरे दयानन्दब्राह्ममहाविद्यालये चोभयत्र 'उपाचार्य' पदे कार्यं कुर्वाणः सांगवेद-मध्यापयामास।

देशविभाजनानन्तरमयं पञ्जाबप्रदेशात् काशीमागतः। अत्र स्वातन्त्र्यसेनानि-पण्डितकमलापतित्रिपाठिमहाभागैस्सह "संसार" इत्याख्ये दैनिकसमाचारपत्रे किञ्चित् कालं यावत् सहायकसम्पादकत्वेन कार्यमकरोत्। एकवर्षानन्तरं नागरीप्रचारिणी-सभायां कोशविभागे सहायकसम्पादकपदे, ततश्च तत्रैव सन् १९६४ ईशवीयपर्यन्तं आर्यभाषापुस्तकालये ग्रन्थाध्यक्ष पदे कार्यमकार्षीत्। सन् १९६५ ईशवीयतः सन् १९७८ ई० यावत् सः वाराणसीस्थसम्पूर्णानन्द संस्कृतविश्वविद्यालये सरस्वती-भवनग्रन्थालये प्राचीनपाण्डुलिपीनामनुसन्धाने सम्पादने च संलग्नः आसीत्। ततश्च काशीहिन्दूविश्वविद्यालये प्राचीनभारतीयेतिहाससंस्कृतविभागे सन् १९७८ ई० तः १९८१ ई० यावत् "प्राचीनभारते कृषिः" इत्याख्यप्रयोजनायां वरिष्ठानु-सन्धानसहायकत्वेन कार्यं व्यधात्।

ततोऽयं श्रीशास्त्रिमहाभाग लेखनकार्ये प्रवृत्तः। अनेन सप्तदश ग्रन्थाः प्रणीताः, प्रकाशिताश्च। तत्र व्याकरणविषये षट्, साहित्यविषये चैकादश। तथाहि—

**व्याकरणग्रन्थाः**—(१) महाभाष्यनवाह्निकालोचनम्, (२--३) वैयाकरण-सिद्धान्तकौमुदीचन्द्रिका (भागद्वयम्) (४) वैयाकरणमध्यसिद्धान्तकौमुदीचन्द्रिका (५) वैयाकरणलघुसिद्धान्तकौमुदीचन्द्रिका (६) वैयाकरणलघुमञ्जूषारहस्यम्।

**साहित्यग्रन्थाः**—(१) औचित्यविचारचर्चारहस्यम् (२) काव्यमीमांसा-रहस्यम् (३) वक्रोक्तिजीवितरहस्यम् (४) दशरूपकरहस्यम् (५) दशरूपकतत्त्व-

दर्शनरहस्यम् (६-९) भट्टिकाव्यरहस्यम् (भागचतुष्टयम्) (१०) पाश्चात्यकाव्यशास्त्रविवेचनम् (११) ध्वनिविरुद्धाचार्यसिद्धान्तविमर्शः ।

तथा श्रीशास्त्रिमहाभागेन वैदिकविज्ञान-भारतीयसंस्कृति-भारतीयकलाविज्ञानाऽऽयुर्वेदप्रभृतिविषयेषु परश्शताः लेखाः लिखिताः प्रकाशिताश्च । एतद्विषयेषु बहुशो व्याख्यानान्यपि दत्तानि । १९७३ ईशवीये भारतसर्वकारद्वारा दिल्लीनगरे समायोजिते विश्वसंस्कृतसम्मेलने "वैदिक सूर्यविज्ञानम्" इति निबन्धं प्रास्तौत् । तथा च १९७४ ईशवीये कुरुक्षेत्रविश्वविद्यालये "वैदिकसंस्कृति तथा मानव समाज" इति विषये व्याख्यानमदात् । १९७० ईशवीये उत्तरप्रदेशीयकृषिविभागद्वारा लखनऊनगरस्थे कृषिभवने समायोजितायां गोष्ठयां "भारतवर्षे द्राक्षाकृषिः" इति विषये व्याख्यानमदात् ।

श्रीशास्त्रिमहाभागस्य सर्वतोमुखीना प्रतिभा सर्वशास्त्रेष्वकुण्ठिता वर्तते । किन्तु व्याकरणशास्त्रे गभीरमस्ति पाण्डित्यमस्य । प्रारम्भत एव पण्डितैः सहाऽस्य शास्त्रार्थकरणस्य प्रवृत्तिरस्ति । तस्यैकमुदाहरणमत्र प्रस्तूयते—

एकदा वाराणसीस्थ सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्राचीनव्याकरणदर्शनागमविभागाध्यक्षाणां पण्डितरामप्रसादत्रिपाठिमहोदयानामावासे तत्पुत्रतिलकोत्सवे समाहूताः प्रायः सर्वे पण्डिताः समागता आसन् । तत्र वरिष्ठः पं० कालीप्रसादमिश्रः पं० कुबेरनाथशुक्लः पं० बिजयमित्रशास्त्री चाऽन्येऽपि विद्वांस समुपस्थिता आसन् । लेखकोऽपि तत्र प्रत्यक्षद्रष्टा आसीत् ।

तत्र "ब्राह्मणोऽस्य मुखमासीत्" इति शुक्लयजुर्वेदमन्त्रमधिकृत्य शास्त्रार्थः प्रवृत्तः । तत्र श्रीशास्त्रिमहोदयेन प्रश्नः कृतः, "आसीदिति" लङ्प्रयोगोऽत्र दृश्यते । तत् किं ब्राह्मणः सम्प्रति ब्रह्मणो मुखं नास्ति किम् ? अस्य प्रश्नस्योत्तरं दातुं कोऽपि पण्डितः समर्थो नाऽभवत् । सर्वे पण्डिताः दिग्भ्रान्ताः सञ्जाताः । ततः पण्डितैः श्रीशास्त्रिमहोदयो निवेदित उत्तरदानाय । तदाऽनेनोक्तम्—"छन्दसि लुङ्लङ्लिटः" इति सूत्रम् । तदा पण्डितमूर्द्धन्यः पण्डितकालीप्रसादमिश्रः प्राह—"कुत्रेदं लिखितमस्ति" ? तदा श्रीशास्त्रिमहोदयेनोक्तम्—"पाणिनीयाष्टके तृतीयाध्यायस्य चतुर्थपादे" । तदा पं० कालीप्रसादमिश्रेणोक्तम्—नेदं सूत्रं

पाणिनीयम्। अन्ये पण्डिता अपि तमेव पक्षं समर्थयन्तः दिग्भ्रान्ता उच्चैर्जहसुः। तदा शास्त्रिमहोदयस्तत्रैव स्थित लघिष्ठं स्वीयं तृतीयपुत्रं (लेखकभ्रातरं) कृष्णचन्द्रमादिष्टवान् "अष्टाध्यायीमानय"। समागते पाणिनीयाष्टके श्रीशास्त्रि-महोदयस्तत्सूत्रं सर्वान् पण्डितान् दर्शयामास। तदा सर्वे पण्डिताः तूष्णीमास्थिताः अन्योन्यं पश्यन्तः स्वपराजयं सङ्केतयामासुः।

अन्यच्च महत्कार्यं श्रीशास्त्रिमहाभागेन कृतम्। विश्वविद्यालयस्वरूप प्राप्तेः पूर्वं राजकीयसंस्कृतमहाविद्यालये व्याकरणविभाग एवाऽऽसीत्। यदाऽयं विद्यालयः विश्वविद्यालयः संवृत्तः, तदाऽयं शास्त्रिमहाभाग एव सम्पूर्णानन्दसंस्कृतविश्व-विद्यालये तात्कालिककुलपति डॉ० आदित्यनाथझामहोदयं निवेद्य प्रथमं प्राचीन-व्याकरणविभाग स्थापनां कारितवान्। तत्र प्रथमविभागाध्यक्षः पण्डितदेवदत्त-शर्मोपाध्यायमहोदयो नियोजितः। वस्तुतः प्राचीनव्याकरणशास्त्र परम्परायाः विकासे स्थैर्ये च श्रीपण्डितविजयमित्रशास्त्रिमहाभागस्य महत्त्वपूर्णं योगदानं चिरस्मरणीयमेव भविष्यति।

## पण्डितरामप्रसादत्रिपाठी
### (सन् १९२० ई०)

लेखकस्य गुरुः पण्डितरामप्रसादत्रिपाठिमहाभागः पण्डितदेवनारायणत्रिपाठिनः शिष्यः तस्यान्तिमेषुदिनेषु व्याकरणशास्त्रे सुशिक्षितः प्रतिभाशाली विद्वानस्ति। उत्तरप्रदेशस्य जौनपुरमण्डले 'बेलछा' इत्याख्ये ग्रामे 'लालागंज' पत्रालये पण्डितरामस्वरूपत्रिपाठिनो गृहे महाभागोऽयं सन् १९२० ईशवीये दिसम्बर-मासस्य द्वादशदिनांके जनि लेभे। व्याकरणशास्त्रस्य प्रक्रियापरिष्कारयोरुभयो-रंशयोरस्य वैदुष्यं प्रशंसनीयमस्ति। अनेकेषु शास्त्रार्थेषु विजयप्राप्तेगौरवमस्या-ऽस्ति। अयं कतिचिद् वर्षाणि यावत् काशीहिन्दूविश्वविद्यालयान्तर्गतसंस्कृत-महाविद्यालये व्याकरणप्राध्यापक आसीत्। ततः (वाराणसेय) सम्पूर्णानन्द-संस्कृतविश्वविद्यालये सन् १९६५ ईशवीये प्राचीनव्याकरणदर्शनागमविभागाध्यक्ष-पदे नियुक्तः सन् अयं प्रौढाध्यापनसुव्यवस्थितग्रन्थलेखनमुखेन विशिष्टा कीर्ति-र्जिता। सेवानिवृत्त्यनन्तरमयमस्मिन्नेव विश्वविद्यालये सम्मानितप्राध्यापक

आसीत्। सः सन् १९८७ ईशवीये सागरविश्वविद्यालये "अतिथि-आचार्यः" ( विजिटिंग प्रोफेसर ) आसीत्। इतः पूर्वमयं उत्तरप्रदेशसंस्कृत अकादम्या उपाध्यक्ष आसीत्। सन् १९८३ ईशवीये अयं राष्ट्रपतिमहाभागैः सम्मानितः पुरस्कृतश्च। सन् १९८९ ईशवीये उत्तरप्रदेशसंस्कृतअकादमीतोऽनेन "विश्वभारती" इत्याख्यः पुरस्कारो लब्धः। सम्प्रत्ययं सं० सं० वि० विद्यालये सम्मानित-प्राध्यापकोऽस्ति।

यथाऽयं प्रकृष्टो विद्वान् तथैवाऽस्ति सफलोऽध्यापकोऽपि। अयं खलु जौनपुर-मण्डलस्य सरयूपारीणब्राह्मणकुले समुत्पन्नः सच्चरित्रः साधुः निश्छलव्यवहार-सम्पन्नश्च विद्वानस्ति। अस्याऽनेके निबन्धाः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य "सारस्वती सुषमा" इत्याख्यशोधपत्रिकायां प्रकाशिताः भवन्ति। अस्य मौलिकः गवेषणामूलकः शोधप्रबन्धोऽस्ति—"पाणिनीयव्याकरणे प्रमाणसमीक्षा"; यस्मिन् अयं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयात् श्रेष्ठां 'वाचस्पति' इत्युपाधिमवाप्तवान्। ग्रन्थेऽस्मिन् अनेन प्रमेय प्रमाणोभयोरपि क्रमशो विवेचनं विहितम्। महर्षेः पतञ्जलेरारभ्य नागेशं यावत् सर्वेषामाचार्याणां सिद्धान्तान् एकत्र सुसम्बद्धान् व्यवस्थितांश्च कर्तुं श्लाघनीयः प्रयत्नोऽत्र ग्रन्थे विहितः। अध्ययनं तुलनात्मकं व्यापकञ्चाऽस्ति। अस्याऽन्ये ग्रन्था इमे—

१—सिद्धान्तचिन्तामणिः ( खण्डद्वयम्—नियमसूत्रस्वरूपालोकः, अपवाद-सूत्रस्वरूपालोकश्च )

२—विविधनिबन्धसंग्रहः

३—वैयाकरणसिद्धान्तलघुमञ्जूषा-तात्पर्यनिरूपणान्ता कलाकुञ्जिकाटीकया सहिता हिन्दी टीका

४—शिक्षा संग्रहः—सम्पादनम्

५—रुद्रयामलम्—सम्पादनम्

६—तन्त्रसंग्रहः—सम्पादनम्

७—गौरवाभिसन्धिप्रकाशः ( सन् १९५३ )

८—वैयाकरणभूषणसारः—'सुबोधिनी' टीका।

अस्याऽनेके शिष्या अभवन्, तत्र डॉ रामयत्नशुक्ल-पं० देवस्वरूपमिश्र-डॉ० रामकिशोरशुक्ल-हिन्दकेसरी आर्य प्रभृतयः प्रमुखाः सन्ति।

## पण्डितप्रभाकरमिश्रः

(सन् १९३६)

पण्डितप्रभाकरमिश्रः पण्डितरामप्रसादत्रिपाठिमहाभागस्य शिष्यः। अस्य पितुर्नाम श्रीहरिप्रसादमिश्र आसीत्। उत्तरप्रदेशस्य जौनपुर मण्डलान्तर्गतशाहपुर-पत्रालयस्य मुकुन्दीपुर इति ग्रामे सन् १९३६ ईशवीये मई मासे पञ्चदशदिनाङ्के पण्डितप्रभाकरमिश्रमहोदयो जनि लेभे। अयं खलु विद्वन्मूर्धन्यस्य न्यायवेदान्त-व्याकरणावतारस्य काश्यां सुप्रसिद्धस्य श्रीशुभकरणमिश्रस्य पौत्रः।

अनेन पण्डितरामप्रसादत्रिपाठि-पं० रामकरणपाण्डेय-पं० रामराजद्विवेद-प्रभृतीनां त्रयाणां विदुषां चरणयोरध्ययनं विहितम्। सन् १९५८ ईशवीये अनेन वाराणसीस्थ सम्पूर्णानन्दसंस्कृतविश्वविद्यालयाद् व्याकरणाचार्यपरीक्षोत्तीर्णा। ततोऽनेन एम० ए० परीक्षाऽप्युत्तीर्णा। अयं सम्पूर्णानन्दसंस्कृतविश्वविद्यालये "व्याकरणशास्त्रे प्रमेयसमीक्षा" इति शोधप्रबन्धं प्रस्तूय सन् १९७७ ईशवीये "विद्यावारिधि" इत्युपाधिमवाप्तवान्।

अयं सन् १९५५ ई० तः १९६८ ई० यावत् वाराणसीस्थ रामानुजसंस्कृत-महाविद्यालये व्याकरणविभागाध्यक्ष आसीत्। तथा च सन् १९७९ ईशवीयतो-ऽद्यावधि वाराणसीस्थ सन्यासीसंस्कृतमहाविद्यालये प्रधानाचार्य पदमलङ्करोति।

अनेन वैयाकरणभूषणसार-सिद्धान्तकौमुदी-लघुसिद्धान्तकौमुदी-मध्यसिद्धान्त-कौमुदी ग्रन्थानां सुविशदाः 'प्राभाकरी' इत्याख्याः संस्कृतटीकाः हिन्दीटीकाश्च प्रणीताः।

## पण्डितभागीरथप्रसादत्रिपाठी 'वागीशशास्त्री'

(सन् १९३४)

प्राच्यप्रतीच्योभयविधानुसन्धानविधामर्मज्ञः नव्यमार्गदर्शको विद्वान् पण्डित-भागीरथप्रसादत्रिपाठी "वागीशःशास्त्री" कान्यकुब्जब्राह्मणपरिवारे मध्यप्रदेशस्य

'सागर' मण्डलान्तर्गते 'विलइया' इत्याख्ये ग्रामे संवत् १९९१ वैक्रमाब्दे (सन् १९३४ ईशवीये) वर्षे आषाढशुक्लत्रयोदश्यां जनिं लेभे। अस्य पिता श्री यमुनाप्रसादतिवारी कान्यकुब्जवंशावतंस तन्त्रज्योतिषायुर्वेदशास्त्राणां सुप्रसिद्धो धुरन्धरो विद्वानासीत्। अस्य माता पार्वतीदेवी अतीवधर्मपरायणा महिला आसीत्। अयं खलु स्वीया संस्कृतस्य प्रारम्भिकीं शिक्षां गृहे सागरनगरे च सम्पाद्य वृन्दावने माध्यमिकीं शिक्षामवाप्तवान्। ततोऽयं पञ्च वर्षाणि यावद् आचार्यसीतारामशास्त्रि-शर्ममहाभागात् न्यायव्याकरणसाहित्यश्रीमद्भागवतपुराणवेदान्तशास्त्राण्यधिजगे, योगसाधनाभ्यासं च सम्पादयामास। ततो वाराणस्यामनेन पण्डितशुकदेवझा महाभागात् प्राच्यनव्यव्याकरणशास्त्रस्य सर्वेऽपि ग्रन्थाः सम्यगधीताः, वेददर्शना-ऽऽयुर्वेदज्योतिषपुराणधर्मशास्त्रसाहित्यसङ्गीतादीनि विविधानि शास्त्राणि चाऽनु-शीलितानि। पण्डितक्षेत्रेशचन्द्रचट्टोपाध्यायादयं नवीन पारम्परिकोभयविधशास्त्री-यानुसन्धानशिक्षणमवाप। अयं खलु बहुभाषाविद् विद्वानस्ति।

काश्यामयं लालेश्वर पाठशाला-भारतीयसाहित्यमहाविद्यालय-टीकमणि-संस्कृतकालेजेषु पञ्च वर्षाणि व्याकरणशास्त्रमध्याप्य वाराणसीस्थ संस्कृत-विश्वविद्यालये सीनियररिसर्चफेलो-प्रकाशनाधिकारी-अनुसन्धानसहायकपदेषु च कार्यं कुर्वाणः सन् १९७० ईशवीये विश्वविद्यालयीय गवेषणालये निदेशक पदे नियुक्तः। तस्मादेव कालादयं अनुसन्धानप्रधानायाः त्रैमासिक्याः "सारस्वती सुषमा" इत्याख्यायाः संस्कृतपत्रिकायाः सम्पादको विराजते। श्रीवागीशशास्त्री मूलतो वैयाकरणः। सः पाणिनीयधातूनां स्वरूपम्, अर्थविकासः लोकप्रसारः इत्येतेषु विषयेषु गभीरश्चिन्तको वैयाकरणो विद्वानस्ति।

श्रीशास्त्रिणः 'धात्वर्थविज्ञानम्' 'पाणिनीयधातुपाठसमीक्षा' इति ग्रन्थद्वय-मेतद्विषयविवेचनेनाति प्रसिद्धमस्ति। अद्यप्रभृति शताधिकवर्षेभ्यः पूर्वं अमेरिका देशस्य प्रथमः प्रौढसंस्कृतज्ञः डॉ० डी० ह्विटनीमहोदयोऽपि पाणिनीयव्याकरण-तन्त्राणि विवेचयामास। किन्तु धातूनां विषये तस्य मतमासीत् यदेतावतीनां धातूनां कल्पना व्यर्थमस्ति। 'विएना' इति स्थानस्य जर्मन संस्कृतज्ञः डॉ० ब्यूलरमहोदयः तथ्यमिदं प्रत्याख्यातवान् प्रादर्शयच्च यत् आपाततः अप्रचलिताना-

मनेकासां धातूनां प्रयोगा पालिभाषायां प्राकृतभाषायाञ्चोपलभ्यन्ते । श्रीवागीशशास्त्री कार्यमिदमग्रेसारयन् प्रदर्शितवान् यत् भारतस्य प्रादेशिकभाषासु धातूनां प्रचलनेन पाणिनीयधातूनां काल्पनिकत्वपक्षः स्वयमेव ध्वस्तो भवति । अस्यैको लघुकायो ग्रन्थोऽस्ति—"तद्धितान्ताः केचन शब्दाः" । कृतिरियं शब्दपर्यालोचनविषये समधिकं गौरवं भजते । अत्र केचन तद्धितान्ताः शब्दाः विवेचिताः, किन्तु तेषां विवेचनाशैली नितान्तं चमत्कारिणी तुलनात्मकभाषाविज्ञानाध्ययनमूलिका प्राचीननवीनोभयशास्त्रानुशीलनभूयिष्ठा शब्दार्थविवेचननिष्णातानां वैयाकरणानां दृष्टिमवश्यमावर्जयिष्यति । 'जिप्सीभाषा' इत्यस्मिन् ग्रन्थे अनेन प्रदर्शितम् यत् भारतवर्षादेव प्राचीनकाले भ्रमतां यूरोपीयदेशेषु गतानां जिप्सीलोकानां भाषायां संस्कृतमूलकाः शब्दाः विद्यमानाः सन्ति । न केवलं हिन्द्या, अपितु भोजपुरी भाषायाः शब्दा अपि तेषां गीतेषूपलभ्यन्ते । श्रीराहुलसांकृत्यायनमहोदयः रूसदेशे उषित्वा जिप्सीलोकानां गीतानि संकलितवान् तथा च हिन्दीसाहित्यसम्मेलन पत्रिकायां प्रकाशयामास । अस्याऽन्यत् प्रमुखं ग्रन्थद्वयमस्ति—अनुसन्धानपद्धतिः, संस्कृतवाङ्मयमन्थनञ्च । 'अनुसन्धानपद्धतिः' प्रथमतया संस्कृतभाषायां अनुसन्धानदिग्दर्शनं निर्देशनञ्च करोति । अत्र सूत्ररूपेणानुसन्धानविधीनामुल्लेखपूर्वकं मौलिकविचाराणामावाहनार्थं मनोवैज्ञानिका उपाया वर्णिताः । एतदतिरिच्याऽनेनाऽनेके ग्रन्थाः प्रणीताः प्रकाशिताश्च । अनेके ग्रन्थाश्च सम्पादिताः । अनेन संस्कृतशिक्षणस्य नूतनविधिराविष्कृता । अस्य विवरणम् तस्य हिन्दी भाषया लिखिते ग्रन्थे 'संस्कृत सीखने की वैज्ञानिक एवम् सरल विधि' इत्याख्ये द्रष्टुं शक्यते ।

श्रीवागीशशास्त्रीमहोदयः १९६४ ईशवीये 'पाणिनीयधातुपाठसमीक्षा' इति शोधप्रबन्धे 'विद्यावारिधि' ( पी० एच्० डी० ) इत्युपाधिमवाप । सन् १९६९ ईशवीये ऽयं 'वाचस्पति' इत्युपाधिना, सन् १९८२ ईशवीये च काशीस्थपण्डित परिषदा 'महामहोपाध्याय' इत्युपाधिना विभूषितः । उत्तरप्रदेश सर्वकारेणायं सन् १९६६ ईशवीये कालिदासपुरस्कारेण, १९६८ १९७२ वर्षयोः संस्कृतविविधपुरस्कारेण, सम्मानितः । उत्तरप्रदेशसंस्कृत अकादम्याऽयं १९८०, १९८४ वर्षयोः

संस्कृतसाहित्यपुरस्कारेण सम्मानितः। अस्य शिष्येषु श्रीभालचन्द्रपाण्डेय-प्राण-मोहनकुमार-डॉ० तेजपालशर्मा प्रभृतयः प्रमुखाः सन्ति।

## पण्डिता डॉ० प्रज्ञादेवी

(सन् १९३७)

वैदिकवाङ्मयस्य वैदिकसिद्धान्तानां मर्मज्ञा, संस्कृतव्याकरणशास्त्रस्य मूर्द्धन्य-विदुषी, ओजस्विनी, वाग्मिनी हृदयग्राहिणी लेखिका पण्डिता डॉ० प्रज्ञादेवी मध्यप्रदेशस्य 'सतना' नगरे 'कोलगवाँ' इत्याख्ये लघुग्रामे सन् १९३७ ईशवीये वर्षे मार्चमासस्य पञ्चमे दिनाङ्के जनिं लेभे। इयं स्वजीवनस्याऽष्टादशवर्षाणि स्त्रीयैः पञ्च स्वसृभिः एकेन भ्रात्रा च मध्यप्रदेशे एव यापयामास स्वीयमाध्यमिक-शिक्षां च प्रपूर्य गवर्नमेण्ट गर्ल्स विद्यालये अध्यापिकारूपेण नियोजिता। अस्याः पितुर्नाम श्रीकमलाप्रसाद आर्यः मातुश्च नाम श्रीमती हरदेवी आर्या आसीत्। स्वाध्यायशीलस्य संस्कृतविधानुरागिणश्च पितुराज्ञया सुश्रीप्रज्ञादेवी द्वादशवर्षाणि यावत् आर्षपाठविधे-पुनरुद्धारकात् पदवाक्यप्रमाणज्ञात् पण्डितब्रह्मदत्तजिज्ञासु-महाभागात् संस्कृतव्याकरणशास्त्रम्—निरुक्तमहाभाष्यान्तं मीमांसाशास्त्रम् च गाम्भीर्येणाऽध्यगीष्ट। ततः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयात् प्राचीनव्याकरणा-चार्यपरीक्षां समुत्तीर्य संस्कृते शोधप्रबन्धं च प्रपूर्य तत एव 'विद्यावारिधि' (पी० एच्० डी०) इत्युपाधिमवाप्तवान्।

आर्षपाठविधि समुद्धारेच्छया अनया आजन्मब्रह्मचर्यव्रतस्य प्रतिज्ञा विहिता। अस्याः प्रथमा कृतिरस्ति—आर्यजगतः कृते पाणिनिकन्याविद्यालयः। पौराणिकानां नगर्यां काश्यां कन्यासु आर्षपाठविधि प्रसारार्थमयं विद्यालयः संस्थापितः। अद्याऽयं विद्यालयः कन्याः विशुद्धआर्षपाठविधिना व्याकरणम् वेद-वेदाङ्ग गृहकलादीन् विषयानध्यापयन्ति तथा च सुश्रीप्रज्ञादेव्याः आचार्यत्वे निरन्तरं उन्नतिपथ-मारोहति।

पण्डितब्रह्मदत्तजिज्ञासुमहोदयस्य 'प्रथमावृत्ति' ग्रन्थप्रणयने प्रकाशने तथा च तस्य मरणानन्तरं प्रथमावृत्तिग्रन्थस्य पूर्तौ च प्रज्ञादेव्याः महद् योगदानमस्ति।

प्रथमावृत्तिः सारल्येन सुगमतया अष्टाध्यायीं बोधयति । ततः सन् १९७१ ईशवीये इयं अथर्वेदस्य चत्वारि काण्डानि ७७ ईशवीये च गोपथब्राह्मणस्य दुर्लभं भाष्यं वैदुष्यपूर्णतया सम्पादयामास । अस्याः अनेके ग्रन्थाः प्रकाशिताः अनेके निबन्धा प्रकाशिता भवन्त्येव ।

वस्तुतः काश्यां प्राचीनव्याकरणपरम्परायां सुश्रीप्रज्ञादेवी सदैव चिरस्मरणीया अभिनन्दनीया वन्दनीया च स्थास्यति ।

❀